# शुद्धिकौमुदी

(परिष्कृतं परिवर्धितं संस्करणम्)

जनार्दन हेगडे



# अनुक्रमणिका

# प्रास्ताविकम्

## (द्वितीयमुद्रणस्य)

यस्तु प्रयुङ्क्ते कुशलो विशेषो
शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र
वाग्योगविद् दुष्यति चापशब्दैः ।।

- का.सू. - २.४ - (व्याख्याने)

गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ।।

- दण्डी

शुद्धिकौमुद्याः परिवर्धिता परिष्कृता आवृत्तिः एषा । प्रथममुद्रणस्य अनन्तरम् अवधानपथम् आगतान् परिष्कारांशान्, योजनीयत्वेन स्मृतान् अंशान् च समायोज्य द्वितीयावृत्तिः एषा सज्जीकृता अस्ति ।

एतस्य पुस्तकस्य उपयोगात् विशेषलाभं प्राप्तवतः बहवः साधुवादं प्रकटितवन्तः सन्ति । विश्वविद्यालयेन एकेन पाठ्यपुस्तकत्वेन अपि (शोधच्छात्राणां कृते) पुस्तकमिदम् उपयुज्यमानम् अस्ति इति श्रूयते । कश्चित् शोधार्थी एतत् पुस्तकम् अवलम्ब्य विद्यावरिध्युपाधिनिमित्तं गवेषणकार्यम् आरब्धवान् अस्ति इत्यपि श्रूयते । एतादृशाः एव अंशाः प्रमाणयन्ति यत् पुस्तकमिदं भाषाशुद्धिम् इच्छतां विशेषलाभाय जायमानम् इति ।

उपयोक्तारः एव एतस्य द्वितीयमुद्रणस्य कारणीभूताः । अतः ते भवन्ति विशेषतः धन्यवादार्हाः । मुद्रकाय, अन्येभ्यः सहकारिबन्धुभ्यः चापि कृतज्ञताः समर्प्यन्ते सहार्दम् ।

*सर्वधारि सं।। ज्येष्ठशुक्लप्रतिपत्*
*४.६.२००८*

- कृतिकारः

# प्रास्ताविकं किञ्चित्..

## (प्रथममुद्रणस्य)

वागेवार्थं पश्यति वाग्ब्रवीति
वागेवार्थं निहितं सन्तनोति ।
वाच्येव विश्वं बहुरूपं निबद्धं
तदेतदेकं प्रविभज्योपभुङ्क्ते ।।

– वाक्यपदीये (१.११८) उदाहृतम्

शास्त्रेषु नैपुणी येषां तेऽपि मुह्यन्ति कुत्रचित् ।
किं पुनः शिक्षमाणानां वाक्प्रपञ्चो विलक्षणः ।
किं शुद्धं किमशुद्धं स्यादिति कष्टं विवेचनम् ।
तस्मादेषालम्बयष्टिः प्रकृता शुद्धिकौमुदी ।।
(प्रकृताः = कर्तुम् आरब्धा । आदिकर्मणि क्तः)

वयं सर्वे भाषया व्यवहरामः । भावान् अभिव्यञ्जयितुम् उत्कृष्टं साधनम् अस्ति भाषा । अतः एव 'संस्कृतेन वदामि' इति वाक्यं वदामः वयम् । अत्र 'संस्कृतेन' इति करणे तृतीया ।

किं भावाभिव्यञ्जनमात्रम् एव भाषायाः परमं प्रयोजनम् ? यदि भावाभिव्यक्तिः एव परमं प्रयोजनं तर्हि प्रयुज्यमाना भाषा शुद्धा एव भवेत् इति कथनम् अनुचितं स्यात् । यतः अशुद्धैः पदैः अपशब्दैः चापि वक्तुः तात्पर्यम् अवगम्यते एव ।

कश्चन भक्तः वदति –

*अज्ञो वदति विष्णाय ज्ञानी वदति विष्णवे ।*
*द्वयोरपि फलं तुल्यं भावग्राही जनार्दनः ।।* इति ।

भगवान् विष्णुः यथा भावग्राही तथैव जनाः अपि भावग्राहिणः एव । तस्मात् अपशब्दं श्रुत्वापि भावं तु गृह्णन्ति एव ते । एवं तर्हि शुद्धतायाः का आवश्यकता ? साधुशब्दाः एव प्रयोक्तव्याः इति नैर्भर्येण किम् ?

'अहं स्वागतं कारयामास' इति केनचित् सभायाम् उक्तं वाक्यं श्रुत्वा वयं

वर्तमानकालस्य बोधं तु प्राप्नुमः एव । यदि भावाभिव्यक्तिमात्रं भाषायाः लक्ष्यं तर्हि एतादृशानि वाक्यानि अपि अनुमन्तव्यानि भवेयुः, यतः एतानि अपि बोधं तु कारयन्ति एव । एवं तर्हि व्यवहारे शुद्धतायाः किं पात्रम् ?

भाषाशुद्धिः किमर्थं वा चिन्तनीया ?

एतस्य उत्तरप्राप्त्यर्थं बहु चिन्तनीयं नास्ति । भाषाशुद्धिः यदि परिरक्षिता न भवेत् तर्हि किं केनचित् उक्तम् अन्येन अवगम्येत ? 'गोणीम् आनय' इत्युक्ते कश्चित् शणसूत्रनिर्मितं बृहदाकारकं स्यूतविशेषम् आनयेत् । वाक्यप्रयोक्त्रा तु 'गो'पदार्थे गोणीशब्दः प्रयुक्तः आसीत् ! गोता-गोपोतलिकादयः केनचित् प्रयुक्ताः अपरेण अनवगताः भवेयुः । एवम् अपशब्दबाहुल्ये साधुशब्दस्य अभावे वाग्व्यवहारः एव क्लेशाय भवेत् ।

संस्कृतं तु समग्रे देशे अस्ति । देशस्य विस्तारकारणतः अपशब्दाः बहवः भवेयुः एव । यद्यत्र व्यवस्था काचित् न स्यात् तर्हि उत्तरदेशीयेन लिखितः ग्रन्थः दाक्षिणात्येन अवगतः न भवेत्, पूर्वदेशीयेन लिखितं पश्चिमदेशीयेन नावगम्येत, कष्टेन अवगम्येत वा । एवमेव प्राचीनैः लिखितम् आधुनिकैः अपि नावगम्येत ।

इदानीं यदि प्राचीनैः लिखितम् अस्माभिः अवगम्यते, देशस्य एकस्मिन् कोणे लिखितम् अपरस्मिन् कोणे स्थितेन अवगम्यते तर्हि तस्य कारणम् - व्याकरण-नियमानुसरणम् एव, तन्नाम साध्वसाधुचिन्तनव्यवस्थायाः अनुसरणम् एव ।

अथवा केनचित् प्रयुक्तात् 'गोणी'शब्दात् यदि गोः ज्ञानम् अन्येन प्राप्तं तर्हि तत्र मूलं कारणं साधुशब्दज्ञानम् एव । साधुशब्दसादृश्यात् एव तेन अपभ्रंशस्य असाधुशब्दस्य अर्थः अवगतः । एवं च असाधुशब्दात् यत् ज्ञानं प्राप्यते तत् अपि साधुशब्दकारणात् एव ।

इदं च केषाञ्चित् शास्त्रकाराणां मतमिति भर्तृहरिः वदति -

*ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।*

- वाक्यपदीये - १.१४९

[ते अपशब्दाः साधुशब्दानां स्मारणेन ज्ञानोत्पत्तेः कारणानि भवन्ति ।]

*एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।*
*तेन साधु व्यवहितः कश्चिदर्थोऽभिधीयते ।।*

- वाक्यपदीये - १.१५२

[यत्र साधुशब्दः प्रयोक्तव्यः आसीत् तत्र अपभ्रंशः प्रयुज्यते चेत् साधुशब्दस्य स्मरणस्य कारणतः अर्थस्य प्रतीतिः भवति ।]

एवं च साधुशब्दमन्तरा अर्थबोधः न भवति । यत्र अपशब्दात् अपि अर्थबोधः भवति तत्र सर्वत्र मूलं कारणं भवति साधुशब्दस्य स्मरणम् एव ।

अतः एव भाष्यकारः पस्पशाह्निके व्याकरणप्रयोजननिरूपणावसरे *'रक्षोहागम-लघ्वसन्देहाः प्रयोजनम्'* इति वदन् असन्देहं प्रयोजनेषु अन्यतमत्वेन अवदत् ।

साधुशब्दज्ञानं तु व्याकरणात् एव सिद्ध्यति इति जानाति पामरः अपि । अत एव उच्यते -

*यद्यपि बहु नाधीषे ग्रन्थान् तथापि पठ पुत्र व्याकरणम् ।*

*स्वजनः श्वजनो मा भूत् सकलः शकलः सकृच्छकृत् ।।* इति ।

भर्तृहरेः एतानि वचनानि श्रूयन्ते -

*साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः ।*

- वाक्यपदीये - १.१४१

[व्याकरणशास्त्रं शब्दानां साधुत्वज्ञानस्य कल्पनाय एव प्रवृत्ता अस्ति ।]

*तस्मात् निबध्यते शिष्टैः साधुत्वविषया स्मृतिः ।*

- वाक्यपदीये - १.२९

[बहुप्रयोजनलाभात् हेतोः एव पाणिनिप्रभृतयः शिष्टाः शब्दसाधुत्वविषयं व्याकरणशास्त्रं रचितवन्तः सन्ति ।]

*तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ।*

- वाक्यपदीये - १.१३

[शब्दसाधुत्वज्ञानाय व्याकरणात् ऋते न अन्यत् किमपि साधनम् अस्ति ।]

एवं तर्हि किं तत् साधुत्वं नाम ? तस्य साधुत्वस्य लक्षणं किम् ? असाधुत्वस्य च लक्षणं किम् ?

असाधुशब्दस्य (अपभ्रंशस्य) लक्षणम् एवम् उक्तम् अस्ति वाक्यपदीये -

*शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षिते ।*

*तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम् ।।*

- १.१४७

[सास्नादिमान् पशुः गौः । 'गौः' इति प्रयोक्तव्ये तस्मिन् एव अर्थे संस्कारहीनाः गावीगोण्यादयः यदि प्रयुक्ताः स्युः तर्हि ते 'अपभ्रंशाः' इति उच्यन्ते विद्वज्जनैः ।]

संस्कारहीनः अपशब्दः भवति इत्यतः सिद्धं यत् 'संस्कारवान् भवति साधुशब्दः' इति । संस्कारः नाम व्याकरणसंस्कारः । प्रकृतिप्रत्ययादिविवेकसहितत्वम् एव स च संस्कारः । **'व्याकरणनियमानुगुणत्वं' साधुत्वस्य प्रथमं लक्षणम्** इति वयं वक्तुं शक्नुमः ।

प्रकृतिप्रत्ययादिविवेकः पाणिनिव्याकरणात् अवगम्यते । *'सूत्रेष्वेव हि तत्सर्वं यद् वृत्तौ यच्च वार्तिके'* इति वचनं श्रूयते । तस्मात् पाणिनिव्याकरणशब्देन त्रिभिरपि मुनिभिः यत् उक्तम्, अनन्तरकाले शिष्टैः वैयाकरणैः च यत् उक्तं तत्सर्वम्

अपि सङ्गृहीतं भवति ।

सूत्रानुसारी प्रयोगः साधुशब्दः । उत्सूत्रश्च असाधुशब्दः (अपशब्दः) इति तात्पर्यम् ।

**'कोषाद्यनुगृहीतत्वम्' अपि साधुत्वस्य अपरं लक्षणम्** । यद्यपि कोषकाराः सूत्रोक्तान् एव विषयान् विशदीकुर्वन्ति, तस्मात् व्याकरणानुगुणत्वकथनेनैव अयम् अंशोऽपि सङ्गृहीतः भवति, तथापि वैशद्याय अयमंशः पार्थक्येन उक्तः ।

*'विंशत्याद्याः सदैकत्वे' 'तासु चानवतेः स्त्रियः' 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति'* इत्यादीनि कोषवाक्यानि अवलम्ब्य एव अस्माभिः व्यवहारः व्यवस्थाप्यते । लिङ्गादिनिश्चये तु कोषकारादयः एव शरणम् ।

एतादृशानि व्याकरणशास्त्रस्य उक्तिम्, इङ्गितं, ज्ञापकं वा अवलम्ब्य लिखितानि भवन्ति । अतः एतेषाम् अपि प्रामाण्यम् अस्ति एव ।

**'शिष्टप्रयुक्तत्वम्' अपि साधुत्वनिश्चयस्य अपरं मानम्** । व्याकरणम् आधिक्येन पदानि एव संस्करोति इत्यतः वाक्यानां साधुत्वचिन्तनाय शिष्टप्रयोगः एव शरणं भवति । क्वचित् अनेकैः प्रकारैः प्रकृतिप्रत्ययादिकं वक्तुं शक्यते । विभक्त्यादिप्रयोगः समर्थयितुं शक्यते । तादृशे अवसरे कः मार्गः आश्रयणीयः इत्यत्र शिष्टप्रयोगः एव प्रमाणत्वेन स्वीक्रियते । *'यदि शिष्टाः शब्देषु प्रमाणं किमष्टाध्याय्या क्रियते ? शिष्टपरिज्ञानार्थाष्टाध्यायी'* इति भाष्यवचनम् अपि अत्र उपोद्बलकम् अस्ति ।

उदाहरणानि यथा -

- अर्हशब्दयोगे कृद्योगलक्षणा षष्ठी । लोकः तु तम् अनादृत्य द्वितीयां प्रयुङ्क्ते । *'पृथिवीराज्यमर्होऽयं नाङ्गराज्यं नरेश्वर'* (भारत. आदि. १९. १२) *'अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तव'* (भारत॰ आदि॰ ८५.३१) इत्यादिषु अनेकेषु प्रयोगेषु अर्हशब्दयोगे द्वितीया एव दृश्यते । अतः एव सूत्रकारोऽपि 'तदर्हम्' (५.१.११७) इति सूत्रे 'तत्' इति द्वितीयान्तं प्रयुङ्क्ते । 'विधिम् अर्हति' इति उदाहरणं प्रदर्श्य कौमुदीकारः द्वितायान्तादेव प्रत्ययः इति स्फुटीकुर्वन् 'तत्' इत्यस्य द्वितीयान्ततां विशदीकरोति ।
- 'दृशेश्च' इति वार्तिकेन अणि कर्तुः णौ कर्मसंज्ञा विहिता । किन्तु लोके चतुर्थी अपि बहुधा दृश्यते इत्यतः चतुर्थी अपि अङ्गीक्रियते ।
- लिङ्गादिविषये तु शिष्टव्यवहारः एव बहुत्र प्रमाणत्वेन अङ्गीक्रियते । अतः एव *'लोकाश्रयत्वात् लिङ्गस्य'* इति वचनं बहुधा प्राप्यते व्याकरणशास्त्रे ।
- 'ते आत्मनः दोषम् अवगतवन्तः' इत्यादिषु आत्मशब्दस्य एकत्वं तु शिष्टप्रयोगबलात् एव निर्णीतम् ।

एवम् अनेकेषु स्थलेषु शिष्टप्रयुक्तत्वम् एव प्रमाणं भवति । अतः एव चारुदेवशास्त्रिणः वाग्व्यवहारादर्शे वदन्ति –

*''इदं तावत् व्यवस्थितं यां वाग्वर्तनीम् अनुवर्तन्ते शिष्टाः तामेव अनुविवृत्सति लोकः । का नाम निरवद्या वाक्यप्रणीतिरिति शिष्टपद्धतेरेव शक्यमञ्जसा विज्ञातुम् । तत्र हि ते एव प्रमाणं, न इतरे । तन्मुखप्रेक्षी लोको यथाजातीयकं वाग्विन्यासं ते प्रयुञ्जते तथाजातीयकमेव सः प्रमाणीकुरुते । यथाविधया तं तमर्थं सन्दभन्ति तामेव अनुकरोति लोकः । व्याकरणे च पदान्येव संस्क्रियन्ते, न वाक्यानि । तेन न तदायत्तो वाक्यसाधुत्वप्रत्ययः । वाक्यं च न केवलं साध्विष्यते साधीयश्च, साधिष्ठमपि चेष्यते । इदं च तारतम्यं शिष्टप्रयोगतोऽवसातव्यं भवति नान्यतः । अनलङ्कर्मीणं तत्र व्याकरणम्''* इति ।

एवं साधुत्वस्य त्रीणि लक्षणानि –

१. व्याकरणनियमानुगुणत्वम्
२. कोषाद्यनुगृहीतत्वम्
३. शिष्टप्रयुक्तत्वं चेति ।

अथवा **'त्रिकालाबाध्यत्वं साधुत्वम्'** इत्यपि सङ्ग्रहेण वक्तुं शक्यते ।

साधुशब्दविवेचनम् एव व्याकरणशास्त्रस्य प्रवृत्तौ हेतुः । भगवता पाणिनिना अपि एतदर्थम् एव अष्टाध्यायी रचिता । व्याकरणेन न हि शब्दाः उत्पाद्यन्ते, अपि तु व्युत्पाद्यन्ते (व्याक्रियन्ते अनेन शब्दाः इति व्याकरणम्) इत्येतदत्र स्मरणीयम् अस्माभिः । प्रयुज्यमानान् सर्वान् शब्दान् मनसि आकलय्य प्रकृतिप्रत्ययव्यवस्थां कल्पयामास पाणिनिः । तेन भाषायाः अवगमने लाघवम् अपि सिद्धम् । एकस्य अकारान्तस्य शब्दस्य प्रक्रियां यः जानाति सः अकारान्तानां सर्वेषां प्रक्रियां ज्ञातुम् अर्हेत् एव । क्तिन्नन्तानां प्रक्रियां यः जानाति सः वाक्प्रपञ्चे स्थितानां सर्वेषां क्तिन्नन्तानां रूपाणि ज्ञातुं प्रभवति । एवमेव इतरत्रापि । तस्मात् एव लाघवम् ।

पाणिनिना महता प्रयासेन सर्वे शब्दाः व्युत्पादिताः । तदपि चतुस्सहस्रमितैः सूत्रैः । एतस्मात् कारणात् एव जगति परमोत्कृष्टम् एकं व्याकरणं सिद्धम् अभवत् । पाणिनीयव्याकरणविषये एवं हि श्रूयते –

*पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।*
*सर्वोपकारकं ग्राह्यं कृत्स्नं, त्याज्यं न किञ्चन ।।* इति ।

पाणिनेः महतः व्याकरणस्य रचनायाः अनन्तरम् अपि केचन शब्दाः अव्युत्पादिताः एव स्थिताः । तान् सङ्गृह्य वररुचिः वार्तिकानि रचयामास । भाष्यकारः पतञ्जलिः सूत्रकारस्य वार्तिककारस्य च आशयान् विशदीकृतवान्

महाभाष्याख्ये स्वग्रन्थे । मीमांसान्यायादिशास्त्राणां टीकाग्रन्थाः केवलेन 'भाष्य'शब्देन निर्दिश्यन्ते । परं पातञ्जलं भाष्यं तु 'महाभाष्य'शब्देन । एतस्मात् एव एतस्य वैशिष्ट्यं ज्ञातुं शक्यते । तथा च उक्तं पुण्यराजेन 'कृतेऽथ पतञ्जलिना' इति वाक्यपदीयकारिकाव्याख्यानावसरे - *'तच्च भाष्यं न केवलं व्याकरणस्य निबन्धनं यावत्सर्वेषां न्यायबीजानां बोद्धव्यमित्यत एव सर्वन्यायबीजहेतुत्वादेव महच्छब्देन महाभाष्यमित्युच्यते लोके'* इति ।

एते सूत्रकार-वार्तिककार-भाष्यकाराः आचार्याः व्याकरणस्य । अतः 'त्रिमुनिव्याकरणम्' इत्येव प्रसिद्धिः एतस्य व्याकरणस्य । साधुत्वनिर्णयाय या परिष्कृता व्यवस्था आवश्यकी आसीत् सा एतेन व्याकरणेन परिकल्पिता ।

संस्कृतक्षेत्रे महता प्रमाणेन साहित्यं सृष्टम् अस्ति । यद्यपि तत्साहित्यगतानि काव्यानि पाणिनीयव्याकरणानुगुणतया एव रचितानि, तथापि तेषु अपाणिनीयाः प्रयोगाः न सन्ति एव इति न । स्थितस्य गतिः चिन्तनीया इत्यतः तादृशान् प्रयोगान् सङ्गृह्य शरणदेवः 'दुर्घटवृत्तिं' रचयामास । प्रकारान्तरेण येषां समर्थनं शक्यं ते तत्र समर्थिताः, ये सर्वथा समर्थनानर्हाः ते तिरस्कृताः च ।

''दुर्घटानां - लक्ष्येषु कृच्छ्रघटनीयानां पाणिनीयसूत्राणां वृत्तिः - लक्ष्यानुसारितया विवरणम् इति व्युत्पत्त्या अस्याः (कृतेः) तथा (दुर्घटवृत्तिरिति) व्यवहारः । लक्षणेषु कृच्छ्रघटनीयानां लक्ष्याणां लक्षणानुगततया विवरणम् इति व्युत्पत्त्या वा व्यपदेशः'' इति दुर्घटवृत्त्याः प्रस्तावनायाम् उक्तमस्ति । अष्टाध्यायीक्रमेण केषाञ्चित् सूत्राणां विवरणं कृत्वा तत्सम्बद्धानां काव्योदाहरणानां साधुत्वं कथं वक्तुं शक्येत इति तत्र चिन्तनं कृतम् ।

तदर्थं तेन अवलम्बिताः अंशाः प्रायः एते -

- प्रकृत्यन्तरकल्पना ।
- प्रत्ययान्तरसद्भावकल्पना ।
- गणकार्यस्य उपलक्षणत्वम् ।
- नियमानां प्रायिकत्वकथनम् ।
- संज्ञापूर्वकविधेः अनित्यता ।
- व्यवस्थितविभाषा-योगविभागाद्याश्रयणम् ।
- ज्ञापकपरिभाषादीनाम् अवलम्बनम् ।

साधुत्वप्रतिपादनाय, स्थितस्य गतेः चिन्तनाय वा प्रायः सर्वैः अपि एतादृशाः एव अंशाः अवलम्बनीयाः भवन्ति ।

शरणदेवस्य अनन्तरम् एतस्मिन् साध्वसाधुचिन्तनक्षेत्रे प्रवृत्तः प्रमुखः प्रयत्नः - चारुदेवशास्त्रिणाम् एव प्रायः । चारुदेवशास्त्रिभिः 'शब्दापशब्दविवेकः'

'वाग्व्यवहारादर्शः' इत्येतस्मिन् कृतिद्वये विस्तरेण साध्वसाधुचिन्तनं कृतम् । शास्त्रिणः शब्दापशब्दविवेकस्य प्रस्तावनायां लिखन्ति – *'अत्र विषये शरणदेवविरचितां दुर्घटवृत्तिम् अतिरिच्य न काचित् कृतिर्विद्यते अस्मत्कृतेः पूर्वा'* इति ।

शरणदेवेन कवीनां महाकवीनां च अल्पाः केचन प्रयोगाः एव परामृष्टाः । किन्तु चारुदेवशास्त्रिभिः तु आधुनिकैः कविभिः सामान्यैः च रचितानि वाक्यानि अपि सुनिपुणं परिशीलितानि । संस्कृतेन अभिव्यक्तिरूपः व्यवहारः यैः आधिक्येन न क्रियते, तेषां रचनासु अशुद्धयः सहजतया एव भवन्ति । ये व्यवहारं कुर्वन्तः अपि साधुत्वविषये चिन्तनं न कुर्वन्ति तेषां कृतिषु अपि दोषाः लभ्यन्ते आधिक्येन । पूर्वं लेखनादिक्षेत्रं यथा विदुषां भूमिः आसीत् तथा तु इदानीं नास्ति । चारुदेवशास्त्रिणः लिखन्ति – *''अद्यत्वे संस्कृतं लोकव्यवहारस्य गोचरो नेत्यधीतिनोऽपि शास्त्रे प्रयोगे स्खलन्ति, किमुत ये प्राधीताः* । तस्मात् प्रबोधनसव्यपेक्षः लोकः विशेषतस्तु विनेयवर्गः''* इति ।

एषा स्थितिः इदानीम् इति न । प्राचीने काले अपि एवम् एव आसीत् । भर्तृहरिः वाक्यपदीये वदति –

*दैवी वागवकीर्णेयमशक्तैः अभिधातृभिः ।*

–१.१५४

[सम्यक् शब्दप्रयोगं कर्तुम् अशक्ताः वक्तारः अपभ्रंशान् प्रयुञ्जानाः एतां संस्कृतभाषां विविधैः प्रकारैः अवकीर्णवन्तः सन्ति ।]

*पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु ।*
*प्रसिद्धिमागता येषु तेषां साधुरवाचकः ।।*

– १.१५३

[बहुषु वक्तृषु दोषः यदा भवति तदा परम्परया अपभ्रंशाः व्यवहारपथम् आगत्य प्रसिद्धाः भवन्ति । तेषां दृष्ट्या साधुशब्दः एव अर्थबोधकः न भवति ।]

अद्य तु स्थितिः नितरां शोचनीया जाता अस्ति । अस्माकं सर्वेषां मातृभाषा भवति काचित् प्रादेशिकभाषा । संस्कृतं द्वितीयभाषास्थानम् आवहति । तस्मात् अस्मदादीनां संस्कृतव्यवहारे प्रादेशिकभाषाप्रभावः महान् । संस्कृताभासाः बहवः शब्दाः वाक्यप्रयोगाश्च प्रादेशिकभाषासु भूयसा भवन्ति । तेषां प्रभावम् आपन्नाः वयं तत्सदृशान् एव प्रयोगान् कुर्मः संस्कृतभाषायाम् अपि । तस्मात् दोषबहुलाः भवन्ति अस्माकं प्रयोगाः ।

भाषासाधुतादृष्ट्या अवधातव्यः अन्यः कश्चन अंशः अपि अस्ति । स च –

---

* अधीतम् अनेन इति अधीती । कृताध्ययनः इत्यर्थः । अध्येतुम् आरब्धवान् प्राधीतः । आदिकर्मणि क्तः ।

'सरलीकरणाय' क्रियमाणः प्रयासः ।

संस्कृतस्य सरलता तु नितान्तम् अपेक्षिता । यतः सामान्यैः जनैः अपि यदि एतया भाषया व्यवहरणीयं तर्हि सरलता एव शरणम् । किन्तु सरलीकरणं सरलतातः भिन्नम् । सरलता तु विद्यमानायाः संस्कृतभाषायाः एव एकं रूपम् । सरलीकरणं तु अविद्यमानस्य योजनम् । सरलीकरणम् इत्यत्र अभूततद्भावे च्विः । 'सरलीकरणं' न आवश्यकम् । पाणिनिसीमायाम् एव सरलतासम्पादनाय ये अंशाः सन्ति ते आदर्तव्याः । 'सरलीकरण'नाम्ना पाणिनिसीमायाः भङ्गः न करणीयः । किन्तु तत्र तत्र एतादृशः प्रयासः प्रचलन् दृश्यते । अयं तु महतः खेदस्य विषयः ।

कस्यचित् पुस्तकस्य प्राक्कथने * एवम् उच्यते -

- 'सन्तः' इति शब्दः सत्शब्दस्य बहुवचनं, परन्तु 'सन्तः' इति शब्दः एकवचनी अकारान्तः हिन्दीमराठी आदिभाषासु प्रचलितः इत्यतः यथा वाक् - वाचा, दिक् - दिशा, तथा सत् - सन्तः इति द्वौ अपि शब्दौ प्रचलनम् अर्हतः इति मन्ये ।
- तथैव 'सत्ता' इति शब्दः शासकीय अधिपत्यम् इत्यर्थे लोके प्रचलितः । अतः तदर्थेनैव मया प्रयुक्तं ।
- संस्कृतभाषायां 'एवं'शब्दः 'अनया रीत्या' इत्यर्थे प्रयुज्यते । परन्तु हिन्दीभाषायां 'च'शब्दवत् उभयान्वयी अव्ययरूपेण प्रयुज्यते । तथा मयापि संस्कृतभाषायाम् अपि प्रयुक्तः । यथा - रामः एवं लक्ष्मणः ।

एतादृशं चिन्तनं पाणिनिसम्मतं न इति तु स्फुटम् एव । यत्र साधुत्वकथनप्रकारः एव कोऽपि न भवति तादृशः प्रयासः न आदरणीयः भाषाशुद्धिं परिरक्षितुम् इच्छद्भिः । स्वच्छन्दप्रवृत्तिः न भवेत् भाषाक्षेत्रे । विचिन्त्य कृतः एव व्यवहारः शोभते ।

शुद्धिविषये किञ्चिदपि चिन्तनम् अकुर्वतां व्यवहारस्य दर्शनात् मनः नितरां खिद्यते । दौर्भाग्यवशात् तादृशाः व्यवहाराः आधिक्येन दृश्यन्ते । प्राप्त-स्नातकोत्तरपदवीकैः, पारम्परिकक्रमेणैव कृताध्ययनैः, विविधेषु उन्नतेषु स्थलेषु विराजमानैः च क्रियमाणानां भाषाप्रयोगाणां दर्शनात् स्पष्टीभवति यत् भाषाक्षेत्रे शुद्धिस्तरः दिने दिने ह्रासं गच्छन् अस्ति इति । यदि एवमेव स्थितिः अनुवर्तेत तर्हि भाविनि काले भाषायाः का गतिः भवेत् इति चिन्ता बाधते । 'व्युत्पन्नानाम् एव एषा दशा चेत् सामान्यानां का वा गतिः स्यात्' इति विषीदति मनः ।

न तथा बाधते स्कन्धः यथा 'बाधति' बाधते इति केनचित् शिबिकावाहकेन

* प्राक्कथनकारस्य वाक्यानि अत्र यथावत् लिखितानि । यदि तेषु दोषाः दृश्यन्ते तर्हि ते तस्यैव इति मन्तव्यम् ।

बाधतीति प्रयोगं कृतवान् पण्डितः कश्चन उक्तः इति काचित् कथा श्रूयते । अद्य तु 'बाधति'सदृशाः सहस्रशः लक्षशः वा प्रयोगाः दृश्यन्ते ! 'कथमस्य संस्कृतजगतः परिष्कारः ?' इति चिन्ता भृशं बाधते ।

द्वित्राणि निदर्शनानि अत्र प्रस्तुमः ।

❖ कस्याश्चित् पत्रिकायां दृष्टाः प्रयोगाः केचन -

- नवदेल्यां प्रचलिष्यमानानां कविगोष्ठ्यां मूर्तिमहाभागः स्वरचितस्य कवनं सभायां पठयामास ।
- उपप्रधानी श्रीमान् ..... महाभागेन उद्घाटयामासुः ।
- मार्च्मासे प्रचलिष्यमाणे एस्.एस्.एल्.सि.परीक्षायाः फलितांशः अद्य प्रातः सर्वेषु केन्द्रेषु प्रकटयामासुः । परीक्षायां विद्यार्थीन्याः अत्यधिकस्थाने लभ्यतमिति प्रकटनादवगम्यते ।
- मासस्यास्य पञ्चदशतमे दिनाङ्के 'फ्रण्टियर् मेल्' इति नामकस्य प्रतिष्ठित एक्स्प्रेस्रैल् प्रातः चतुर्वादने भीकरदुरन्तं सम्भविष्यति । सचिवः दुरन्तस्थलं परिशील्य एकलक्ष्यरूप्यक-परिहारधनं घोषयामासुः ।

❖ कस्मिंश्चित् प्रकाशनाधीने पुस्तके दृष्टाः प्रयोगाः केचन -

- ललाटोपरिस्थप्रबलगोरालकभाराः गिरिपंक्त्युपरिस्थवारिवाहान् इव लक्ष्यते ।
- सा देव्याः पुनरवतरिता इत्येव लक्षिता ।
- सा पञ्चविंशद्वर्षिया तन्वी ।
- परीक्षाम् उत्तीर्णनन्तरम् ....
- तद्दिने लज्जिताहं एवं खेदिता च ।
- अन्तःप्रवेशनं सः नानुमितवान् ।

❖ अपरस्मिन् पुस्तके स्थिताः प्रयोगाः एते -

- शास्त्रीमहाभागेन ।
- राक्षसताल् इति नामकम् ।
- अस्य कालः चतुर्थः शताब्दः ।
- सः पुनीतः जातः ।
- अनेकानां कष्टानाम् ।
- रघुनामकराजानम् ।
- कति गुरुदक्षिणा देयां ।

एतादृशाः असंख्याः प्रयोगाः श्रुतिपथम् आयान्ति, दृष्टिपथम् आगच्छन्ति च । हे भगवन् ! एतेषां परिष्कारः कथं वा शक्येत ? कः मार्गः एतदर्थम् ?

विंशतेः वर्षेभ्यः पूर्वं यदा एतत् सम्भाषणान्दोलनम् आरब्धं तदा एव भाषापरिष्कारविषये चिन्तनम् अपि आरब्धम् । व्यवहारे दृष्टानि श्रुतानि च असाधुवाक्यानि सर्वतः चित्वा सङ्गृहीतानि । एतादृशं पुस्तकं रचनीयम् इति यदा कार्यम् आरब्धं तदा प्रवासावसरे चेन्नैनगरे असाधुवाक्यानां सः महासङ्ग्रहः चोरितः जातः । पुनः त्रिचतुराणां वर्षाणां प्रयासेन यथाशक्ति उदाहरणानि सङ्गृहीतानि, सङ्गणके आरोपितानि च । किन्तु एतदपि भगवतः तोषाय न अभवत् इति मन्ये । सङ्गणकस्थानि तानि कथमपि विनष्टानि । बहवः अंशाः कागदेषु अविलिख्य साक्षात् सङ्गणके एव आरोपिताः आसन् इत्यतः महान् भागः एव विनष्टः जातः । पुनरपि स्मृत्वा स्मृत्वा यथाशक्ति सङ्गृह्य लब्धाः अंशाः पुनः सङ्गणके आरोपिताः । एवं द्विवारं महाकण्टककष्टम् अनुभूय एतेन पुस्तकेन एतत् रूपं प्राप्तम् अस्ति ।

'सरलतया एव निरूपणं भवेत्, सामान्यः जनः अपि अत्रत्यं चिन्तनम् अवगन्तुं शक्नुयात्' इति मूलचिन्तनम् आसीत् । किन्तु यथा यथा लेखनम् अनुवृत्तं तथा तथा अनुभवः आगतः यत् परमसरलया शैल्या लेखनं न शक्यम् इति । 'किमर्थम् ?' इति विवरणं यदा आरब्धं तदा शैल्याः प्रौढता आगता एव । सप्रमाणनिरूपणाय सूत्राणि वक्तव्यानि अभवन् । गुणे, वृद्धौ, शरि परे, कित्त्वात्, ष्यञि, धर्मिपरत्वम्, सुलोपः, रुत्वे विसर्गे इत्यादयः बहवः शब्दाः प्रयोक्तव्याः एव अभवन् । तेषां प्रयोगं विना निरूपणम् अशक्यम् एव आसीत् । अतः निरूपणं शास्त्रमार्गम् अन्वसरत् । अन्ते इदं निर्णीतम् – अधीतव्याकरणः एव अत्रत्यं विषयं कृत्स्नतया अवगन्तुं शक्नुयात् । सामान्यः जनः तु प्रथमवाक्यमात्रम् (इदम् अशुद्धम्, इदं शुद्धम् इत्यादिकम्) अवगन्तुम् अर्हेत् इति ।

लोके असाधवः शब्दाः, असाधूनि वाक्यानि च यानि दृष्टानि श्रुतानि वा तानि सङ्गृह्य 'किमर्थम् असाधुता' 'साधुप्रयोगश्च कः' इति अत्र निरूपितम् । निरूपणस्य आनुकूल्याय विषयविभागः कल्पितः । तत्तत्प्रकरणसम्बद्धाः विषयाः तत्र निरूपिताः । साध्वसाधुविवेचनम् एव एतस्य पुस्तकस्य उद्देशः, न तु प्रकरणशः व्याकरणांशस्य बोधनम् । अतः एव एतस्य पुस्तकस्य पठनात् न कस्यचित् अपि व्याकरणप्रकरणस्य साकल्येन अवगमनं भवति । यतः तेन उद्देशेन न प्रवृत्तं, तादृशः प्रयासः अपि न कृतः । णत्वं, णिजन्तं, समासः, कारकम् इत्यादिभिः प्रकरणैः अभिसम्बद्धं दोषविवेचनं तु कृतम् । किन्तु तानि तानि प्रकरणानि न विस्तरेण निरूपितानि । अतः तानि प्रकरणानि विस्तरेण ये ज्ञातुम् इच्छन्ति ते पुस्तकान्तरम् एव पठेयुः ।

एतस्य पुस्तकस्य रचनावसरे मया उभयमूलात् मार्गदर्शनं प्राप्तम् । तयोः

अन्यतरत् मूलम् अस्ति - चारुदेवशास्त्रिणां पुस्तकयुगलम् । एतादृशम् एकं पुस्तकं रचनीयम् इति उद्देशेन विंशत्यधिकवर्षेभ्यः पूर्वम् एव विषयसङ्ग्रहः आरब्धः । दशाधिकवर्षेभ्यः पूर्वं पुस्तकरूपदानम् अपि आरब्धम् इव । तदा विशेषसङ्ग्रहः एव चोरितः जातः इत्यतः स च प्रयत्नः स्थगितः । प्रायः तेषु एव दिनेषु चारुदेव-शास्त्रिणां 'शब्दापशब्दविवेकः' 'वाग्व्यवहारादर्शः' इत्येतौ ग्रन्थौ दृष्टिपथम् आगतौ । यत् चिन्तनम् अस्मासु आसीत्, यः प्रयत्नः अस्माभिः आरब्धः आसीत्, तत्सदृशः एव प्रयासः एतस्मिन् कृतिद्वये अपि दृष्टः, येन च अननुभूतपूर्वः रोमाञ्चः प्राप्तः ।

आत्मना दृष्टानि लौकिकानि ग्रन्थस्थानि च उदाहरणानि चित्वा विवेचनं कृतवन्तः सन्ति चारुदेवशास्त्रिणः । वाक्प्रपञ्चस्य विस्तृतं सूक्ष्मं च परिशीलनं कृतं तैः । महान्तः वैयाकरणाः अपि ते । तस्मात् ससूत्रं निरूपणावसरे प्राचीनान् प्रयोगान् बहुधा उदाहृतवन्तः सन्ति ते। अतः एव साधुत्वासाधुत्वनिर्णयक्षेत्रे रत्नायते तेषां कृतिद्वयम् ।

अस्यां कृतौ अपि तदेव साध्वसाधुचिन्तनं कृतम् । नेत्राभ्यां श्रोत्राभ्यां च ये प्रयोगाः अधिगताः तेषाम् एव विवेचनं कृतम् अस्ति अत्र । अद्यतनाः कार्यकर्तारः एतस्य अधिकारिणः । अप्रत्यक्षम् (यत् न दृष्टं न श्रुतं वा तादृशम्) एकम् अपि उदाहरणवाक्यं नास्ति अत्र । येषाम् अनुकरणं न करणीयं तादृशाः आर्षाः प्रयोगाः महाकविप्रयोगाः च पार्थक्येनैव निरूपिताः ।

अस्याः कृतेः चारुदेवशास्त्रिणां कृतिद्वयस्य च क्षेत्र समानं, तथापि विषयस्य आकारः न समानः । ते प्रायः प्राचीनेभ्यः आधुनिकेभ्यः च कृतिभ्यः उदाहरणानि चितवन्तः । अत्र तु अद्यतनव्यवहारक्षेत्रात् उदाहरणानि चितानि । कानिचन तु तैः अपि दृष्टानि, इहापि दृष्टानि । अतः क्वचित् समानम् उदाहरणम् उभयत्रापि दृश्यते । एतदत्र स्पष्टीकर्तुम् इष्यते यत् चारुदेवशास्त्रिणां कृतिं दृष्ट्वा तत्रत्यानि उदाहरणानि एव किञ्चित् परिवर्त्य अत्र न पुनर्लिखितानि ।

प्रसिद्ध्याकाङ्क्षा पदाद्याकाङ्क्षा वा एतस्याः कृतेः उद्देशः न । 'कार्यकर्तृणां भाषापरिष्कारः कथं स्यात्, कीदृशं साहाय्यं दत्तं चेत् ते लाभान्विताः भवेयुः, केषु केषु अंशेषु तैः अवधानं दातव्यम्' इत्यादिकम् एव एतस्याः कृतेः प्रवर्तकम् । अतः कुमार्गस्य वाममार्गस्य वा आश्रयणं नात्र कृतम् ।

चारुदेवशास्त्रिणाम् उदाहरणेषु अत्रत्येषु च क्वचित् समानः अभिप्रायः न दृश्यते । क्वचित् विप्रतिपत्तिं दर्शयन्ति ते । विशेषता, आवश्यकता, अङ्गणम् इत्यादीनि अत्र निदर्शनानि । विशेषतादीनि असाधूनि इति उच्यते तैः । तेषां साधुता अत्र प्रतिपादिता ।

विषयस्य विविधानि मुखानि भवन्ति । तैः किञ्चन मुखं दृष्ट्वा विषयप्रतिपादनं कृतम् । ग्रन्थेऽस्मिन् तस्यैव अपरं मुखम् अपि दृष्ट्वा निरूपणं कृतम् । अत्र दृष्टं मुखं प्रायः चारुदेवशास्त्रिभिः न स्पृष्टम् । तस्मात् अयं विसंवादः क्वचित् ।

इह कृतौ केचन प्रयोगाः निराकृताः । पुनः केचन समर्थिताः । अन्ये केचन अप्रशस्तत्वेन निर्दिष्टाः । एतस्याः कृतिरचनायाः अवसरे या दृष्टिः अवलम्बिता सा एव दृष्टिः चारुदेवशास्त्रिणां कृतौ अपि दृश्यते । तस्मात् का दृष्टिः आश्रिता इत्येतत् निरूपयितुं चारुदेवशास्त्रिणां वचनानि एव अत्र उद्ध्रियन्ते -

*''इह कृतौ स्थितस्य गतिश्चिन्तनीयेति नात्यन्तं सूक्षितं वचः । अशक्यसमाधाने न समाधिः प्रसभं प्रवर्तितः । अस्थाने बुद्धिव्यायामः परिहृतः । शब्दात् अपशब्दो विविक्तः । न च तत्र वक्तृविषये सम्भावना प्रतिषेधिका अभूत्, न वा इतरस्मिन् अवहेला प्रयोजिका । पाप्मभ्यः इव अपभ्रंशेभ्यः पूतेयं देवी वाग् यथा स्यात्तथा प्रयस्तम् ।''*

विषयनिरूपणाय, यत्र यत्र आवश्यकता तत्र तत्र चारुदेवशास्त्रिणाम् आशयः उल्लिखितः ।

उभयमूलात् मार्गदर्शनं प्राप्तम् इति मया पूर्वम् उक्तम् । एकस्य मूलस्य विस्तृतः परिचयः प्रदत्तः च । अपरं मूलम् अस्ति - जि. महाबलेश्वरभट्टवर्यः । यदि एतस्यां कृतौ शास्त्रत्वं दृश्यते तर्हि तस्य मूलं कारणं महाबलेश्वरभट्टवर्यः एव । प्रतिपदं तेन मार्गः दर्शितः । किम् असाधु, किं साधु, केन सूत्रेण साधुता प्रतिपादनीया, कीदृशः प्रयोगः किमर्थं निराकरणीयः इत्यादिकं सर्वं विविच्य तेन बोधितम् । समस्यायाः उपस्थापनमात्रं मम कार्यं भवति स्म । ततः तेन यत् उक्तं तदेव वाक्यैः मया अत्र निरूपितम् । अतः कलेवरं मदीयम् । आत्मतत्त्वं तु तेन आरोपितम् ।

तेन एतादृशं मार्गदर्शनम् आ बहोः कालात् क्रियमाणम् अस्ति । यथा कुलालः मृदं स्वीकृत्य चक्रसाहाय्येन अपरिष्कृतं घटं निर्माय तनुना वस्त्रेण सूक्ष्मपरिष्कारं चिन्तयति तथैव भट्टमहोदयः मृत्पिण्डबुद्धीन् अस्मान् प्रतिपदं बोधयित्वा आकारोपेतान् कृतवान् । स च आकारः इतोऽपि सुपरिष्कृतः इति न । परिष्कारः बहु इष्यते । मृदः गुणस्तरम् अवलम्ब्य खलु घटस्य परिष्कारः सम्भवति ? उपादानकारणम् एव वस्तुनः गुणवत्तां निश्चिनोति । निमित्तकारणानि तु अत्र सहायकमात्राणि भवन्ति ।

इयं मम कृतिः इति कथनं धाष्टर्योपेतं वचनं भवेत् । बहूनां चिन्तनम् अत्र संवलितम् अस्ति । बहूनां मार्गदर्शनम् अत्र सम्प्राप्तम् अस्ति । एवं स्थिते 'ममैव' कृतिः इयं सर्वथा भवितुं न अर्हति । तथापि व्यावहारिककारणतः कृतिकारत्वेन मम नाम उल्लिखितम् अस्ति अत्र ।

कार्यकर्तॄणां लाभाय एव एषा कृतिः रचिता । आ बहोः कालात् सञ्चितस्य ज्ञानस्य सङ्क्रामणाय अत्र प्रयासः कृतः । एतस्य पठनात् यदि कार्यकर्तारः साध्वसाधुचिन्तनमार्गे पदानि स्थापयेयुः तर्हि प्रयासोऽयं सफलः स्यात् । एतदवसरे साहाय्यं कृतवन्तः सर्वे कृतज्ञतापूर्वकं स्मर्यन्ते ।

न जाने, अत्र क्वचित् शास्त्रविरोधः जातः वेति । यदि शास्त्रविरोधः दृष्टः तर्हि तस्य कारणं मम अल्पज्ञत्वं, शास्त्रोक्त्यवगमने असामर्थ्यं च । तदर्थं क्षन्तव्योऽयं जनः । इदं च प्रार्थ्यते -

यदि प्रमादास्स्युरिह प्रबन्धे<br>
क्षमध्वमज्ञं प्रसभप्रवृत्तिम् ।<br>
गुणान् हि गृह्णन्तु बुधा भवन्तः<br>
त्यजन्त्वसारान् विगुणान् कदंशान् ।।

- कृतिकारः

ॐ

# १. प्रथमोऽध्यायः

## लेखनदोषाः

संस्कृतभाषा देवनागरीलिप्या यदा लिख्यते तदा केचन प्रमादाः सम्भवन्ति। ते केचन यथा -

### १.१. मकारलेखनम्

१.१.१ ❖ रामः गृहं आगतवान्।

❖ बालः **फलं** इच्छति।

उपरि स्थितम् उभयम् अपि उदाहरणवाक्यं दोषयुक्तम्।

प्रथमे उदाहरणे 'गृह'शब्दे हकारोत्तरम् अनुस्वारः लिखितः। तस्य पुरतः स्वरः (आकारः) अस्ति। द्वितीये उदाहरणे 'फल'-शब्दे लकारोत्तरम् अनुस्वारः लिखितः। तस्य पुरतः अपि स्वरः (इकारः) अस्ति।

उदाहरणद्वये अपि अनुस्वारः लिखितः यत् तत् तु दोषाय। स्वरे परे मकारः एव लेखनीयः।

प्राचीनाः तु 'गृहमागतवान्' इति पदद्वयमपि योजयित्वा लिखन्ति स्म। तन्नाम ते सर्वत्र *संहिताम् इच्छन्ति स्म। किन्तु इदानीम् आधुनिके काले पठनक्लेशनिवारणाय वाक्ये संहिता न इष्यते। संहितायाः अविवक्षा न शास्त्रविरुद्धा। **'वाक्ये तु सा विवक्षाम् अपेक्षते'** इति हि प्राचीनोक्तिः।

**अनुस्वारात् स्वरे परे मकारः एव लेखनीयः, न तु अनुस्वारः**। अतः स्वरे परे मकारलेखनम् एव शुद्धम्, अनुस्वारलेखनं च अशुद्धम्।

*'मोऽनुस्वारः' (८.३.२३)* इत्येतस्य सूत्रस्य अत्र अप्रवृत्तिः इत्यतः एवं भवति। तस्य सूत्रस्य प्रवृत्त्यर्थं निमित्तं किमपि नास्ति। अतः तत् सूत्रम् अत्र न प्रवर्तते।

---

* *वर्णानाम् अतिशयितः सन्निधिः 'संहिता' इति उच्यते। वर्णद्वयम् अव्यवहिततया यत्र उच्चारयितुम् इष्यते तत्र 'संहिता' भवति।*

१.१.२. ❖ रामेण कार्यं कृतं ।

❖ बालकेन चित्रं दृष्टं ।

एतस्मिन् वाक्यद्वये पूर्णविरामात् पूर्वम् अनुस्वारः लिखितः । सः दोषाय । **अवसाने अपि मकारः एव लेखनीयः** ।

## १.२. परसवर्णलेखनम्

### १.२.१. नित्यम् -

अधः अशुद्धानि शुद्धानि च रूपाणि दत्तानि सन्ति ।

| *अशुद्धानि* (✗) | *शुद्धानि* (✓) |
|---|---|
| अंगणम् | अङ्गणम् |
| चंचूः | चञ्चूः |
| अंडम् | अण्डम् |
| शांतः | शान्तः |
| पंपा | पम्पा |

अनुस्वारस्य पुरतः वर्गीयव्यञ्जनानि यवलाश्च यदा भवन्ति तदा सदृशः परसवर्णः लेखनीयः । *'अनुस्वारस्य ययि परसवर्णः'* (८.४.५८) इति पाणिनिसूत्रम् । एतादृशेषु स्थलेषु परसवर्णरहितानि (अनुस्वार-सहितानि) रूपाणि असाधूनि एव ।

### १.२.२. विकल्पेन -

पदान्ते तु परसवर्णः विकल्पेन । अतः सङ्घटनम् / संघटनम्, सञ्चयः/ संचयः इत्यादिषु रूपद्वयम् अपि साधु एव । *'वा पदान्तस्य'* (८.४.५९) इति पाणिनिसूत्रम् । उपसर्गस्य पदत्वम् (पदसंज्ञा) अस्ति इति न विस्मरणीयम् ।

## १.३. द्वित्वम्

### १.३.१. द्वित्वम् (सामान्यम् - १)

केषाञ्चित् पदानां लेखनावसरे केचन वर्णाः द्विवारं लेखनीयाः भवन्ति । उच्चारणश्रवणात् एतत् द्वित्वं यद्यपि न अनुभवगोचरतां याति, तथापि लेखनावसरे तु तत् लेखनीयम् एव । कानिचन उदाहरणानि यथा -

| अशुद्धानि (✗) | शुद्धानि (✓) |
| --- | --- |
| महत्वम् | महत्त्वम् (महत् + त्वम्) |
| सत्वम् | सत्त्वम् (सत् + त्वम्) |
| तत्वम् | तत्त्वम् (तत् + त्वम्) |
| सात्विकम् | सात्त्विकम् |
| उज्वलः | उज्ज्वलः (उत् + ज्वल) |
| पाश्चात्यः | पाश्चात्त्यः (पश्चात् + त्यक्) |
| कार्तिकमासः | कार्त्तिकमासः |
| तज्ञः | तज्ज्ञः (तत् + ज्ञः) |
| कित्वम् | कित्त्वम् (कित् + त्वम्) |
| छित्वा | छित्त्वा (छिद् + त्वा) |
| भित्वा | भित्त्वा (भिद् + त्वा) |
| उध्वस्तः | उद्ध्वस्तः (उत् + ध्वस्तः) |

## १.३.२. द्वित्वम् (सामान्यम् - २)

येषां पदानाम् अन्तिमस्वरात् पूर्वं द्वित्वघटितवर्णौ भवतः तेषां तृतीयादि-विभक्तौ द्वित्वं स्यादेव ।

यथा - वृत्तिः - वृत्त्या, भित्तिः - भित्त्या

'वृत्ति'पदे अन्तिमस्वरात् पूर्वं द्वित्वघटितवर्णौ (तकारद्वयम्) स्तः । अतः तस्य तृतीयाविभक्तिरूपे तकारद्वयं लेखनीयम् । एवमेव इतरत्रापि ।

उदाहरणान्तराणि यथा -

| प्रथमान्तम् | अशुद्धम् (✗) | शुद्धम् (✓) |
| --- | --- | --- |
| प्रवृत्तिः | प्रवृत्या | प्रवृत्त्या |
| विच्छित्तिः | विच्छित्या | विच्छित्त्या |
| विपत्तिः | विपत्या | विपत्त्या |
| बुद्धिः | बुध्या | बुद्ध्या |
| शुद्धिः | शुध्या | शुद्ध्या |
| व्युत्पत्तिः | व्युत्पत्तिः | व्युत्पत्त्या |
| रङ्गवल्ली | रङ्गवल्याः | रङ्गल्ल्याः |

द्वित्वघटितेन उपान्त्यवर्णेन युक्ताः शब्दाः सन्धौ यदा पूर्वपदत्वं प्राप्नुवन्ति तदा

अपि तेषां द्वित्वं करणीयम् एव ।

यथा –

| अशुद्धानि (✗) | शुद्धानि (✓) |
|---|---|
| शुध्यर्थम् | शुद्ध्यर्थम् |
| समृध्यर्थकः | समृद्ध्यर्थकः |
| प्रवृत्यादयः | प्रवृत्त्यादयः |
| समृध्युपायः | समृद्ध्युपायः |
| उत्पत्यर्थे | उत्पत्त्यर्थे |

## १.३.३ द्वित्वम् (सामान्यम् – ३)

केषुचित् पदेषु दुस्‌दुरादीनां प्रादीनाम् अनन्तरं सकारादिः शब्दः भवति । तादृशे प्रसङ्गे विसर्गसन्धेः (प्रादिसन्धेः वा) नियमः स्मर्तव्यः । विसर्गः सकारः एव वा लेखनीयः । सकारे लिखिते सकारद्वयं दृश्येत । (उपसर्ग-सम्बद्धः एकः सकारः । सादिपदसम्बद्धः अपरः ।)

उदा –

| अशुद्धम् (✗) | शुद्धम् (✓) |
|---|---|
| दुस्थितिः | दुस्स्थितिः / दुःस्थितिः |
| मनस्थितिः | मनस्स्थितिः / मनःस्थितिः |
| निस्थानम् | निस्स्थानम् / निःस्थानम् |
| निस्पृहः | निस्स्पृहः / निःस्पृहः |
| शिरस्नानम् | शिरस्स्नानम् / शिरःस्नानम् |
| मनस्थैर्यम् | मनस्स्थैर्यम् / मनःस्थैर्यम् |
| वयस्तरः | वयस्स्तरः / वयःस्तरः |
| वक्षस्थलम् | वक्षस्स्थलम् / वक्षःस्थलम् |
| निसृतम् | निस्सृतम् / निःसृतम् |
| निस्वार्थः | निस्स्वार्थः / निःस्वार्थः |
| अप्सरस्त्री | अप्सरस्स्त्री / अप्सरःस्त्री |
| ज्योतिशास्त्रम् | ज्योतिश्शास्त्रम् / ज्योतिःशास्त्रम् |
| दुस्वप्नः | दुस्स्वप्नः / दुःस्वप्नः |

## १.३.४. द्वित्वम् (विशेषः)

'दा'धातोः क्त्वाप्रत्यये *'दो दद्घोः'* *(७.४.४६)* इति सूत्रेण दद्भावः । ('दथ्' इति आदेशः इत्यर्थः ।) तस्मात् परिनिष्ठितं रूपं तावत्

'दत्त्वा' इति तकारद्वयोपेतम् ।

अतः - *अशुद्धम्* (✗) *शुद्धम्* (✓)

दत्वा दत्त्वा

**१.३.५. द्वित्वं विकल्पेन -**

अ) मर्यादा / मर्य्यादा, अर्कः /अर्क्कः, तात्पर्यम् / तात्पर्य्यम्

आ) न ह्यस्ति / न ह्य्यस्ति, अपह्नुतिः / अपह्ह्नुतिः

इ) सिध्यति / सिद्ध्यति, सुध्युपास्यः / सुद्ध्युपास्यः, वल्मीकः / वल्ल्मीकः

एतेषु सर्वेषु उदाहरणेषु द्वित्वं विकल्पेन । ***'अचो रहाभ्यां द्वे'* (८.४.४६) *'अनचि च'* (८.४.४७) इत्येताभ्यां सूत्राभ्याम् एतेषु द्वित्वं विकल्पेन विहितम् । अतः एव केचन एव द्वित्वघटितं रूपं लिखन्ति । सामान्याः तु द्वित्वरहितं रूपम् एव प्रयुञ्जते ।

**१.३.६. पत्रपुत्रादयः -**

अन्ये केचन सन्ति, येषु च द्वित्वं भवेत् एव इति व्युत्पत्त्यवलम्बितः तर्कः वदति । किन्तु शिष्टाः अपि बहवः तेषु शब्देषु द्वित्वं न लिखन्ति । ते च शब्दाः पुत्रपत्रादयः ।

१. पतति इति पत्रम् । (पत्लृ + ष्ट्रन्)

२. पुनाति इति पुत्रः । (पू(पु) + क्त्र) अथवा पुन्नाम्नो नरकात् त्रायते । (पुत् + त्रैङ्)

अतः पुत्रपत्रादीनां लेखनावसरे तकारस्य द्वित्वं स्याद्वा न वेत्यत्र विद्वांसः एव प्रमाणम् ।

## १.४. अनुस्वारः

**१.४.१.** केषुचित् शब्देषु अनुस्वारः त्यज्यते जनैः । यथा -

सन्यासी - *अशुद्धम्* (✗)

संन्यासी - *शुद्धम्* (✓)

अत्र 'सम्' इति उपसर्गः । उपसर्गगतः 'म'कारः लोपं नार्हति कथमपि ।

---

* अचः परस्य यरः द्वे वा स्तः, न त्वचि ।

अतः अनुस्वारः लेखनीयः एव ।

१.४.२. | अशुद्धम् (✗) | शुद्धम् (✓) |
|---|---|
| पुल्लिङ्गः/पुंल्लिङ्गः | पुँल्लिङ्गः/पुंलिङ्गः |

पुं + लिङ्गः इति स्थिते *'वा पदान्तस्य' (८.४.५९)* इति सूत्रेण विकल्पेन परसवर्णः । परसवर्णे कृते लकारस्य सवर्णः 'लँ' इत्यादेशः अनुस्वारस्य । तदा **'पुँल्लिङ्गः'** (अनुनासिकघटितलकारयुक्तम्) इति रूपम् । अत्र लकारद्वयं दृश्यते । परसवर्णाभावे तु अनुस्वारः । **'पुंलिङ्गः'** इति रूपम् । एकः लकारः अत्र ।

एवं च - १) लकारद्वयं लिखितं चेत् अनुनासिकम् अपि लेखनीयम् । (पुँल्लिङ्गः)

२) अनुस्वारः लिखितः चेत् एकः एव लकारः लेखनीयः । (पुंलिङ्गः)

अन्यानि सर्वाणि रूपाणि असाधूनि एव ।

एतदत्र अवधातव्यं यत् 'पुलँल्लिङ्गम्' इति लेखनम् एव साधु स्यात् । किन्तु लिख्यते - 'पुँल्लिङ्गम्' इति । अत्र लेखनावसरे यद्यपि पकारस्य उपरि अनुनासिकचिह्नं (ँ) दृश्यते, तथापि अनुनासिकता तु लकारस्य एव, न तु पकारोत्तरस्य उकारस्य । लिपेः परिमितसामर्थ्यम् एव अत्र कारणम् ।

## २. द्वितीयोऽध्यायः

# रूप-लिङ्ग-वचनादिदोषाः

एतस्मिन् अध्याये वयम् अतिसामान्यान् कांश्चन दोषान् परिशीलयाम ।

### २.१. रूपदोषाः

अक्षरत्यागः, विसर्गत्यागः, अन्यवर्णनिवेशः, अल्पप्राणमहाप्राणगताः दोषाः, रूपविषये भ्रमः इत्यादयः अत्र अन्तर्भवन्ति ।

| *अशुद्धानि* (✗) | *शुद्धानि* (✓) |
|---|---|
| १. नन्तरम् | अनन्तरम् |
| २. ग्यानम् / ग्नानम् | ज्ञानम् |
| ३. संग्या | संज्ञा |
| ४. कठिणम् | कठिनम् |
| ५. उट्टङ्कणम् | उट्टङ्कनम् |

---

१. 'नन्तर'शब्दः संस्कृते नास्ति । न + अन्तरम् = अनन्तरम् । न-अन्तरयोः समासे **अनन्तरम्** इति रूपम् ।

२. 'ज्ञ'कारं केचन प्रादेशिकभाषाप्रभावतः 'ग्यः' इति उच्चारयन्ति । ('ग्न' इति वा) तथा उच्चारणं लेखनं वा दोषाय । ज् + ञ् = ज्ञ । *'जञोर्ज्ञः'* इति कौमुद्यां स्पष्टतया लिखितम् ।

३. **'संज्ञा'** इत्यत्रापि 'ज्ञ'कारः एव उच्चारणीयः, लेखनीयः च । गकार-यकारयोः योगेन 'ग्य' भवति । जकारञकारयोः योगेन 'ज्ञ' भवति । एवं ग्य-ज्ञयोः भेदः स्पष्टः । गकारयकारयोगः एतस्मिन् शब्दे पूर्वशब्दे वा न इष्टः ।

४. 'कठिणम्' इत्यत्र यः णकारः (टवर्गपञ्चमः) श्रूयते सः अस्थाने । क्वचित् णकारः स्वाभाविकः भवति । यथा - अङ्गणम् । 'कठिण'-पदे तादृशी स्थितिः अपि नास्ति । अतः नकारः (तवर्गपञ्चमः) एव लेखनीयः । **'कठिनम्'** इत्येव शुद्धम् ।

५. उट्टङ्कणम् इत्यत्रापि णकारः न निमित्तवशात् प्राप्तः, न वा स्वाभाविकः । अतः णत्वम् अस्थाने । **'उट्टङ्कनम्'** इति नकारयुक्तं (तवर्गपञ्चमयुक्तं) रूपम् एव लेखनीयम् ।

| | |
|---|---|
| ०६. प्रकटणम् | प्रकटनम् |
| ०७. पुनह | पुनः |
| ०८. मनम् | मनः |
| ०९. दुखम् | दुःखम् |
| १०. ब्रम्हा | ब्रह्मा |
| ११. आल्हादः | आह्लादः |
| १२. लक्ष्मी | लक्ष्मीः |
| १३. श्री | श्रीः |
| १४. चक्षू | चक्षूः |

---

०६. 'प्रकटणम्' इत्यत्रापि णत्वम् अस्थाने । तवर्गपञ्चमोपेतं रूपम् **(प्रकटनम्)** एव शुद्धम् । उपसर्गनिमित्तकस्य णत्वस्य अत्र न प्रसक्तिः । टकारव्यवधानम् अपि अस्ति । अतः कथमपि न णत्वम् ।

०७. 'पुनर्' इति रेफान्तम् अव्ययम् । रेफस्य विसर्गः । हकारस्य न प्रसक्तिः कथमपि ।

०८. मनश्शब्दः सकारान्तः, न तु अकारान्तः । अतः 'मनम्' इति रूपं प्रामादिकम् ।

०९. **'दुःखम्'** इत्यत्र विसर्गः श्रूयते एव । 'दुर्' इति उपसर्गः । तस्य विसर्गः । विसर्गलोपस्तु नास्ति ।

१०. वृद्ध्यर्थकस्य 'बृहि'धातोः मनिन्प्रत्यये 'ब्रह्मा' इति रूपम् । धातुगतः हकारः एव आदौ लेखनीयः, मकारश्च अनन्तरम् । मकारस्य पूर्वलेखनं दोषाय ।

११. **'आह्लादः'** इत्यत्र यः 'ह्लादी'धातुः अस्ति सः हकारादिः । अतः हकारः एव आदौ लेखनीयः, तु लकारः ।

१२. 'लक्ष्मीः' इति प्रथमैकवचनान्तः शब्दः । लक्ष्मीशब्दः न ङ्यन्तः । अतः तस्य सुपः लोपो न । अतो विसर्गः न श्रूयते एव ।

१३. 'श्री'शब्दोऽपि न ङ्यन्तः, अपि तु क्विप्प्रत्ययान्तः । अतः तस्यापि प्रथमाविभक्त्यैकवचने न सुलोपः । अतः **'श्रीः'** इति विसर्गसहितं रूपम् एव शुद्धम् ।

१४. अत्रापि सुपः लोपस्य न प्रसक्तिः । सकारः विसर्गः भवति ।

| | |
|---|---|
| १५. रुग्वेदः / रिग्वेदः | ऋग्वेदः |
| १६. रुषिः / रिषिः | ऋषिः |
| १७. वधू | वधूः |
| १८. दधिः | दधि |
| १९. श्मश्रुः | श्मश्रु |
| २०. जानुः | जानु |
| २१. स्यालः | श्यालः |
| २२. स्वशुरः | श्वशुरः |
| २३. स्वश्रू/श्वश्रू | श्वश्रूः |

---

१५. ऋच्यन्ते स्तूयन्ते देवाः अनया (ऋच-स्तुतौ + क्विप्) इति ऋक् । ऋक् + वेदः = ऋग्वेदः । 'ऋक्'शब्दः स्वरादिः, न तु रेफादिः । अतः स्वरादिः (ऋ) एव साधुः ।

१६. ऋषिशब्दः गत्यर्थकात् 'ऋषो'धातुतः उत्पन्नः । ऋषति ज्ञानेन संसारपारम् इति ऋषिः । शब्दोऽयम् अपि स्वरादिः । प्रादेशिकभाषासु रेफादिः क्वचित् लिख्येत भ्रान्त्या ।

१७. ऊकारान्तत्वात् न सुपः लोपः । सकारस्य विसर्गः ।

१८. नपुंसके सुप्रत्ययस्य लोपो विहितः - *'स्वमोर्नपुंसकात्' (७.१.२३)* इति सूत्रेण । अतः विसर्गः न श्रूयते ।

१९. अत्रापि सुपः लोपः (विसर्गलोपः) एव । अतः **'श्मश्रु'** इति विसर्गरहितं रूपम् एव साधु ।

२०. नपुंसकत्वात् अत्रापि विसर्गस्य अश्रवणम् । **'जानु'** इति विसर्गरहितं रूपं शुद्धम् ।

२१. 'श्याल'शब्दः शादेः 'श्यैङ्'धातोः उत्पन्नः । अतः **'श्यालः'** इति शकारादिरूपम् एव युक्तम् । भगवद्गीतायां प्रयोगो यथा - 'मातुलाः श्वशुराः पौत्राः **श्यालाः** सम्बन्धिनस्तथा' इति ।

२२. 'श्वशुर'शब्दोऽपि शकारादिः, न तु सकारादिः । अतः **'श्वशुरः'** इत्येव शुद्धम् ।

२३. 'श्वश्रू'शब्दोऽपि शकारादिः, ऊकारान्तस्त्रीलिङ्गः इत्यतः विसर्गस्य श्रवणं च । अतः **'श्वश्रूः'** इति शुद्धम् ।

| | |
|---|---|
| २४. स्मशानम् | श्मशानम् |
| २५. हृस्वः | ह्रस्वः |
| २६. बहुर्व्रीहिः | बहुव्रीहिः |
| २७. प्रभोदनम् | प्रबोधनम् |
| २८. अघादः | अगाधः |
| २९. घर्जनम् | गर्जनम् |
| ३०. निश्वस्य | निःश्वस्य/निश्श्वस्य |
| ३१. शत्रुप्रत्ययः | शतृप्रत्ययः |

---

२४. शवाः यत्र शेरते तत् श्मशानम् । तच्च शकारादिः । सकारादिः कुत्रापि न दृष्टचरः । अतः **'श्मशानम्'** इत्येव लेखनीयम् ।

२५. **'ह्रस्वः'** इत्यत्र 'ह्रस'धातुः । सः रेफयुक्तः, न तु ऋकारयुक्तः । अतः 'हृस्वः' इति ऋकारयुक्तस्य रूपस्य प्रयोगः तु भ्रान्त्या । रेफः एव प्रयोक्तव्यः ।

२६. **'बहुव्रीहिः'** इत्येव शुद्धम् । *'शेषो बहुव्रीहिः'* (२.२.२३) इति पाणिनिसूत्रे प्रयोगः । 'बहुर्व्रीहिः' इति तु अज्ञानमूलः प्रयोगः ।

२७. **'प्रबोधनम्'** इत्यत्र 'बुध'धातुः । तत्र बकारः अल्पप्राणः, न तु महाप्राणः । अतः **'(प्र)बोधनम्'** इति रूपं शुद्धम् ।

२८. **'अगाधः'** इत्यत्र 'गाधृ'धातुः । तत्र गकारः कवर्गतृतीयः । गकारस्य महाप्राणता तु भ्रान्त्या ।

२९. **'गर्जनम्'** इत्यत्र 'गर्ज'धातुः । तत्र गकारः अल्पप्राणः । व्याघ्रादीनां स्वभावः कठोरः भवतीति गर्जनशब्दे महाप्राणप्रयोगः एव वरम् इति तु बालिशाः मन्यन्ते ।

३०. **'निःश्वस्य'** इत्यत्र श्वसधातुः, 'निस्' इति उपसर्गः च । श्वसधातौ आदौ शकारः अस्ति एव । 'निस्' इत्यत्र उपसर्गे यः सकारः तस्य लोपः तु नास्ति कथमपि । अतः सः सकारः विसर्गरूपेण शकार-रूपेण वा दृश्येत एव परिनिष्ठिते रूपे ।

३१. **'शतृ'प्रत्ययः** इत्यत्र प्रत्ययस्य नाम 'शतृ' इति, न तु 'शत्रु' इति । 'वैरी' इत्यस्य अर्थस्य बोधकं पदं 'शत्रुः' इति । भ्रान्तैः कदाचित् तयोः व्यामिश्रणं क्रियते ।

| | |
|---|---|
| ३२. नाण्यकम् | नाणकम् |
| ३३. कोट्याधिपतिः | कोट्यधिपतिः |
| ३४. श्रुणोति/श्रृणोति | शृणोति |
| ३५. शृतवान् | श्रुतवान् |
| ३६. श्रुण्वन् | शृण्वन् |
| ३७. शृत्वा | श्रुत्वा |
| ३८. ग्रह्णन् | गृह्णन् |

---

३२. नाणकं नाम मुद्राङ्कितं वस्तु । Coin इत्यर्थः । प्रयोगो यथा - 'एषा **नाणक**मोषिका....' (मृच्छकटिके - १२३) 'नाण्यक'शब्दस्तु कुत्रापि न प्रयुक्तपूर्वः ।

३३. कोटि + अधिपतिः = कोट्यधिपतिः । सन्ध्यनन्तरम् आकारस्य प्रवेशस्य न काऽपि प्रसक्तिः । 'आधिपतिः' इति तु पदं नास्ति । अतः **'कोट्यधिपतिः'** इत्येव साधु ।

३४. 'शृणोति' इति शुद्धं रूपम् । यद्यपि धातुः 'श्रु' इति, तथापि *'श्रुवः शृ च' (३.१.७४)* इति सूत्रेण 'शृ' इति आदेशः स्यात् लडादिषु लकारेषु (शपि) । अतः **'शृणोति'** इति शुद्धम् ।
रेफयुक्तस्य रूपस्य प्रसक्तिः एव नास्तीत्यतः रेफोकारयोः (श्रुणोति) रेफऋकारयोः (श्रृणोति) वा लेखनम् अशुद्धम् ।

३५. 'शृ' इति आदेशः तु शपि एव । श्रुतवान् इत्यत्र क्तप्रत्यये शपः प्रसक्तिः नास्ति । अतः **'श्रुतवान्'** इति रूपं शुद्धम् ।

३६. **'शृण्वन्'** इत्यत्र शतृप्रत्ययप्रसङ्गे लटः एव शतृप्रत्ययः । अतः तत्र शपः प्रसक्तिः अस्ति । तस्मात् 'शृ' इत्यादेशः ।

३७. श्रुधातोः क्त्वाप्रत्यये 'शृ' इति आदेशः न, शपः प्रसक्तेः अभावात् । अतः **'श्रुत्वा'** इति रूपं शुद्धम् ।

३८. ग्रहधातोः शतृप्रत्यये तस्य कित्त्वात् *'ग्रहिज्या...' (६.१.१६)* इति सूत्रेण *सम्प्रसारणम् । *(तिङ्शित्सार्वधातुकम् - ३.४.११३, सार्वधातुकमपित् -१.२.४)* सम्प्रसारणे च रेफस्य ऋकारः । तस्मात्

---

* सम्प्रसारणं नाम काचित् संज्ञा । यत्र यणः (यवरलानां) स्थाने विधीयमानः इक् (इउऋऌवर्णाः) सम्प्रसारणसंज्ञः भवति । *'इग्यणः सम्प्रसारणम्'* (१.१.४५) इति सूत्रम् ।

| | |
|---|---|
| ३९. गृहीतुम् | ग्रहीतुम् |
| ४०. गृहीतव्यम् | ग्रहीतव्यम् |
| ४१. ग्रहीतवान् | गृहीतवान् |
| ४२. गृहीष्यति | ग्रहीष्यति |
| ४३. रुदति/रोदति | रोदिति |
| ४४. आपृच्छनम् | आप्रच्छनम् |
| ४५. बद्धव्यम् | बन्धव्यम् |
| ४६. बद्धुम् | बन्धुम् |
| ४७. लिखिष्यति | लेखिष्यति |

---

**'गृह्णन्'** इति रूपम् । सम्प्रसारणरहितं (रेफयुक्तं) रूपम् असाधु ।

३९. ग्रहधातोः तुमुनि न सम्प्रसारणं केनापि सूत्रेण । अतः **'ग्रहीतुम्'** इत्येव शुद्धम् ।

४०. तव्यति अपि ग्रहधातोः सम्प्रसारणं न । अतः **'ग्रहीतव्यम्'** इति रूपम् एव शुद्धम् ।

४१. ग्रहधातोः क्तवतुप्रत्यये परे क्तवतुप्रत्ययस्य कित्त्वात् *'ग्रहिज्या..'* इति सूत्रेण सम्प्रसारणम् । सम्प्रसारणे रेफस्य ऋकारः । अतः **'गृहीतवान्'** इत्येव रूपं शुद्धम् ।

४२. 'ग्रहीष्यति' इत्यत्र न सम्प्रसारणम्, कित्त्वस्य ङित्त्वस्य वा अभावात् । अतः **'ग्रहीष्यति'** इति रेफयुक्तं रूपम् एव शुद्धम् ।

४३. अश्रुविमोचनार्थकस्य 'रुद'धातोः लटि प्रथमैकवचने इट् भवति - *'रुदादिभ्यः सार्वधातुके' (७.२.७६)* इति सूत्रेण । तस्मात् **'रोदिति'** इति रूपम् । इडभावसहितं रूपम् असाधु ।

४४. ज्ञीप्सार्थकस्य 'प्रच्छ'धातोः ल्युटि न सम्प्रसारणम् । अतः **'(आ)प्रच्छनम्'** इति रूपम् एव शुद्धम् ।

४५. 'बन्ध'धातुः नकारसहितः एव । तव्यति नकारलोपः न भवति । अतः **'बन्धव्यम्'** इति रूपम् एव शुद्धम् ।

४६. नकारसहितस्य 'बन्ध'धातोः तुमुनि नकारलोपः न । अतः 'बन्धुम्' इत्येव शुद्धम् ।

४७. **'लेखिष्यति'** इत्येव प्रयोक्तव्यम् । लिखधातोः लृटि *'पुगन्तलघूपधस्य'*

| | |
|---|---|
| ४८. मिलिष्यति | मेलिष्यति |
| ४९. सुधामः | सुदामा |
| ५०. भानुमतिः | भानुमती |
| ५१. सुमती | सुमतिः |
| ५२. मण्डळी | मण्डली |
| ५३. मण्टपः | मण्डपः |
| ५४. सङ्गठनम् | सङ्घटनम्/संघटनम् |

---

(७.३.८६) इत्यनेन गुणः स्यात् एव लघूपधत्वात् ।

४८. 'मिल'धातोः लृटि लघूपधं निमित्तीकृत्य गुणः स्यादेव । तदा **'मेलिष्यति'** इति रूपम् ।

४९. कुचेलापरपर्यायः 'सुदाम'शब्दः नकारान्तः । दकारश्च अल्पप्राणः । नकारान्तत्वात् प्रथमैकवचने **'सुदामा'** इति रूपम् । तत्र विसर्गस्य श्रवणं नास्ति । सुष्ठु ददाति इति (डु दाञ् + मनिन्) सुदामा ।

५०. भानवः अस्य सन्ति इति विग्रहे 'भानुमान्' इति पदं सिध्यति । तस्य स्त्रीत्वविवक्षायां **भानुमती** इति रूपम् । *'उगितश्च'* (४.१.६) इति सूत्रेण ङीप् । अतः ईकारान्तता ।

५१. शोभना मतिः यस्याः सा सुमतिः । एषः न मतुबन्तः । अतः न ङीप् । 'भानुमती' इत्यत्रापि 'मती' इति आनुपूर्वी तु दृश्यते । अत्रापि सा एव आनुपूर्वी । किन्तु तत्र मतुबन्तता, अत्र मतिशब्दः चेति भेदः स्फुटः अस्ति । अतः **'सुमतिः'** इति इकारान्तं रूपम् ।

५२. **'मण्डली'** इत्यत्र लकारः एव, न तु ळकारः । प्रादेशिकभाषायां ळकारश्रवणं स्यात् बहुधा । किन्तु संस्कृते तु लकारः एव । 'ळ'कारः वेदे एव श्रूयते, न तु लोके ।

५३. **'मण्डपः'** इत्येव शुद्धम् । कोषकाराः तस्य विविधान् व्युत्पत्तिप्रदर्शन-प्रकारान् दर्शितवन्तः । किन्तु टवर्गप्रथमयुक्तस्य 'मण्टप'शब्दस्य व्युत्पत्तिः केनापि कोषकारेण न दर्शिता । शिष्टप्रयोगाः सर्वे टवर्गतृतीय-युक्ताः (मण्डपः इति) एव ।

५४. **'सङ्घटनम्'** इति शुद्धम् । सङ्घटनम् इत्यत्र सम् इति उपसर्गः । चेष्टार्थकः घटधातुः । घटधातुः कवर्गचतुर्थादिः, न तु कवर्गतृतीयादिः । तथैव

| | | |
|---|---|---|
| ५५. | सन्मानः | सम्मानः/संमानः |
| ५६. | मध्यन्तरम् | मध्यान्तरम् |
| ५७. | उच्छाटनम् | उच्चाटनम् |
| ५८. | उच्चिष्टम् | उच्छिष्टम् |
| ५९. | कलियुगः | कलियुगम् |

---

तत्रत्यः टकारः टवर्गप्रथमः । न तु टवर्गद्वितीयः । हिन्दीभाषायां 'सङ्गठनम्' इत्येतस्य रूपस्य प्रयोगः क्रियते । तत् तु अशुद्धम् । धात्वादिज्ञानतः एव शुद्धरूपस्य ज्ञानं भवितुम् अर्हति ।

५५. सम् + मानः = सम्मानः । सम् इति उपसर्गः अत्र । यदि च सतः = सत्पुरुषस्य मानः इति अर्थः उच्यते तर्हि 'सन्मानः' इति रूपं तु स्यात् । किन्तु 'अमुकस्य सन्मानः प्रचलति' इत्यादयः वाक्यप्रयोगाः दुष्यन्ति । अतः सम् + मानः = **सम्मानः/संमानः** इति प्रयोगः एव वरम् ।

५६. मध्य + अन्तरम् अनयोः योगे सवर्णदीर्घे **मध्यान्तरम्** इति स्यात् । पररूपसन्धेः नात्र अवकाशः, शकन्ध्वादिगणे तस्य अपाठात् । प्रादेशिकभाषासु मध्यन्तरम् इति प्रयुज्येत । तावता तत् रूपं संस्कृतभाषायां शुद्धं भवितुं नार्हति । प्रकृतिप्रत्ययविवेकः, सन्ध्यादि-प्रक्रिया च संस्कृतभाषायां द्रष्टव्यः एव ।

५७. उदुपसर्गपूर्वकस्य भेदनार्थकस्य ण्यन्तस्य चटधातोः ल्युटि **'उच्चाटनम्'** इति रूपम् । 'चट'धातुः चवर्गप्रथमादिः, न तु चवर्गद्वितीयादिः । तस्मात् 'उच्छाटनम्' इति अशुद्धम् ।

५८. उदुपसर्गपूर्वकस्य असर्वोपयोगार्थकस्य 'शिष'धातोः क्तप्रत्यये **उच्छिष्टम्** इति रूपम् । उत् + शिष्टम् इति स्थिते श्चुत्वेन तकारस्य चकारः । ततः *'शश्छोटि' (८.४.६३)* इति सूत्रेण शकारस्य छकारः । तस्मात् उच्छिष्टम् इति रूपम् । शकारस्य छकारः यः भवति सः चवर्गद्वितीयः, न तु चवर्गप्रथमः । अतः 'उच्छिष्टम्' इत्येव शुद्धम् ।

५९. कृतद्वापरादिबोधकः युगशब्दः नपुंसके एव, न तु पुंसि । हलाद्यर्थे सः पुंसि । कोषो यथा - 'यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु' (अमरः) । प्रयोगो यथा - '..... घोरं कलियुगं स्मृतम् ' (ब्राह्म पु०)

| | |
|---|---|
| ६०. दोषाणि | दोषाः |
| ६१. तालुः | तालु |
| ६२. साम्राट् | सम्राट् |
| ६३. फलितकेशः | पलितकेशः |
| ६४. पारितोषकम् | पारितोषिकम् |

---

६०. दोषशब्दः पुंसि एव । नपुंसकप्रयोगः तु भ्रान्त्या । प्रयोगः यथा -

- नाल्पीयान् बहु सुकृतं हिनस्ति दोषः ।

- किरा. - ७.१५

- रसापकर्षकाः दोषाः..... ।

- साहित्यदर्पणः - ७.१०

- वातः पित्तः कफश्चेति त्रयो दोषास्समागताः ।

- भाव.प्र.

६१. तालुशब्दः न हि पुंसि, अपि तु नपुंसके । नपुंसके *'स्वमोर्नपुंसकात्' (७.१.२३)* इति सूत्रेण सुलोपः । अतः न विसर्गश्रवणम् । कोष-प्रामाण्यं यथा - 'तालु च काकुदम्' (अमरः) । प्रयोगो यथा - 'मुखतस्तालु निर्भिन्नम्.....' - भाग० १०.१८

६२. जकारान्तस्य 'सम्राज्'शब्दस्य प्रथमैकवचनान्तं रूपं **'सम्राट्'** इति । तत्र सकारोत्तरम् आकारो नास्ति, अपि तु अकारः एव । सम्यक् राजते (राजृ - दीप्तौ) 'क्विप्' । कोषो यथा - '......शास्ति यश्चाज्ञया राज्ञः स सम्राट्' (अमरः) । प्रयोगो यथा - '.....सम्राट् समाराधन-तत्परोऽभूत्' - रघु. २.५

६३. वार्धकेन येषां केशाः श्वेताः भवन्ति ते उच्यन्ते **'पलितकेशाः'** इति । 'पलितः' इत्यत्र पकारः अल्पप्राणः, न तु महाप्राणः । महाप्राणेन फकारेण युक्तस्य 'फलित'शब्दस्य फलयुक्तादयः अर्थाः । ते च अर्थाः नात्र विवक्षिताः । 'पित्तं च केशं पचति पलितं तेन जायते' इति वदति आयुर्वेदः । अमरकोशः वदति - 'पलितं जरसा शौक्ल्यं केशादौ' इति ।

६४. सन्तोषेण तोषणाय वा यत् दीयते तत् पारितोषिकम् । तत्र षकारोत्तरम् इकारः श्रूयते । इकाररहितम् रूपम् असाधु । परितोषः प्रयोजनम्

| | |
|---|---|
| ६५. पित्थम् | पित्तम् |
| ६६. जञ्झावातः | झञ्झावातः |
| ६७. जर्झरितः | झर्झरितः/जर्जरितः |
| ६८. शिरच्छेदः | शिरश्छेदः |
| ६९. मार्ताण्डः | मार्तण्डः |
| ७०. अक्षोहिणी सेना | अक्षौहिणी सेना |

---

अस्य इति ठञ् - *'प्रयोजनम्' (५.१.१०९)* इति सूत्रेण । ठस्य इकादेशः - *'ठस्येकः' (७.३.५०)* इति सूत्रेण । तस्मात् प्रत्ययाङ्गभूतः इकारः श्रूयेत एव । अतः **पारितोषिकम्** इत्येव शुद्धम् ।

६५. त्रिदोषेषु अन्यतमम् अस्ति **'पित्तम्'** । तत्र तकारद्वयं श्रूयते । उभयोः अपि तकारयोः अल्पप्राणता एव । एकस्य महाप्राणता इति तु भ्रान्तिः । अपिदीयते प्रकृतावस्थया रक्ष्यते - अपि + देङ्(पालने) क्तः । विकृतावस्थया नाश्यते शरीरम् - अपि + दो (अवखण्डने) 'तः' इति अपरा व्युत्पत्तिः । उभयत्रापि अपेरल्लोपः ।

६६. **झञ्झावातः** इत्यत्र उभयत्रापि झकारः । तन्नाम उभौ अपि महाप्राणौ । कोषेषु तथैव दर्शनात् । जकारादिः (अल्पप्राणोपेतः) न दृश्यते सः ।

६७. **'जर्जरितः'** इति अल्पप्राणजकारद्वयोपेतं, **'झर्झरितः'** इति महाप्राण-झकारद्वयोपेतं वा रूपं साधु । 'जर्ज' इति धातुः अस्ति । 'झर्झ' इत्यपि धातुः अस्ति । किन्तु एकस्य अल्पप्राणता, अपरस्य महाप्राणता तु नास्ति ।

६८. शिरस् + छेदः इति स्थिते श्चुत्वे **'शिरश्छेदः'** इति रूपं सिद्धम् । 'शिरस्'शब्दः न अकारान्तः, अपि तु सकारान्तः । तस्मात् शकार-श्रवणं स्यादेव । शकारलोपस्तु केनापि सूत्रेण न विहितः ।

६९. *'शकन्ध्वादिषु पररूपं वाच्यम्'* इति वार्तिकेन पररूपम् । तस्मात् **'मार्तण्डः'** इति रूपम् । (तन्नाम तकारोत्तरम् अकारः ।)
''परमार्ताण्डमास्यत्, पुनर्मार्ताण्डमास्यत् इत्यादिषु दीर्घश्छान्दसः इति भावः । केचिदत्र सवर्णदीर्घमाहुः । पूर्वोक्तवैदिकप्रयोगास्तेषामनुकूलाः''
- तत्त्वबोधिनी

७०. अक्षाणाम् ऊहिनी = **अक्षौहिणी** । *'अक्षादूहिन्यामुपसङ्ख्यानम्'* इति

| | |
|---|---|
| ७१. जोतिषिकः | ज्यौतिषिकः/ ज्योतिषिकः |
| ७२. वय्याकरणः/वैय्याकरणः | वैयाकरणः |
| ७३. जनार्धनः | जनार्दनः |
| ७४. पौर्णिमा | पूर्णिमा |
| ७५. सिन्धूरम् | सिन्दूरम् |
| ७६. अम्बरीशः | अम्बरीषः |

---

वार्तिकेन वृद्धिः । 'अक्षाणाम् इत्यस्य ऊहशब्देन समासे ततः इनौ तु अक्षोहिणीत्येव भवति' इति वदति तत्त्वबोधिनीकारः । प्रामाणिकप्रयोगे सत्येव अक्षोहिणी इत्यस्यापि साधुत्वं वक्तव्यं भवेत् । लोके दैनन्दिनव्यवहारे तु 'अक्षौहिणी' इत्यस्यैव प्रयोगः वरम् ।

७१. ज्योतिः नाम सूर्यादिग्रहाः । ते यत्र प्रतिपाद्यतया भवन्ति तत् शास्त्रं 'ज्योतिषम्' इति उच्यते । तत् यः अधीते वेत्ति वा सः 'ज्यौतिषिकः' (ज्योतिष + ठक्) । *'संज्ञापूर्वकः विधिः अनित्यः'* इति मतम् आश्रित्य वृद्धिं विकल्पेन इच्छन्ति केचन । तदा तु 'ज्योतिषिकः' इति । जकारोत्तरं यकारः तु स्यादेव सर्वत्र ।

७२. व्याकरणं यः वेत्ति अधीते वा सः वैयाकरणः । (व्याकरण + अण्) ऐकाररहितं, यकारद्वयोपेतं वा रूपम् असाधु एव ।

७३. जनैः अर्द्यते याच्यते इति **जनार्दनः** । अन्याः अपि व्युत्पत्तयः सन्ति एतस्य पदस्य । सर्वत्रापि धातुः तु 'अर्द' (गतौ याचने च) इति, यश्च अल्पप्राण'द'कारोपेतः, न तु 'ध'कारोपेतः । अतः महाप्राणोच्चारणं दोषाय एव ।

७४. यस्यां तिथौ चन्द्रमण्डलं पञ्चदशभिः अपि कलाभिः पूर्णं भवति सा तिथिः उच्यते - **'पूर्णिमा'** इति । (पूर्णं चन्द्रस्य पूरणं, तेन निर्वृत्ता - इमप्) अत्र वृद्धेः प्रसक्तिः नास्ति । एतस्मिन् एव अर्थे **'पौर्णमासी'** **'पौर्णमी'** इत्येतौ शब्दौ अपि स्तः ।

७५. स्यन्दू (प्रस्रवणे) इत्यस्य धातोः ऊरन्प्रत्यये सम्प्रसारणे च **'सिन्दूर'**शब्दस्य सिद्धिः । अत्र दकारः अल्पप्राणः. नतु महाप्राणः । तथा हि कोषः - 'सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके' इति ।

७६. न ह्यत्र 'ईश'शब्दः । अतः तालव्यस्य न प्रसक्तिः । अबि(शब्दे)धातोः

| | |
|---|---|
| ७७. विश्वस्थमण्डली | विश्वस्तमण्डली |
| ७८. बभ्रुवाहनः | बभ्रुवाहनः |
| ७९. दूर्वासः / दूर्वासाः | दुर्वासाः |
| ८०. प्रसाधनम् | प्रसादनम् |
| ८१. पृष्टम् | पृष्ठम् |

---

'ईषन्'प्रत्ययः अरुडागमश्च निपातनात् । (उ० ४.२९) अतः 'अम्बरीषः' इति रूपम् । अत्र मूर्धन्यः (षः) एव लेखनीयः ।

७७. 'Trust' इत्येतम् अर्थम् अवगमयितुं दाक्षिणात्यैः एतस्य शब्दस्य प्रयोगः क्रियते । विश्वे यः भवति सः भवति 'विश्वस्थः' । सः अत्र न अभिप्रेतः । विश्वासार्हः अत्र अभिप्रेतः । 'विश्वसिति' इत्यस्य क्तान्तं रूपं प्रयोक्तव्यम् । तत् भवति - 'विश्वस्तः' इति । अत्र तकारः अल्पप्राणः (त), न तु महाप्राणः (थ) । तस्मात् महाप्राणोपेतं 'विश्वस्थः' इति रूपम् अत्र न युज्यते ।

७८. बभ्रुः नाम अग्निः । विष्णुः, शिवः, पिङ्गलवर्णोपेतः इत्यादयः अपि तस्य अर्थाः । बिभर्ति इति बभ्रुः । [डु भृञ् (धारण-पोषणयोः) + कुः] ऋकारेण सह स्थितः 'भ'कारः महाप्राणः । अल्पप्राणोपेतः असाधुः । अतः 'बभ्रुवाहनः' इत्यत्रापि रेफेण सह स्थितः (भ्र) महाप्राणः एव स्यात् ।

७९. 'दुर्वासाः' इत्यत्र 'दुर्' इति प्रादिः । 'वासस्' इत्येषः सकारान्तः शब्दः । 'दुर्निन्दितं वासः वस्त्रं यस्य सः' इति, 'दुर्दुष्टं निगूढं वासः इव धर्मावरणत्वं यस्य सः' इति वा व्युत्पत्तिः 'दुर्वासाः' इत्यस्य । दकारोत्तरस्य उकारस्य न दीर्घः । अतः 'दूर्वासाः' इति रूपम् असाधु । स च शब्दः सकारान्तः, न तु अकारान्तः । अतः 'दुर्वासः' इति रूपम् अपि असाधु ।

८०. प्रसादनं नाम अलङ्करणं स्वच्छकरणं, सन्तोषणं वा । तत्र धातुः विशरणाद्यर्थकः 'षद्‌लृ' । अतः दकारः तत्र अल्पप्राणः एव । उपकरणाद्यर्थके 'साधन'शब्दे तु 'ध'कारः (महाप्राणः) । तत्र संसिद्ध्यर्थकः 'साध'धातुः ।

८१. पत्रस्य (कागदस्य भागः) (पुरोभागः पृष्ठभागः वा) शरीरस्य

| | |
|---|---|
| ८२. कुष्टः | कुष्ठः |
| ८३. वैढूर्यम् | वैडूर्यम् |
| ८४. विषकलितः | विशकलितः |
| ८५. याञ्चा | याच्ञा |
| ८६. विष्टा | विष्ठा |
| ८७. लोष्ठम् | लोष्टम् |

---

पश्चार्धः वा अत्र अभिप्रेतः । तत्र च 'पृष'धातोः (सेचनार्थकस्य) यक् निपातनात् । अतः महाप्राणः (ठकारः) एव प्रयोक्तव्यः । अल्पप्राणे प्रयुक्ते तु क्तप्रत्ययान्तता सिद्ध्येत् (पृषधातोः प्रच्छधातोः वा) । स च अत्र न अभिप्रेतः । कागदस्य पश्चार्धार्थे 'पुट'शब्दोऽपि प्रयोक्तुं शक्यः ।

८२. कुष्ठं नाम रोगविशेषः । स च शब्दः महाप्राणोपेतः (ठकारोपेतः)। कृष्णाति अङ्गम् - कृष (निष्कर्षे) + क्थन् । अल्पप्राणयुक्तः (टकारयुक्तः) शब्दः असाधुः ।

८३. महाप्राणोपेतं रूपम् असाधु । मणिविशेषः वैडूर्यपदेन निर्दिश्यते ।

८४. सम्यक् विमृष्टः इत्यर्थे प्रयुज्यते एषः शब्दः । माघस्य प्रयोगो यथा - 'इति विशकलितार्थामौद्धवीं वाचमेनाम्' (२.११८) शकारः अत्र तालव्यः । मूर्धन्ये (षकारे) प्रयुक्ते तु 'विषयुक्तः' इत्यस्य अर्थस्य सिद्धिः । स च अत्र न अभिप्रेतः ।

८५. 'याञ्चा' इति प्रयोगः असाधुः । याचनार्थकता अत्र । याचृधातोः 'नङ्'प्रत्ययः । प्रत्ययः पर एव । यदि प्रत्ययः मित् अभविष्यत् तर्हि 'याञ्चा' इति रूपं सिद्धं स्यात् । तथा तु नास्ति । अतः 'याच्ञा' इत्येव प्रयोक्तव्यम् । (चकारः आदौ, ञकारः अनन्तरम् इत्यर्थः)

८६. मलार्थकः अस्ति 'विष्ठा'शब्दः । तथा हि अमरः - 'गूथं पुरीषं वर्चस्कम् अस्त्री विष्ठाविषौ स्त्रियौ' इति । वितिष्ठते उदरे इति विष्ठा । वि + ष्ठा (गतिनिवृत्तौ) + कः । अतः षकारोत्तरं महाप्राणः (ठकारः) प्रयोक्तव्यः, न तु टकारः (अल्पप्राणः) ।

८७. अत्र षकारोत्तरः टवर्गप्रथमः (टकारः), न तु टवर्गद्वितीयः (ठकारः) । सङ्घातार्थकः 'लोष्ट'धातुः अत्र । अतः महाप्राणयुक्तः

| | |
|---|---|
| ८८. मण्डोदरी | मन्दोदरी |
| ८९. कोष्टकम् | कोष्ठकम् |

---

प्रयोगः दोषाय एव । कोषो यथा - 'लोष्टानि लेष्टवः पुंसि ।' (अमरः)

८८. मन्दम् उदरं यस्याः सा मन्दोदरी । मयसुता रावणमहिषी सा । अत्र डकारश्रवणं नास्ति । (प्रादेशिकभाषायां श्रूयते) नात्र मण्डशब्दस्य सम्बन्धः कोऽपि ।

८९. कृष(निष्कर्षे)धातोः उणादौ थन्प्रत्यये 'कोष्ठः' इति रूपम् । प्रकोष्ठ-धान्यागारादयः अर्थाः तस्य । अल्पः कोष्ठः कोष्ठकम् । प्रत्ययः तु थन् । तस्य ष्टुत्वात् ठकारः । अल्पप्राणोपेतं (टकारोपेतं) रूपं नास्ति ।

एतादृशाः दोषाः प्रायः अनन्ताः । शृङ्गग्राहिकया कानिचन उदाहरणानि अत्र दर्शितानि । एतादृशानां दोषाणां निवारणस्य एक एव परिहारः - अवधानदानम् एव । बोधनीयं, विस्तरेण वक्तव्यं वा न किञ्चिदस्ति । अतः 'अवधानं दीयताम्' इति एतावदेव वदामः एतद्विषये ।

## २.२. लिङ्गम्

संस्कृतभाषायां लिङ्गव्यवस्था अतिविलक्षणा । कः शब्दः किंलिङ्गकः इति ज्ञातुं न शक्यते अल्पेन प्रयासेन । पर्यायपदानि अपि समानलिङ्गकानि न भवन्ति क्वचित् ।

शब्दः पुंसि । तदर्थकम् एव पदं नपुंसके । कर्णः पुंसि । तदर्थकं श्रोत्रं नपुंसके । शरीरं नपुंसके । तदर्थकः कायः पुंसि । एकस्मिन् एव अवयविनि स्थिताः अवयवाः विभिन्नलिङ्गकाः । कायः पुंसि । तत्रत्याः नासिकाजिह्वादयः स्त्रियाम् । उदरनेत्रादयः नपुंसके । अतः एव पण्डिताः अपि लिङ्गविषये मुह्यन्ति बहुधा ।

काव्याध्ययनं, कोषपरिशीलनम्, अभियुक्तानां भाषणस्य सश्रद्धं श्रवणम् इत्यादयः अंशाः लिङ्गज्ञानं वर्धयन्ति । ये व्याकरणं पठितवन्तः ते प्रत्ययं दृष्ट्वा अपि लिङ्गम् ऊहन्ते । घञन्ताः पुंसि, क्तिन्नन्ताः स्त्रियां, ल्युडन्ताः नपुंसके इत्येवं ते लिङ्गं जानीयुः । यत्र प्रत्ययभागः सुस्पष्टः तत्र एतत् शक्यम् । इतरत्र तु तेषाम् अपि कष्टम् अस्ति एव ।

### २.२.१. नियतलिङ्गाः

केचन नियतलिङ्गाः भवन्ति । *विशेष्यनिघ्नानाम् इव येषां लिङ्गं न परिवर्तते ते उच्यन्ते – 'नियतलिङ्गाः' इति । अत्र तादृशानां केषाञ्चित् सङ्ग्रहः कृतः अस्ति ।

**अ) मित्रम्** – ❖ रमेशः मम **मित्रम्** ।

अत्र रमेशः पुंसि । **मित्रशब्दश्च नपुंसके** । पुंलिङ्गवाची अपि कश्चन मित्रशब्दः अस्ति । किन्तु सः सूर्यं बोधयति । सुहृत्पर्यायः मित्रशब्दः नपुंसके एव । स च नियतलिङ्गः । नियतलिङ्गाः यत्र प्रयुज्यन्ते तत्र 'यल्लिङ्गं यद्वचनं...' इत्येतस्य नियमस्य अन्वयः न भवति । अतः रमेशशब्दः पुंसि चेदपि मित्रशब्दः नपुंसके एव स्यात् । तथा हि कोषः – 'मित्रं सुहृदि न द्वयोः' इति मेदिनी ।

**आ) वाहनम्** – ❖ मयूरः षण्मुखस्य **वाहनम्** ।
❖ मूषकः गणेशस्य **वाहनम्** ।

---

* निहन्यते (आश्रीयते) इति निघ्नः । आश्रितः इत्यर्थः । विशेष्यस्य निघ्नः विशेष्यनिघ्नः । विशेष्याधीनः इति तात्पर्यम् ।

**वाहनशब्दः अपि नियतलिङ्गः** । अतः मयूरमूषकौ पुंसि स्तः चेदपि वाहनशब्दः नपुंसके एव । वाहनविषये कोषो यथा - 'सर्वं स्याद्वाहनं यानम्...' इति । (अमरः)

**इ) व्यक्तिः** - ❖ रामो नाम **कश्चन व्यक्तिः** एवम् उक्तवती ।
अत्र रामः पुमान् । **'व्यक्तिः' तु स्त्रियाम्** । अतः तद्विशेषणं स्त्रियां स्यात् । तस्मात् 'कश्चन' इति न, 'काचन' इति प्रयोक्तव्यम् । 'व्यक्तिः' स्त्रियाम् इत्यतः क्रियापदस्थानीयं भूतकृदन्तरूपं स्त्रियाम् (उक्तवती इति) अस्ति । 'उक्तवती' इति पदं यदि न रोचते तर्हि लिङ्गभेदरहितम् 'अवदत्' इति लङ्रूपं प्रयुज्यतां नाम ।
व्यक्तिपदेन अभिधेयः तु पुरुषः एव । तथापि 'व्यक्तिः' स्त्रियाम् एव, नियतलिङ्गत्वात् । एतदत्र स्मर्तव्यं यत् अभिधेयः अर्थः अन्यलिङ्गकः चेदपि अभिधायकं पदम् अन्यलिङ्गकं भवितुम् अर्हति संस्कृतभाषायाम् ।

**ई) बन्दिः/बन्दी** - ❖ **बन्द्या** कारागारात् पलायितम् ।
अत्र **'बन्दी'शब्दः (बन्दिः इति वा) स्त्रीलिङ्गे** । यद्यपि पलायितः कश्चन पुरुषः । तथापि तन्निर्देशाय प्रयुक्तः 'बन्दी' इति शब्दः स्त्रियाम् एव ।

**२.२.२. व्याध्यादयः -**

अन्ये केचन सामान्याः शब्दाः सन्ति, येषां च लिङ्गविषये वयं प्रमादं कुर्मः । ते केचन यथा -

१) सः **व्याध्या** ग्रस्तः अस्ति ।
२) वृत्तस्य **परिधिः** का इति न ज्ञातम् ।
३) अत्र **सन्धिः** न कृता ।
४) तेन काचन **ध्वनिः** श्रुता ।
५) जनैः **सेतुः** निर्मिता ।

एतेषु वाक्येषु प्रयुक्ताः व्याधि-परिधि-सन्धि-ध्वनि-सेतवः स्त्रीलिङ्गभ्रमं जनयन्ति । अतः एव एतेषु वाक्येषु तेषां स्त्रीत्वं प्रयुक्तम् । किन्तु ते सर्वे शब्दाः पुंसि एव । तस्मात् एतानि सर्वाणि वाक्यानि असाधूनि ।
**'व्याधिना ग्रस्तः' 'परिधिः कः ?' 'सन्धिः कृतः' 'ध्वनिः**

**श्रुतः' 'सेतुः निर्मितः'** इत्येवं प्रयोगाः साधवः ।
एतेषां विषये कोषप्रामाण्यं यथा -
१. *व्याधिः* - स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः । (अमरः)
२. *परिधिः* - परिवेषस्तु परिधिः । (अमरः)
३. *सन्धिः* - सन्धिर्ना... (अमरः)
४. *ध्वनिः* - शब्दे निनादनिनदध्वनिध्वानरवस्वनाः । (अमरः)
५. *सेतुः* - सेतुरालौ स्त्रियां पुमान् । (अमरः)
(सेतुः पुमान् इत्यर्थः)

## २.२.३. उभयलिङ्गाः -

कोशे लिङ्गानुशासनादिषु उभयलिङ्गता बहुधा उच्यते एव । ते सर्वे अत्र न दर्श्यन्ते । केचन उभयलिङ्गकाः व्यावहारिकाः शब्दाः अत्र दर्श्यन्ते ।

१. तेन स्व**कुटुम्बं** कष्टेन पोष्यते स्म ।
कुटुम्बशब्दः पुंसि नपुंसके च इति वदति कोषः । अतः उभयथा अपि प्रयोगः साधुः ।
२. गृहिण्या विविधाः **शाकाः** क्रीताः ।
शाकशब्दः पुंसि नपुंसके च । अतः **'शाकः क्रीतः' 'शाकं क्रीतम्'** इति उभयथा अपि प्रयोगः साधुः । कोशप्रामाण्यं यथा - *'अस्त्री शाकं हरितकम्.....'* इति ।
३. सः **अर्गलाम्** अपसार्य द्वारस्य कवाटम् उद्घाटितवान् ।
अर्गला अत्र स्त्रियां प्रयुक्तः । सः नपुंसके अपि । तथा हि कोशः - *'तद्विष्कम्भोऽर्गलं न ना'* (अमरः) इति ।
४. सः **चषकः** उत्तमः अस्ति ।
'चषक'शब्दः पुंसि नपुंसके च । तथा हि कोषः - *'चषकोऽस्त्री पानपात्रम्'* (अमरः) इति ।
५. एषः सभा**मण्डपः** अतिविशालः अस्ति ।
'मण्डप'शब्दः पुंसि नपुंसके च । कोषो यथा - *'मण्डपोऽस्त्री जनाश्रयः'* (अमरः) इति ।
६. तेन नगरगमनाय **शकटः** आरूढः ।

'शकट'शब्दः पुंसि नपुंसके च । तथा हि कोषः - *'क्लीबेऽनः शकटोऽस्त्री स्यात्'* (अमरः) इति ।

०७. वृक्षे पक्षिभिः **नीडः** रचितः ।
'नीड'शब्दः पुंसि नपुंसके च । तथा हि कोषः - *'कुलायो नीडमस्त्रियाम्'* (अमरः) इति ।

०८. एषः **तडागः** कमलैः शोभते ।
**'तडाग'**शब्दः पुंसि नपुंसके च । कोषप्रामाण्यं यथा - *'पद्माकरस्तडागोऽस्त्री'* (अमरः) इति ।

०९. अपघातकारणतः तस्य पादे **व्रणः** जातः ।
'व्रण'शब्दः पुंसि नपुंसके च । तथा हि कोशः - *'व्रणोऽस्त्रियाम् ईर्ममरुः क्लीबे'* (अमरः) इति ।

१०. नदीतीरे क्रीडता बालेन **पङ्कः** स्पृष्टः ।
'पङ्क'शब्दः पुंसि नपुंसके च । कोषो यथा - *'अस्त्री पङ्कं पुमान् पाप्मा'* (अमरः) इति ।

११. मुनिना **कमण्डलुः** स्पृष्टः ।
'कमण्डलु'शब्दः पुंसि नपुंसके वा । तथा हि कोषः - *'कमण्डलुः स्यात्करके न स्त्री ना प्लक्षपादपे'* - मेदिनी ।

अन्ये अपि केचन उभयलिङ्गकाः व्यावहारिकाः शब्दाः यथा -

| | |
|---|---|
| ☛ पार्श्वः/पार्श्वम् | पार्श्वमस्त्री (अमरः) |
| ☛ कण्टकः/कण्टकम् | कण्टको न स्त्रियां.. (मेदिनी) |
| ☛ मोदकः/मोदकम् | मोदकः खाद्यभेदेऽस्त्री (मेदिनी) |
| ☛ मण्डः/मण्डम् | मण्डोऽस्त्री सारपिच्छयोः |
| ☛ तिलकम्/तिलकः | तमालपत्रतिलकचित्रकाणि विशेशकम् । द्वितीयं च तुरीयं च न स्त्रियाम् । (अमरः) |
| ☛ किरीटम्/किरीटः | किरीटं पुन्नपुंसकम् । (अमरः) |
| ☛ फलकः/फलकम् | फलकोऽस्त्री (अमरः) |
| ☛ पीठः/पीठम् | विष्टरः पीठमस्त्रियाम् (त्रिकाण्डशेषः) |
| ☛ सौधः/सौधम् | सौधोऽस्त्री राजसदनम् (अमरः) |
| ☛ खलीनः/खलीनम् | कविका तु खलीनोऽस्त्री (अमरः) |
| ☛ पुच्छः/पुच्छम् | पुच्छोऽस्त्री लूमलाङ्गूले (अमरः) |

- तारका/तारकम् — नक्षत्रे चाक्षिमध्ये च तारकं तारकापि च (शाश्वतः)
- वलयः / वलयम् — वलयः कण्ठरोगे ना कङ्कणे पुंनपुंसकम् (मेदिनी)
- शूर्पः / शूर्पम् — प्रस्फोटनं शूर्पमस्त्री (अमरः)
- अङ्गारः / अङ्गारम् — अथ न स्त्री स्यादङ्गारः (अमरः)
- गोमयः / गोमयम् — गोविट् गोमयमस्त्रियाम् (अमरः)
- नूपुरः / नूपुरम् — पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् (अमरः)
- लोहः / लोहम् — लोहोऽस्त्री शस्त्रके (मेदिनी)
- मणिः (पुं / स्त्री) — मणिः स्त्रीपुंसयोरश्मजातौ (मेदिनी)
- क्रकचः / क्रकचम् — क्रकचः करपत्रेऽस्त्री (मेदिनी)

## २.२.४. वृक्षः पुंसि, फलं नपुंसके

१) गृहिण्या दश **आम्राः** क्रीताः ।

२) कृषिकेण दश **आम्राः** आरोपिताः ।

अत्र वाक्यद्वये अपि आम्रशब्दः पुंसि प्रयुक्तः । प्रथमे वाक्ये सः 'फल'वाचकः । द्वितीये च वाक्ये 'वृक्ष'वाचकः । फलवाचके पुंलिङ्गप्रयोगः दोषाय । अतः प्रथमं वाक्यम् अशुद्धम् । एकः एव शब्दः संस्कृतभाषायां फलं वृक्षं च वदति ।

यथा - आम्रशब्दः ।

**वृक्षवाचकत्वे तस्य पुंलिङ्गता । फलवाचकत्वे च नपुंसकलिङ्गता** । अतः एव 'आम्रवृक्षः' इति वक्तव्यं नास्ति । 'आम्रः' इत्येतावता एव अलम् । एवमेव 'आम्रफलम्' इति वक्तव्यं नास्ति । 'आम्रम्' इत्येतावता अलम् ।

*'फले लुक्' (४.३.१६३)* इति सूत्रेण विकारावयवप्रत्ययस्य (मयटः) फले लुक् । लोकात् नपुंसकता च ।

अतः - आम्रः = आम्रवृक्षः

आम्रम् = आम्रफलम्

एवमेव -

| वृक्षः (पुंसि) | फलम् (नपुंसके) |
|---|---|
| पनसः | पनसम् |
| आमलकः | आमलकम् |
| जम्बीरः | जम्बीरम् |
| पूगः | पूगम् |
| नारिकेलः | नारिकेलम् |
| नारङ्गः | नारङ्गम् |
| दाडिमः | दाडिमम् |
| खर्जूरः | खर्जूरम् |
| वृन्ताकः | वृन्ताकम् |

किन्तु सर्वे फलवाचकाः नपुंसके एव इति न नियमः । द्राक्षा, भल्लातकी, एला इत्यादयः स्त्रियाम् । कलायः पुंसि । एवम् इतरत्रापि ऊह्यम् ।

## २.२.५. शेषः

उक्तात् अन्यः शेषः । लिङ्गविषये पूर्वं ये अंशाः उक्ताः तेभ्यः अन्येषाम् अपि केषाञ्चन शब्दानां विषये अस्माभिः अवधातव्यं भवति । ते केचन यथा -

१. जलेन सिक्तेभ्यः बीजेभ्यः **अङ्कुराणि** उत्पद्यन्ते ।
'अङ्कुराणि' इति दोषाय । **'अङ्कुराः'** इति पुंसि प्रयोक्तव्यम् ।
तथा हि कोषः - *'अङ्कुरोऽभिनवोद्भिदि'* इति । (अमरः)

२. यथा **बीजः** तथा खलु भवति अङ्कुरः ?
बीजशब्दः नपुंसके । *'हेतुर्ना कारणं बीजम्'* इति अमरः । अतः **'बीजम्'** इति नपुंसके प्रयोक्तव्यं, न तु पुंसि ।

३. एतत् नगरं धनिनाम् **आकरम्** अस्ति ।
**'आकरः** अस्ति' इति पुंसि प्रयोक्तव्यम् । आकरशब्दः पुंसि ।
तथा हि अमरः - 'खनिः स्त्रियाम्, आकरः स्यात्' इति ।

४. अयं पण्डितः ज्ञानानाम् **आगारः** अस्ति ।
**'आगारम्'** इति नपुंसके प्रयोगः साधुः । आगारशब्दः नपुंसके ।
अमरकोषो यथा - *'भवनागारमन्दिरम्'* इति ।

५. **कारागारः** एव श्रीकृष्णस्य जन्मस्थानम् आसीत् ।

**'कारागारम्'** इति प्रयोक्तव्यम् । आगारशब्दः नपुंसके इति पूर्वम् उक्तम् एव ।

०६. पाठ्यपुस्तकविषये श्वः **कार्यागारः** भविष्यति ।
**'कार्यागारम्'** इति प्रयोक्तव्यम् । कार्यस्य आगारम् = कार्यागारम् । समासे उत्तरपदम् 'आगारं' नपुंसके, न तु पुंसि ।

०७. अत्रत्यः पुस्तक**भण्डारः** अत्युत्तमः अस्ति ।
'भण्डारः' इति अपशब्दः । 'पुस्तक**भाण्डारम्**' इति, 'पुस्तक-**भाण्डागारम्**' इति वा प्रयोक्तव्यम् ।
'भण्डार'शब्दः संस्कृते नास्ति । अपेक्षितस्य अर्थस्य वाचकः 'भाण्डार'शब्दः अस्ति । सः नपुंसके । तस्मिन्नेव अर्थे **'भाण्डागारम्'** इत्यपि शब्दः अस्ति । सोऽपि नपुंसके एव ।

०८. संस्कृतस्य **महिमा** केन वा वर्णयितुं **शक्या** ?
'महिम'शब्दः नकारान्तः पुंलिङ्गश्च, न तु स्त्रीलिङ्गः । अतः **'महिमा** वर्णयितुं **शक्यः'** इति प्रयोगः करणीयः । आकारान्त-भ्रान्त्या केचन तस्य स्त्रीत्वं चिन्तयन्ति ।

०९. नगरस्य **अन्तिमे सीम्नि** कश्चन संन्यासी वसति स्म ।
'अन्तिमे सीम्नि' इति प्रयोगः दोषाय । **'अन्तिमायां सीम्नि'** इति प्रयोक्तव्यम् । 'सीमन्'शब्दः नकारान्तः । स च स्त्रियाम् । **'सीमा'** इति आकारान्तोऽपि अस्ति । सोऽपि स्त्रियाम् एव । तथा हि कोषः - *'सीमसीमे स्त्रियामुभे' (अमरः)* इति । अतः 'नकारान्तः पुंसि, आकारान्तः स्त्रियाम्' इति भ्रमः मास्तु । उभौ अपि स्त्रियाम् एव ।

१०. बालिकाहस्तात् पतितं **दर्पणं भग्नम्** ।
'पतितः **दर्पणः भग्नः'** इति पुंसि प्रयोक्तव्यम् । यतः दर्पणशब्दः पुंसि । अमरमाला वदति - 'दर्पणः मुकुरः प्रोक्तः' इति ।
*'लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति'* इति हितोपदेश-कारादीनां प्रयोगाः अपि अत्र उपोद्बलकाः सन्ति ।
किन्तु धर्मसेनस्य कश्चन प्रयोगः दृश्यते - *'किं तद्दर्पणमस्ति यत्र सकलम्...'* इति । अत्र दर्पणस्य नपुंसकता प्रयुक्ता इति तु स्फुटम् । किन्तु अयं क्काचित्कः प्रयोगः । अतः प्रमाणभूतं

भवितुं न अर्हति । तस्मात् दर्पणशब्दस्य पुंसि प्रयोगः एव शिष्टसम्मतः ।

११. 'बुद्धिर्यस्य बलं तस्य' इति **आभाणकम् एकं** श्रूयते ।
'आभाणक'शब्दः पुंसि । अतः **'आभाणकः एकः** श्रूयते' इति प्रयोक्तव्यम् । येषु कोषेषु आभाणकशब्दः दर्शितः तेषु सर्वत्र तस्य पुंस्त्वम् एव दर्शितम्, न तु नपुंसकत्वम् ।

१२. प्रथमस्थानं प्राप्तवते **बहुमानं प्रदत्तम्** ।
**'बहुमानः प्रदत्तः'** इति वक्तव्यम् । बहुमानशब्दः पुंसि । सम्मानः, अधिकगौरवम् इत्यादयः अर्थाः यथा, तथैव 'पारि-तोषिकम्' इत्यपि अर्थः अस्ति तस्य ।

१३. धेनुः **किसलयान्** खादति ।
'किसलयान्' इति दोषाय । **'किसलयानि'** इति नपुंसके प्रयोक्तव्यम् । किसलयशब्दः नपुंसके । तथा हि अमरः - *'पल्लवोऽस्त्री किसलयम्'* इति ।

१४. कालिदासः **कविरत्नः** अस्ति ।
**'कविरत्नम्'** इति प्रयोक्तव्यम् । कविः रत्नम् इव इति उपमित-समासः । *'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते'* इति हि प्राचीनोक्तिः । *'रत्नं स्वजातिश्रेष्ठे स्यात् मणौ..'* इति हैमकोषः । अतः रत्नशब्दः नपुंसके । उपमितसमासे (कर्मधारये) उत्तरपदस्य प्राधान्यम् । तस्मात् रत्नशब्दस्य यत् लिङ्गं तदेव भवति समस्त-पदस्यापि । रत्नशब्दः नपुंसके इत्यतः कविरत्नशब्दः अपि नपुंसके एव । तस्य नियतलिङ्गत्वात् कालिदासपदस्य विशेषणं सत् अपि तत् नपुंसके एव ।

१५. **अहोरात्रं** दिनम् इति उच्यते ।
**'अहोरात्रः'** इति प्रयोक्तव्यम् । 'अहोरात्र'शब्दः पुंसि । अहश्च रात्रिश्च अनयोः समाहारः अहोरात्रः । *'रात्राह्नाहाः पुंसि'* (२.४.२९) इति सूत्रेण अहोरात्रशब्दस्य पुंस्त्वम् ।
'अहोरात्रं पठति' इत्यादौ तु तस्य क्रियाविशेषणता । तन्नाम कर्मत्वम् । कर्मणः द्वितीया लोके सिद्धा एव । किन्तु तत् नपुंसकताभ्रमं जनयति कदाचित् ।

१६. **सन्तानं** नास्तीत्यतः तेन महान् खेदः प्राप्तः ।
**'सन्तानः'** इति पुंसि प्रयोक्तव्यम् । सन्तानशब्दः पुंसि । तथा हि कोषः - *'वंशोऽन्ववायः सन्तानः'* (अमरः) इति ।

१७. कार्यक्रमस्य आयोजकैः **चतुष्पथः** सम्यक् अलङ्कृतः ।
'चतुष्पथः अलङ्कृतः' इति प्रयोगः दोषाय । **'चतुष्पथम् अलङ्कृतम्'** इति प्रयोक्तव्यम् । यद्यपि 'पथिन्'शब्दः (प्रथमायां 'पन्थाः' इति रूपम्) पुंलिङ्गे, तथापि चतुष्पथशब्दः तु नपुंसके । *'पथः सङ्ख्याव्ययादेः'* इति वार्तिकेन सङ्ख्यादेः परस्य कृतसमासान्तस्य पथशब्दस्य नपुंसकता विहिता ।

१८. तपसि निरतस्य मुनेः पुरतः अप्सराः **गोचरा** जाता ।
**'गोचर'शब्दः पुंसि** । *'गोचरसञ्चर...' (३.३.११९)* इति सूत्रेण गोचरशब्दः घान्तः निपातितः । घान्तः पुंसि एव । अतः 'अप्सराः मुनेः दृष्टेः गोचरः' इति, 'अप्सराः दृष्टेः गोचरतां गता' इति वा प्रयोगः करणीयः ।

१९. **सुखहेतूनि** भोगसाधनानि को वा न इच्छेत् ?
**'सुखहेतून्'** इति प्रयोक्तव्यम् । हेतुशब्दः पुंसि *'हेतुर्ना कारणं बीजम्'* इति अमरः । 'सुखहेतुः' इत्यत्र षष्ठीतत्पुरुषः (सुखस्य + हेतुः) । तत्पुरुषे उत्तरपदस्य यत् लिङ्गं तदेव लिङ्गं समस्तपदस्यापि । अतः सुखहेतुशब्दस्यापि पुंस्त्वम् एव युक्तम् । बहुव्रीहिसमासस्तु न, येन अत्र अन्यपदार्थप्राधान्यम् उच्येत । 'सुखहेतून् भोगसाधनानि' इत्यत्र यदि मनः न रमते तर्हि 'सुख-हेतुभूतानि' इति प्रयोगः क्रियतां, यत्र च विशेषणविशेष्यभावः स्फुटतया दृश्येत ।

२०. एवमेव यदि **पापः** क्रियते तर्हि भवता **नरकं** प्राप्यते ।
'नरकम्' इति प्रयोगः दोषाय । 'पाप'शब्दस्य पुंसि प्रयोगः अपि दोषाय । **'नरकः'** इति पुंसि प्रयोक्तव्यम् ।
नरकशब्दः पुंसि एव । अमरकोषप्रामाण्यं यथा - 'स्यान्नारकस्तु नरको निरयो...' इति । पापशब्दः नपुंसके । कोषो यथा - **पापं** किल्बिषकल्मषम् । (अमरः)

२१. हिमालये सर्वत्र **हिमः** एव परिदृश्यते ।

हिमशब्दः नपुंसके । अतः **'हिमम्'** इति प्रयोक्तव्यम् । *'तुषारः तुहिनं हिमम्'* इति हि अमरः ।

२२. मम कार्ये **बहूनि विघ्नानि** आगतानि ।
**'बहवः विघ्नाः आगताः'** इति प्रयोक्तव्यम् । विघ्नशब्दः पुंसि । *'विघ्नोऽन्तरायः प्रत्यूहः'* इति अमरः । अतः तस्य नपुंसकता न भवति कथमपि ।

२३. पूर्णा **कुक्षिः** यस्य सः पूर्णकुक्षिः ।
'पूर्णः कुक्षिः' इति प्रयोक्तव्यम् । कुक्षिशब्दः पुंसि । 'पिचण्डकुक्षी जठरोदरं तुन्दम्' इति अमरः ।

२४. धनिकेन **कम्बलानि** वितीर्णानि ।
'कम्बलाः वितीर्णाः' इति प्रयोक्तव्यम् । कम्बलशब्दः पुंसि । तथा हि अमरः - 'समौ रल्लककम्बलौ ।''

२५. अरण्ये **कुटीराणि** सन्ति ।
'कुटीराः' इति प्रयोक्तव्यम् । कुटीरशब्दः पुंसि । ह्रस्वा कुटी + रः - कुटीरः । एषः पुंसि रूढः । विषयेऽस्मिन् कौमुद्याः तत्त्वबोधिनीव्याख्याने प्रामाण्यं यथा - *'कुटीशमीशुण्डाभ्यां रः (५.३.८८) स्वार्थिकाः प्रकृतितः लिङ्गमतिवर्तन्ते इति पुंलिङ्गतात्र सङ्गच्छते ।'*

२६. वसन्त**ऋतुः** उपस्थिता ।
'उपस्थितः' इति प्रयोक्तव्यम् । यतः ऋतुशब्दः पुंसि, न तु स्त्रियाम् । अमरकोषे प्रयोगो यथा - 'षडमी ऋतवः पुंसि...' । मेदिनीप्रामाण्यं यथा - 'ऋतुर्वर्षादिषट्सु च । आर्तवे मासि च पुमान् ।'

२७. तस्य **ललाटः** विशालः अस्ति ।
'ललाटं विशालम्' इति प्रयोक्तव्यम् । ललाटशब्दः नपुंसके । 'भाले गोध्यलिकालीकललाटानि' इति हैमनाममालायाम् ।

२८. तस्मिन् राज्ये **सुभिक्षा** अवर्तत ।
'सुभिक्षम्' इति प्रयोक्तव्यम् । सुभिक्षं नाम धान्यसमृद्धिः । तस्मिन् अर्थे नपुंसकता । प्रयोगो यथा -

◆ सुभिक्षाणि विचित्राणि — पञ्चतन्त्रम् - ४.७८

◆ सुवृष्टिश्चेदभविष्यतदा सुभिक्षमभविष्यत् - कौमुदी

## २.३. उत्तरपदे...

कानिचन पदानि उत्तरपदत्वेन प्रयुज्यन्ते । तेषां लिङ्गविषये प्रमादः कृतः दृश्यते कदाचित् । अतः ते अत्र उच्यन्ते -

### २.३.१. मात्रादयः -

**अ. मात्रम्** - महाराजस्य **एकमात्रः** पुत्रः वीरवर्मा ।

अत्र **एकमात्रं पुत्रः** इति प्रयोक्तव्यम् । मात्रशब्दः नपुंसके । सः नियतलिङ्गः । अतः नपुंसके एव तस्य प्रयोगः । तथा हि अमरः - 'मात्रं कार्त्स्न्येऽवधारणे' इति ।

मात्रशब्दः त्रिचतुरेषु अर्थेषु प्रयुज्यते । यथा -

* अवधारणार्थे - एकः एव एकमात्रम्, क्षणः एव क्षणमात्रम् ।
* साकल्यार्थे - प्राणिमात्रं न हिंसति ।
* मानार्थे - रेखामात्रम्, कोशमात्रम्..(अत्र मात्रच्प्रत्ययः)

**आ. आस्पदम्** - एषः **सन्तोषास्पदः** विषयः ।

**'विषयोऽयं सन्तोषास्पदम्'** इति प्रयोक्तव्यम् ।

**आस्पदशब्दः नपुंसके** । स च नियतलिङ्गकः । अतः विशेष्यभूते 'विषय'शब्दे पुंसि सत्यपि विशेषणभूतः आस्पदशब्दः नपुंसके एव ।

**इ. प्रायः** - प्रायः पाठः **समाप्तप्रायः** ।

उत्तरपदत्वेन प्रयुज्यमानः **प्रायशब्दः विशेष्यनिघ्नः** । अतः सः विशेष्यस्य लिङ्गानुगुणं रूपभेदं प्राप्नोति । यथा -

- पुंसि - पाठः **समाप्तप्रायः** ।
- स्त्रियां - रात्रिः **गतप्राया** ।
- नपुंसके - **समाप्तप्रायं** कार्यम् ।

'प्रायो बाहुल्यतुल्ययोः' इति कोषात् प्रायशब्दस्य द्वौ अर्थौ । तौ च -

* बाहुल्ये - कमलामोदप्रायाः वनानिलाः ।
* तुल्ये - अमृतप्रायं वचनम् ।

**२.३.२. व्याघ्रपुङ्गवादयः -**

**अ)** व्याघ्र-पुङ्गव-ऋषभ-कुञ्जर-सिंह-शार्दूल-नागादयः उत्तरपदत्वेन प्रयुज्यमानाः श्रेष्ठार्थतां व्यञ्जयन्ति । तदवसरे ते स्वार्थं जहति । एते तु पुंसि भवन्ति । उदाहरणानि यथा -

- पुरुष**व्याघ्रः** ।
- कवि**पुङ्गवः** ।
- पण्डित**र्षभः** ।
- कवि**कुञ्जरः** ।
- पुरुष**सिंहः** ।
- नर**शार्दूलः** ।

एते श्रेष्ठार्थगोचराः इत्यत्र अमरकोषः प्रमाणम् । तथा हि -

*स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।*
*सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः* ।। इति ।।

एतदत्र स्मर्तव्यं यत् व्याघ्रसिंहादीनां पशुविशेषवाचकत्वम् अत्र नार्थः, अपि तु श्रेष्ठार्थवाचकता तेषाम् ।

**आ)** मतल्लिकादयः शब्दाः अपि प्रशस्तवाचकाः सन्ति । तद्यथा -

प्रशस्तः पुरुषः = पुरुष**मतल्लिका**
प्रशस्तः ब्राह्मणः = ब्राह्मण**मचर्चिका**
प्रशस्तः मनुष्यः = मनुष्यो**द्धः**[1]
प्रशस्ता कुमारी = कुमारी**तल्लजः**
प्रशस्तः पण्डितः = पण्डित**प्रकाण्डम्**

मतल्लिकादयः नियतलिङ्गाः[2] । अतः 'पुरुषमतल्लिका'शब्दः स्त्रीलिङ्गे वर्तमानोऽपि प्रशस्तं पुरुषं (पुमांसं) द्योतयति । एतेषु प्रकाण्डशब्दः नपुंसके अस्ति ।

एते प्रशस्तवाचकाः इत्यत्र अमरकोषः एव प्रमाणम् । तद्यथा -

*मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ ।*
*प्रशस्तवाचकान्यमूनि....*।। इति ।

कथमत्र समासः इत्यत्र सुधाख्या अमरकोषव्याख्या वदति -

*''मतल्लिकादीनां रूढिशब्दत्वात् 'प्रशंसावचनैश्च' (२.१.६६) इति समासः । कृष्णसर्प-वाप्यश्वादिवदेते नित्यसमासाः । उद्धः*

---

१. 'उद्धो हस्तपुटे वह्नौ श्लाघायां देहजानिले' - हैमः ।
२. 'मतल्लिकादयः अव्युत्पन्नाः' इति प्राञ्चः । अमरे व्युत्पत्तिः अपि दर्शिता दृश्यते ।

*तु असमासोऽप्यस्तीति स्वाम्यादयः''* इति ।

इ) **पुरुषाणां पुङ्गवः** अयं सर्वजनप्रियः ।

अत्र **'पुरुषपुङ्गवः'** इति समस्तं रूपम् एव प्रयोक्तव्यम् । पुङ्गव-शब्दः यदा उत्तरपदं भवति तदा एव श्रेष्ठार्थवाचकः भवति । समासे अकृते तु तस्य न तादृशं सामर्थ्यम् । अतः पुङ्गवशब्दस्य श्रेष्ठार्थत्वम् अपेक्ष्यते चेत् समासः करणीयः एव । अमरकोषोऽपि एतदेव वदति - *'स्युरुत्तरपदे....'* इति । चारुदेवशास्त्रिणः अपि स्वीये 'शब्दापशब्दविवेक'ग्रन्थे एतम् एव आशयं पुष्टी-कुर्वन्ति ।

## २.३.३. चरणपादादयः -

❖ तेन **आचार्यचरणात्** विद्या अधिगृहीता ।

❖ **आचार्यपादः** शिष्यम् आशीर्वादेन अनुगृहीतवान् ।

**'आचार्यचरणेभ्यः' 'आचार्यपादाः'** इति बहुवचनान्तं रूपं वक्तव्यम् । चरणपादादयः तत्पुरषे उत्तरपदत्वेन प्रयुज्यमानाः बहुवचनान्ताः एव पूजार्हतां द्योतयन्ति, न तु एकवचनान्ताः । एतद्विषये वदन्ति वाग्व्यवहारादर्शे चारुदेवशास्त्रिपादाः - *'तत्पुरुषे समास उत्तरपदं चरणशब्दो बहुत्वे वर्तमानः पूजावचनो भवति, न त्वेकत्वे'* इति ।

## २.३.४. वरसरोवरौ

अ) **वरम्** - वरशब्दः व्यवहारे बहुधा प्रयुज्यते । विविधाः अर्थाः अपि तस्य । तेषु प्रसिद्धाः -

१. तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः ।
२. जामात्रर्थकः विवाहादिषु प्रयुज्यमानः ।
३. श्रेष्ठः ।
४. मनाक्प्रियम् ।

प्रथमे द्वितीये च अर्थे वरशब्दः पुंसि । तृतीये अर्थे सः विशेष्य-निघ्नः । तन्नाम त्रिषु वर्तमानः । चतुर्थे अर्थे सः नपुंसक-लिङ्गः अव्ययं वा । तथा हि मेदिनी - *'मनागिष्टे वरं क्लीबं*

---

१. 'विरोध'शब्दः पुंसि अस्ति चेदपि 'वर'शब्दः पुंसि नास्ति इत्येतत् परिशीलयताम् ।

*केचिदाहुस्तदव्ययम्'* इति । अतः एव किरातार्जुनीये प्रयोगः -
'वरं[1] विरोधोऽपि समं महात्मभिः' इति ।
लौकिकप्रयोगो यथा -
तस्य सहवासतोऽपि दूरे स्थितिः एव वरम् ।
मनाक्प्रियार्थे वरशब्दः एकवचनान्तोऽपि । (यदा तस्य अनव्ययत्वम् अङ्गीक्रियते तदा )
तद्यथा -
वरं[2] हि भुक्तानि तृणान्यरण्ये.....

- बुद्धचरितम् -१५३

**आ) सरोवरः -**

सरश्शब्दः नपुंसके इति सर्वेऽपि जानन्ति । सरोवरशब्दः किंलिङ्गकः इति पृष्टे 'नपुंसकलिङ्गकः' इति वदेयुः बहवः । वस्तुतस्तु सः पुंसि । प्रसिद्धाः वैयाकरणाः चारुदेवशास्त्रिणः वदन्ति - *'पुंसि एव अयं सरोवरशब्दः प्रयुज्यते । लोकाश्रयत्वात् लिङ्गस्य'* इति । अतः 'सरोवरं मया दृष्टम्' 'सरोवरं सुन्दरम् अस्ति' इत्यादयः प्रयोगाः असाधवः भवन्ति ।

## २.३.५. 'मल्लिकागोपाल'शब्दः पुंसि एव ?

आधुनिके काले महिलानां नामानि श्रूयन्ते -

मल्लिका गोपाल
सरस्वती दिवाकर
वन्दना नागराज इत्यादीनि ।

अत्र मल्लिका-सरस्वती-वन्दनादीनि महिलानां नामानि । ताः आधुनिकं व्यवहारम् अनुसरन्त्यः स्वनाम्ना पत्युः नाम अपि योजयन्ति । ततः [3]'मल्लिकागोपाल'-'सरस्वतीदिवाकर'-'वन्दनानागराज'प्रभृतीनि नामानि सिध्यन्ति । एतानि अखण्डपदानि, प्रकृतिप्रत्ययरहितानि च

---

२. 'भुक्तानि' इति बहुवचने अस्ति चेदपि 'वर'शब्दः एकवचने इत्येतत् परिशील्यताम् ।
३. 'मल्लिका' इत्येतावता एव अलम् । किं 'मल्लिकागोपाल' इत्यस्याः विदेशीय-व्यवहानुकारिण्याः आनुपूर्व्याः अनुसरणेन इति केचन वदेयुः । तादृशस्य व्यवहारस्य औचित्यं नात्र चर्च्यते । तदर्थं न एषा भूमिः अपि । यः व्यवहारः दृश्यते तस्य विषये चिन्त्यते अत्र ।

इति चिन्तनीयं भवति प्रायः ।
अत्र 'मल्लिका'शब्दोऽपि व्युत्पन्नः । 'गोपाल'शब्दोऽपि तादृशः एव । किन्तु 'मल्लिकागोपाल' इति या आनुपूर्वी दृश्यते तया युक्तं पदं साधयितुम् उपोद्बलकं समासशास्त्रं न किञ्चन अस्ति । अतः तत्पदस्य प्रकृतिप्रत्ययरहितत्वं चिन्तनीयं स्यात् । तथैव एकव्यक्तिबोधकं तत् पदम् अखण्डम् एव स्यात् । (लेखनावसरे द्वयोः पदयोः मध्ये स्थलावकाशदानात् सखण्डता इति भ्रमः मास्तु । वैशद्यदर्शनाय स्थलावकाशः दर्शितः स्यात् । तावता अखण्डता तु न अपगच्छति ।)
एवं 'मल्लिकागोपाल' इति पदं सिद्धम् । इदानीं प्रश्नः उदेति – 'एतस्य पदस्य किं लिङ्गम् ?' इति । वाच्या व्यक्तिः तु स्त्री । अतः स्त्रीत्वं मनसि निधाय किं 'मल्लिकागोपाला' इति आकारान्ततां कुर्याम, उत गोपालशब्दगतस्य पुंस्त्वं मनसि निधाय 'मल्लिकागोपालः' इति वदेम ? पुंस्त्वे कृते स्त्रियाः बोधः कथं भवेत् ?
स्त्रीत्वे कृते अन्तिमपदगतं पुंस्त्वं बाधते, पुंस्त्वे कृते तद्वाच्यव्यक्तिगतं स्त्रीत्वं बाधते । एतादृशे स्थले का व्यवस्था स्यात् भाषायाः ?
बेङ्गलूरुनगरे स्थिताः वैयाकरणवरेण्याः श्रीमन्तः रङ्गनाथशर्माणः एतस्य उत्तररूपेण अवदन् – ''पुंस्त्वम् एव युक्तम्'' इति । 'कथम् ?' इति पृष्टाः ते पुनः अवदन् –

> *''लिङ्गव्यवस्था शब्दस्य भवति, न तु अर्थस्य । शब्देन वाच्यस्य अर्थस्य यत्किञ्चित् लिङ्गं स्यात् नाम । शब्दगतं तु लिङ्गं व्याकरणादिविधिम् अनुसरति । गोपालशब्दः पुंसि । अतः मल्लिकागोपालशब्दोऽपि पुंसि एव स्यात् । तत्पदवाच्या व्यक्तिः स्त्री चेदपि न कापि आपत्तिः । व्यक्तिमित्रादीनि पदानि एव अत्र उदाहरणम्''* इति ।

अतः मल्लिकागोपाल-सरस्वतीदिवाकरादीनां शब्दानां पुंस्त्वं युक्तिसहं भवति ।
अथवा 'मल्लिकागोपाल' इत्येतत् अव्युत्पन्नं संज्ञापदम् इति अङ्गीकृत्य तस्य स्त्रीत्वविवक्षां मनसि निधाय आकारान्तता अपि अङ्गीकर्तुं शक्या

इति अपरस्य वैयाकरणविदुषः मतम् । तदा तु 'मल्लिकागोपाला' इत्यपि रूपम् ।

### २.३.६. भारतीसरस्वत्यन्तादीनां पदानां किं लिङ्गम् ?

लोके ये मठाधिपतयः भवन्ति तेषां नामानि '....भारती' '...सरस्वती' इत्येवमादिरूपेण श्रूयन्ते । एतादृशाानां भारती-सरस्वत्यन्तादीनां पदानां किं लिङ्गं स्यात् ?

वाच्यस्य अर्थस्य पुंस्त्वं तु स्फुटमेव । शब्दस्य अन्ते श्रूयमाणानां भारतीसरस्वत्यादीनां पदानां स्त्रीत्वं लोके प्रसिद्धम् । एवं स्थिते भारत्याद्यन्तानां पदानां किं लिङ्गं स्यात् ?

पूर्वोक्ता शास्त्रयुक्तिः एव अत्रापि स्मरणीया । पदगतस्य लिङ्गस्यैव प्राधान्यं भवति अत्र । अतः भारतीसरस्वत्यन्तानि पदानि ईकारान्त-स्त्रीलिङ्गानि एव इति निर्णयः ।

एतदत्र स्मर्तव्यं यत् लिङ्गविषयकचर्चावसरे भारत्यन्तानि परिगृहीतानि । तानि च नामानि गृहीतसंन्यासानां मठाधीशानां भवन्ति प्रायः । तेषां निर्देशावसरे **बहुवचनप्रयोगः एव शिष्टसम्मतः** । अतः '....भारती-स्वामिनः' इति बहुवचनप्रयोगः एव युज्यते, न त्वेकवचनप्रयोगः । शब्दप्रयोगावसरे शब्दगता लिङ्गव्यवस्था एव अनुसरणीया, न तु तद्वाच्यार्थगता लिङ्गव्यवस्था इति तु सारः ।

## २.४. वचनम्

एकत्वे एकवचनं, द्वित्वे द्विवचनं, बहुत्वे बहुवचनम् इति सामान्यव्यवस्था संस्कृतभाषायाम् । किन्तु एतस्याः अपवादाः अपि सन्ति बहवः । व्यावहारिकाः केचन शब्दाः अत्र सङ्गृहीताः ।

### २.४.१. प्राणादयः

(१) **प्राणाः** - सः पञ्चदशे दिनाङ्के **प्राणम्** अत्यजत् ।
**'प्राणान्** अत्यजत्' इति वक्तव्यम् । असुपर्यायः प्राणशब्दः बहुवचने एव प्रयोक्तव्यः । एवम् 'असु'शब्दः अपि । तथा च अमरः - *'पुंसि भूम्न्यसवः प्राणाः'* इति । (पञ्चसु प्राणेषु अन्यतमः प्राणः एकवचनेऽपि अस्ति । स च नात्र उद्दिष्टः ।)

(२) **प्रजाः** - **प्रजाः** राजानं स्वकष्टं **निवेदितवन्तः** ।
**'निवेदितवत्यः'** इति वक्तव्यम् । प्रजाशब्दः नित्यस्त्रीलिङ्गः बहुवचनान्तः च । प्रजाशब्देन अभिधेयाः तु पुरुषाः अपि । तथापि 'प्रजा'शब्दः स्त्रियाम् इत्यतः तत्सम्बद्धं भूतकृदन्तरूपं स्त्रियाम् एव स्यात् ।
(प्रजाशब्दः अपत्यार्थकः एकवचनान्तः अस्ति । किन्तु स च अर्थः अत्र न अभिप्रेतः ।)

(३) **अप्सराः** - *उर्वशी नाम **अप्सराः** भूलोकम् आगता ।
अप्सरश्शब्दः सकारान्तः । सः बहुवचने प्रयोक्तव्यः इति एकं मतम् । तदनुगुणम् 'अप्सरसः' इति प्रयोक्तव्यं स्यात् । किन्तु 'बहुवचनं न नियतम् एतस्य शब्दस्य' इति वदति अमरकारः ।
तथा हि - *आपः सुमनसो वर्षा अप्सरास्सिकतास्समाः ।*
*एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम् ॥* इति ।
एतदनुसारेण **अप्सरस्सिकतासमाशब्दाः एकवचनप्रयोगम् अपि अर्हन्ति** ।

(४) **सिकताः** - नद्याः **सिकतायां** बालाः क्रीडन्ति ।
सिकताशब्दस्य एकवचनम् अत्र प्रयुक्तम् । बहुवचनप्रयोगे तु 'सिकतासु' इति स्यात् । **सिकताशब्दस्य एकवचनप्रयोगोऽपि अस्ति** । प्रामाण्यं तु पूर्वं दर्शितम् । अतः एकवचनान्तप्रयोगः (सिकतायाम् इति), बहुवचनान्तप्रयोगः (सिकतासु इति) वा भवितुम् अर्हति अत्र । भाष्यकारोऽपि एकवचनान्तं प्रयुक्तवान् दृश्यते । तद्यथा - *'एका च सिकता तैलदानेऽसमर्था खार्यप्यसमर्था'* इति ।

(५) **अक्षताः** - विवाहदिने बान्धवाः **अक्षतं** विकिरन्ति ।
'अक्षतम्' इति एकवचनं दुष्यति । **'अक्षतान्'** इति बहुवचनं युज्यते । 'जातौ एकवचनं युज्यते' इति पक्षम् आश्रित्य अक्षतशब्दस्य एकवचनान्तत्वं न समर्थनार्हम् । अक्षतशब्दः पुंसि बहुत्वे च नियतः । तथा च अमरः - *'पुंभूम्नि चाक्षताः'*

---

* 'ऊर्वशी' इति ऊकारोपेतं रूपम् अपि शुद्धम् ।

इति । अतः 'अक्षतान्' इति बहुवचनान्तप्रयोगः एव साधुः ।

### २.४.२. दारादयः

अन्ये केचन शब्दाः यद्यपि दैनन्दिनव्यवहारे न आधिक्येन प्रयुज्यन्ते, तथापि तेषां वचनज्ञानात् कदाचित् वा लाभः स्यात् एव इति मत्वा अधः केचन शब्दाः सोदाहरणं दीयन्ते ।

अ) **दाराः** – दशरथस्य **दाराः** कौसल्या ।
स्त्र्यर्थवाची अपि दारशब्दः पुंसि बहुत्वे च । दाराः = पत्नी । तथा हि कोशः – *'भार्या जायाथ पुंभूम्नि दाराः'* इति ।

आ) **लाजाः** – कन्याः **लाजैः** वधूवरौ विकिरन्ति ।
लाजशब्दः पुंसि नित्यबहुवचनान्तः च अस्ति ।
कोषो यथा – लाजाः पुंभूम्नि चाक्षताः – (अमरः)

इ) **आपः** – इमाः **आपः** ।
'अप्'शब्दः स्त्रीलिङ्गः नित्यबहुवचनान्तः । तथा हि कोषः – (अमरः) *'आपः स्त्री भूम्नि...'* ।

ई) **सुमनसः** – स्त्रियः **सुमनसः** इच्छन्ति ।
सुमनश्शब्दः पुष्पवाचकः । सः सकारान्तः स्त्रीलिङ्गः नित्य-बहुवचनान्तः च ।

उ) **वर्षाः** – **वर्षासु** बालाः क्रीडन्ति ।
वर्षऋतुपर्यायः वर्षाशब्दः स्त्रीलिङ्गः नित्यबहुवचनान्तः च । अमरकोषस्य प्रामाण्यं यथा – *'स्त्रियां भूम्नि वर्षाः'* इति । *'वर्षाभ्यष्ठग्' (४.३.१८)* इति सूत्रकारवचनम् अपि अत्र प्रमाणम् । रामायणप्रयोगो यथा –
वर्षास्विव च सुक्षेत्रे सर्वं सम्पद्यते मयि । – किष्किन्धा० ७.२०
वर्षाशब्दः ऋतुवाचकः । वृष्टिशब्दः तु वर्षणार्थकः । वृष्टिपर्यायः वर्षशब्दः यः अस्ति सः पुंसि नपुंसके वा । तथा हि कोषः (शब्दार्णवः) – 'अथ वृष्टिर्वर्षमस्त्री केचिदिच्छन्ति वर्षणम्' इति । अतः अयं निष्कर्षः भवितुम् अर्हति – 'वर्ष'शब्दस्य ऋतुवाचकत्वे स्त्रीत्वं बहुत्वं च । वृष्टिवाचकत्वे तु पुंस्त्वं नपुंसकत्वं वा ।

ऊ) **समाः** – गतासु **समासु** सः प्रगतिम् असाधयत् ।
'समा'शब्द स्त्रीलिङ्गः बहुवचनान्तः च प्रायः । अमरकारः वदति – *'अस्त्री शरत्समाः ।'* तस्य सुधाव्याख्याने लिख्यते – *''बहुवचननिर्देशात् प्रायेणायं बहुवचनान्तः इति ध्वनयति । क्वचित् वचनान्तरम् अपि । 'समां समां विजायते '(५.२.१२) इति सूत्रात् । समायां समायाम् इति तत्र भाष्याच्च''* इति । अतः एकवचनान्तप्रयोगः अपि न दुष्यति । बहुवचनान्तप्रयोगोऽपि शिष्टसम्मतः ।

ऋ) **जलौकाः** – **जलौकसः** दृष्ट्वा बालाः भीताः ।
जलौकश्शब्दः सकारान्तः । सः नित्यबहुवचनान्तः । तथा हि अमरः – *'स्त्रियां भूम्नि जलौकसः'* इति । 'जलौका' इति आकारान्तोऽपि अस्ति एतस्मिन् एव अर्थे । सः तु सर्ववचनान्तः ।

ऌ) **पांसवः** – **पांसुभिः** आकीर्णः अस्ति मार्गः ।
पांसवः नाम धूलयः । पांसुशब्दः पुंसि । प्रायः सः बहु-वचनान्तः । 'पांसवः कस्मात् । पादैः सूयन्ते । पन्नाः शेरत' इति निरुक्ते (३.१२.१९) निर्वचनं दर्शितम् ।

ए) **सक्तवः** – यवप्रस्थं तु तं **सक्तूनकुर्वत** तपस्विनः ।

– महा॰ आश्व॰ ९०.३३

यवाः भर्जनेन धानात्वम् आप्नुवन्ति । तेषां चूर्णम् उच्यते – **'सक्तवः'** इति । अयं शब्दः पुंसि बहुवचने प्रयुज्यते । *'धानाचूर्णं तु सक्तवः'* इति नाममालायाम् । अमरकोषोऽपि वदति –*'करम्भो दधिसक्तवः'* इति । अतः सक्तुशब्दः बहुवचनान्तः ।

ऐ) **धानाः** – याज्ञिकाः **धानाभिः** जुह्वति ।
भृष्टः* यवः 'धानाः' इति उच्यते । अयं शब्दः स्त्रीलिङ्गे भूम्नि च । तथा हि अमरकोषः – *'धानाः भृष्टयवे स्त्रियः'* (अमरः) इति ।

---

* ***'भृष्टः'*** *इत्येतत् 'भ्रस्ज पाके' इत्यस्य क्तान्तं रूपम् । एतस्मिन् एव अर्थे* ***'भर्जित'****–शब्दः अपि अस्ति । 'भृजी भर्जने' इत्यस्य क्तान्तं रूपं तत् ।* ***'भ्रष्ट'****शब्दोऽपि कश्चन अस्ति । तस्य तु 'च्युतः' 'अधः पतितः' इत्यादयः अर्थाः । 'भ्रंशु अवस्रंसने'' इत्यस्य क्तान्तं रूपं तत् ।*

**ओ) दशाः** - शाटिका **दशाभिः** शोभते ।

'दशाः' नाम वस्त्रान्तभागः । सः स्त्रीलिङ्गः बहुवचनान्तः च । तथा हि कोषः - *'स्त्रियां बहुत्वे वस्त्रस्य दशाः'* (अमरः) इति ।

**औ) आव्यः** - ततोऽनन्तरमावीनां प्रादुर्भावः ।

- चरके शारीर. ८.३६

आव्यः नाम प्रसववेदना । अयं शब्दोऽपि बहुवचने स्त्रियां प्रयुज्यते । *'गर्भस्पन्दन**मावीनां** प्रणंशः...'* इति सुश्रुतप्रयोगः अपि उपोद्बलकः अस्ति ।

**अं) गृहाः** - इमे नो **गृहाः** यावत् प्रविशामि ।

- मुद्राराक्षसे प्रथमाङ्के

पुंलिङ्गः 'गृह'शब्दः बहुवचनान्तः एव । तथा हि अमरः - *'गृहाः पुंसि च भूम्न्येव'* इति ।

पुंलिङ्गविशिष्टस्य गृहशब्दस्य सद्म, कलत्रं चेति अर्थद्वयम् अपि अस्ति । तथा हि मेदिनी - *'...गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि'* इति ।

'गृहम्' इति नपुंसकलिङ्गविशिष्टः शब्दः अन्यः अस्ति एव । तस्य न नित्यबहुवचनान्तता ।

**अः)** शोभनाः **गन्धाः** यस्य सः सुगन्धः आपणः ।

गन्धशब्दः द्रव्यवाची अपि । (गन्धवान् इत्यर्थः । 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति लुक्) द्रव्यवाचित्वे तस्य बहुवचनत्वम् । *'गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः । स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः'* इति कोषात् ।

- सिद्धान्तकौमुद्याः बालमनोरमाव्याख्या '(गन्धस्येत्...' इति सूत्रे)

**बुद्धिवैशद्याय एतानि कानिचन उदाहरणानि दर्शितानि । एतेषु केषाञ्चन बहुवचनत्वम् उक्तं दृश्यते चेदपि नियतबहुवचनत्वं न दृश्यते क्वचित् । अतः बहुवचनत्वं प्रायिकं स्यात् केषाञ्चित् । अतः एतेषां प्रयोगावसरे विस्तरेण कोषादिपरिशीलनं निश्चयेन उपकारकं स्यात् ।**

## २.४.३. आत्मशब्दस्य एकवचनता -

❖ ते **आत्मना** कृतं कार्यं श्रेष्ठम् अमन्यन्त ।

❖ ते **स्वस्य** दोषान् ज्ञातवन्तः ।

❖ ताः **आत्मानं** धन्यम् अमन्यन्त ।

अत्र प्रथमे वाक्ये 'आत्म'शब्दः एकवचनान्तः। कर्तृपदं तु बहुवचनान्तम् । द्वितीये वाक्ये 'स्व'शब्दः एकवचनान्तः । कर्तृपदं बहुवचनान्तम् । तृतीये वाक्ये आत्मशब्दः पुंसि एकवचनान्तः । कर्तृपदं स्त्रियां बहुत्वे च ।

एतेषु वाक्येषु 'आत्मभिः कृतम्' 'स्वेषां दोषान्' इत्येवमादिक्रमेण आत्मस्वशब्दादीनां बहुवचनान्तता युक्ता खलु स्यात् इति सन्देहः स्यात् कदाचित् । किन्तु 'तेषाम् एकवचनान्तत्वेन एव प्रयोगः' इति तु संस्कृतशैली । तृतीये वाक्ये कर्तृपदस्य स्त्रीत्वे बहुत्वे च सत्यपि आत्मशब्दस्य *पुंस्त्वम् एकत्वं च यदस्ति तत् अपि युक्तम् एव । 'आत्म'शब्दस्य यथा तथैव आत्मवाचिनः 'स्व'शब्दस्यापि एकवचनान्तप्रयोगः एव साधुः ।

सिद्धान्तकौमुद्याम् अपि पङ्क्तिः दृश्यते - 'आत्मवाची स्वशब्दः पुंसि एव' इति । - (प्रत्ययस्थात्... इति सूत्रे)

विशिष्य कर्तुः बहुत्वे सति आत्मशब्दः यत्र प्रयुज्यते तत्र जागरूकता आवश्यकी । अत्र उपोद्बलकः प्रयोगः यथा -

❖ मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ।

- महा० प्रजागर० ३४.४५

## २.४.४. पादादीनां द्वित्वम्

❖ वयं **पादाभ्यां** गच्छामः ।

❖ वयं **कर्णाभ्यां** शृणुमः ।

❖ ते **बाहुभ्याम्** उन्नयन्ति ।

❖ श्रान्ता वयम् । अग्रतः न प्रयातः **चरणौ** अस्माकम् ।

एतेषु वाक्येषु पादकर्णबाह्वादीनां द्विवचनान्तता श्रूयते । यद्यपि एते शब्दाः बहुभिः अभिसम्बद्धाः भवन्ति (यतः कर्तृपदं बहुवचनान्तम् अस्ति ।) तथापि तेषां द्विवचनान्तप्रयोगः एव लोके प्रशस्यते ।

एतद्विषये वामनः वदति - *'स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेण'* इति । शिष्टपरम्परा अपि एतदनुसारिणी एव दृश्यते ।
'पादेन गच्छति' इति वाक्ये श्रुते गन्तुः खञ्जता प्रतीयते इव । 'पादैः गच्छति' इति वचनं श्रुतिकटुतां स्मारयति । द्विवचनम् एव इच्छति लोकः । अतः एव - 'चारैः पश्यन्ति राजानः **चक्षुर्भ्याम्** इतरे जनाः' इत्यादयः प्रयोगाः सङ्गच्छन्ते ।
वामनः स्वसूत्रे 'प्रायेण' इति वदन् बहुवचनप्रयोगाणां सद्भावम् अपि सङ्केतयति । 'शूर**बाहुषु** लोकोऽयं लम्बते पुत्रवत्सला' इति भारते, 'पातुकामेषु वत्सेषु मातॄणां शातिताः **स्तनाः**' इति रामायणे, इतरत्र चापि बहुवचनप्रयोगोऽपि दृश्यते । तथापि द्विवचनप्रयोगः एव प्रशस्यते ।

## २.४.५. आत्मनि बहुवचनम् -

- ❖ कश्चित् अतिथिः दिनद्वयम् उषित्वा प्रतिगच्छन् वदति - **'साधयामो वयम्'** इति ।
- ❖ यतिवरः कश्चन राजानं वदति - '**वयमिह** परितुष्टा वल्कलैः त्वं दुकूलैः' इति *(वैराग्य० - ५)*
- ❖ ''यो यत्राप्रधानं भवति स आह - गुणभूता **वय**मत्र इति'' - भाष्यकारोक्तिः एषा । *(प्राक्क्रीताच्छः - ५.१.१)*

एतेषु त्रिषु अपि उदाहरणेषु एकत्वविशिष्टः वक्ता आत्मनि बहुत्वम् आरोपितवान् दृश्यते । एतादृशाः प्रयोगाः शिष्टसम्मताः एव । अतः एतादृशानां प्रयोगे न कोऽपि दोषः । *'अस्मदो द्वयोश्च' (१.२.५९)* इति सूत्रम् अपि अत्र प्रमाणम् । अतः 'अहं गच्छामि' 'आवां गच्छावः' इत्येतयोः वाक्ययोः स्थाने 'वयं गच्छामः' इत्यादीनि वाक्यानि सर्वोऽपि वक्तुम् अर्हति ।
षड्गुरुशिष्येण वेदार्थदीपिकायाम् उच्यते -

*व्याख्येयार्थबहुत्वेन बहुमानेन चात्मनः ।*
*व्याख्यात्रात्मन्यथारोप्य बहुत्वं तु प्रयुज्यते ।।*
*यथा हि निधिमासाद्य प्रयुञ्जानस्तु दृश्यते ।*
*एते वयं समृद्ध्यर्थाः देवोऽस्मासु प्रसीदतु ।।* इति ।

### २.४.६. जातौ एकवचनम्

❖ सः आपणतः **तण्डुलम्** आनीतवान् ।

❖ सः आपणतः **तण्डुलान्** आनीतवान् ।

अत्र प्रथमे वाक्ये **'तण्डुलम्'** इति एकवचनान्तप्रयोगः । द्वितीये वाक्ये **'तण्डुलान्'** इति बहुवचनान्तप्रयोगः । साधुत्वं तु उभयथा अपि ।

तण्डुलः नाम निस्तुषः व्रीहिः । सः लघ्वाकारकः । अतः कोऽपि तादृशम् 'एकम्' आनेतुं न अर्हति । एवं सति एकवचनान्तप्रयोगः किं युज्यते इत्यस्ति सन्देहस्य अवसरः ।

तण्डुलगता तण्डुलत्वरूपा जातिः एका एव । तत् एकत्वं मनसि निधाय एकवचनान्तप्रयोगः । तण्डुलानां बहुत्वम् अवलम्ब्य बहु-वचनान्तप्रयोगः अपि ।

### २.४.७. सर्वशब्दः एकवचनान्तः अपि

❖ **सर्वे सदस्याः** कार्यक्रमे उपस्थिताः आसन् ।

❖ **सर्वः सदस्यः** प्रतिज्ञावचनम् उच्चारितवान् ।

अत्र वाक्यद्वयम् अस्ति । प्रथमे वाक्ये सर्वशब्दः बहुवचनान्तः प्रयुक्तः । द्वितीये वाक्ये स एव एकवचनान्तः प्रयुक्तः ।

सर्वशब्दस्य बहुवचनोपेतस्य प्रयोगः सर्वासु भारतीयभाषासु सहजः । अतः तादृशः प्रयोगः विना विरोधम् अङ्गीक्रियते सर्वैः । किन्तु एकवचनान्तप्रयोगे (द्विवचनान्तप्रयोगे च) विवदन्ते ते । 'कथं तत् ?' इति जिज्ञासा तेषाम्* ।

एतद्विषये सिद्धान्तकौमुद्याः टीकायां बालमनोरमाख्यायाम् एवम् उच्यते -

*''न च सर्वशब्दस्य बहुत्वव्यापकसर्वत्वात्मकधर्मविशेषप्रवृत्ति-*

---

* एतदपि अत्र स्मर्तव्यम् - सर्वशब्दस्य साकल्यादयः अर्थाः । यदा तु तेन परिमाणं ज्ञाप्यते तदा सङ्ख्यायाः अनुद्भूततया भानम् । अतः एकवचनान्तंता । प्रयोगो यथा - सर्वं वृत्तान्तं सः निवेदितवान् ।

एतम् एकवचनान्तं प्रयोगं सर्वे अभ्युपगच्छन्ति एव । यत्र सङ्ख्या उद्भूततया भासते तत्र कथम् एकवचनान्तता इति बहूनां जिज्ञासा ।

*निमित्तकत्वात् बहुवचनम् एव न्याय्यम् इति वाच्यम् । सर्वशब्दो हि बह्ववयवारब्धसमुदाये वर्तते । तत्र यदा अनुद्भूतावयवः समुदायः विवक्षितः तदा भवत्येकवचनम् । यथा - सर्वो लोकः इति । अनुद्भूतत्वम् अविवक्षितसंख्याकत्वम् । यदा तु अनुद्भूतावयवकौ समुदायौ तदा द्विवचनम् । यथा - सर्वौ व्यूहौ इति । यदा तु उद्भूतावयवसमुदायः तदा बहुवचनम् । यथा - सर्वे जनाः इति ।''*

तात्पर्यम् इत्थम् - सर्वशब्दः बहुभिः अवयवैः युक्तः । । अवयवगतसंख्याः यदा मनसि निधीयन्ते तदा बहुवचनम् । यदा सा न विवक्ष्यते तदा समुदायगतम् एकत्वम् अवलब्म्य एकवचनम् । एवमेव द्विवचनस्थले अपि चिन्तनीयम् ।

प्राचीनप्रयोगाः यथा -

- **सर्वः** स्वार्थं समीहते । - माघः. २.६५
- न हि **सर्वः** सर्वं जानाति ।
- **सर्वस्य** द्वे - पाणिनिसूत्रम् - ८.१.१.

## २.४.८. आदरार्थे बहुवचनम् ?

- इदानीम् **अध्यक्षमहाभागः** भाषणं करोति ।
- इदानीम् **अध्यक्षाः** भाषणं कुर्वन्ति ।

अत्र प्रथमे वाक्ये आदरसूचनाय महाभागशब्दः प्रयुक्तः, एकवचनान्तता च प्रयुक्ता । द्वितीये वाक्ये च बहुवचनान्तप्रयोगः कृतः आदरोद्देशेन । वर्य-महाभाग-महाशयप्रभृतयः आदरं द्योतयन्ति । अतः आदरार्थे तेषाम् उपयोगः युक्तः एव । व्यक्तेः एकत्वम् अवलम्ब्य एकवचनान्तप्रयोगः । एकवचनान्तप्रयोगः आदरं नाशयति इति न कुत्रापि निर्दिष्टम् अस्ति । अतः **आदरार्हे जने एकवचनान्तप्रयोगः न कदापि दुष्यति** । आदरार्हेषु जनेषु एकवचनान्तप्रयोगः बहुधा दृश्यते संस्कृतसाहित्ये । अतः एषा प्रयोगपरिपाटी शिष्टसम्मता एव । द्वितीये वाक्ये आदरदर्शनाय बहुवचनान्तता प्रयुक्ता। प्रादेशिकभाषासु आदरद्योतनाय बहुवचनान्तप्रयोगः क्रियमाणः दृश्यते । तां परिपाटीम् अनुकुर्वन्तः बहवः आदरप्रदर्शनाय बहुवचनान्तत्वं प्रयुञ्जते प्रायेण ।

एतस्य न कापि आवश्यकता ।
किन्तु एकत्वविशिष्टे जने बहुवचनान्तप्रयोगः संस्कृतभाषायां नास्तीति न । 'आचार्याः आगताः' ('आचार्यः आगतः' इत्यर्थे) इति प्रयोगः श्रूयते । प्रयोगममुं समर्थयति नागेशः लघुमञ्जूषायां सङ्ख्याविचार-प्रकरणे । *''यत्र कोषाद्युदासीनं तत्र यथेच्छम् एकस्मिन्नप्याचार्या आगता, आचार्य आगत इत्यादिप्रयोगात्''* इति नागेशस्य पङ्क्ति ।
अतः बहुवचनान्तप्रयोगः अशिष्टः इति वक्तुं तु न शक्यते ।
एवं तर्हि व्यवहारे एकवचनान्तप्रयोगस्य अनुकरणं वरम्, उत बहु-वचनान्तप्रयोगस्य ? 'एकवचनान्तप्रयोगस्य' इत्येव उत्तरम् । बहु-वचनान्तप्रयोगमोहस्य त्यागः वरम् । एकवचनान्तप्रयोगः एव संस्कृतक्षेत्रे बाहुल्येन इत्यतः तस्यैव अनुसरणं श्रेयसे । 'एक-वचनान्तप्रयोगः आदरहानिं कुर्यात्' इति शङ्का आदौ उत्पाटनीया ।
एतदत्र स्मर्तव्यम् - 'गुरावात्मनि बहुवचनम्' इति वचनम् अनुसृत्य 'आचार्याः आगताः' 'वयमिह परितुष्टाः....।' 'साधयामो वयम्' इत्यादयः प्रयोगाः कृताः दृश्यन्ते प्राचीनैः । सर्वत्र बहुवचनान्तप्रयोगः कृतः न दृश्यते ।

### २.४.९. कर्तृकर्मणोः बहुत्वेऽपि क्रियापदस्य एकवचनान्तता

❖ रामः लक्ष्मणः सीता च **गच्छति/गच्छन्ति** ।

अत्र रामः लक्ष्मणः सीता चेति कर्तारः त्रयः । समुदितानाम् एतेषां त्रयाणाम् अपि क्रियायां यदा अन्वयः इष्यते तदा क्रियापदस्य बहुवचनत्वम् । 'गच्छन्ति' इति प्रयोगः । यदा च चकारप्रयोगबलात् एकैकस्यापि क्रियायां स्वातन्त्र्येण अन्वयः, तदा क्रियापदस्य एक-वचनत्वम् अपि सङ्गतम् एव । अतः 'गच्छति' इति एकवचनान्तप्रयोगः अपि साधुः एव ।
किम् अत्र प्रमाणम् ?
अधोनिर्दिष्टानि कानिचन उदाहरणानि परिशील्यन्ताम् ।

१) आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च **जानाति** नरस्य वृत्तम् ।।

अत्र कर्तृपदानि बहूनि, तथापि क्रियापदम् एकवचनान्तम् एव ।

२) तस्मात् ब्राह्मणराजन्यौ वैश्यश्च न सुरां **पिबेत्** ।

- मनु, ११.९३

३) तस्य राज्यं च कीर्तिश्च प्रतापश्चापि **वर्धते** ।

- रामायणम् - ४.२१.११

४) चरः शरीरावयवाः स्वभावो धातवः क्रिया ।
लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् **परीक्ष्यते** ।।

- चरके सूत्र.२७.३३१

महाभाष्यस्य प्रयोगः अपि अत्र अपरं प्रमाणम् । भाष्यप्रयोगो यथा - *''अभ्याजेत्युक्ते क्रिया निर्दिष्टा, कर्तृकर्मणी गुणश्च अनिर्दिष्टः'' (१.२.४४.)* इति ।

कर्तरि प्रयोगे यथा तथैव कर्मणि प्रयोगे अपि । तन्नाम तत्रापि कर्मणः बहुत्वेऽपि चकारप्रयोगबलात् एकैकस्यापि क्रियायाम् अन्वयः यदा भवति तदा क्रियापदस्य एकवचनत्वम् अपि ।

### २.४.१०. 'दम्पती'

१) अद्य कार्यक्रमे **दम्पती आगता** आसीत् ।
**'दम्पती आगतौ आस्ताम्'** इति द्विवचनान्तप्रयोगः साधुः । 'दम्पती' इत्येषः न हि ईकारान्तैकवचनान्तः । इकारान्तद्विवचनान्तं रूपं तत् ।
जाया च पतिः च इति विग्रहः । जायाशब्दस्य दम्भावः निपात्यते । तस्मात् 'दम्पती' इति द्विवचनान्तं रूपं सिद्धं भवति । अन्यच्च 'आगता' इति स्त्रीलिङ्गप्रयोगः अपि अत्र दुष्यति ।

२) अद्य कार्यक्रमे **दम्पतयः आगताः** आसन् ।
साधु वाक्यम् एतत् । **'दम्पतयः'** इति रूपं युक्तम् । किन्तु विग्रहवाक्यं कथं वक्तव्यम् ? 'पतिपत्नीयुगलानि बहूनि आगतानि आसन्' इति वक्तुः तात्पर्यं तु अवगम्यते एव । युगलभावं मनसि निधाय 'दम्पती च दम्पती च' इति विग्रहवाक्यं न वक्तव्यम् । प्रत्युत **'जायाश्च पतयः च' इति विग्रहवाक्यं वक्तव्यम्** ।

३) कार्यक्रमं **रघुनाथदम्पती** आगतौ आस्ताम् ।
अयुक्तं वाक्यम् एतत् । भाषान्तरस्य अनुकरणं कुर्वद्भिः अविचार्य क्रियमाणः अयं प्रयोगः असाधुः । 'दम्पती' इत्यत्र द्वौ स्तः । तयोः अन्यतरः एव रघुनाथः (पतिशब्दवाच्यः) यदि पतिः रघुनाथः नाम्ना निर्देष्टुम् इष्यते तर्हि 'सपत्नीकः रघुनाथः आगतः आसीत्' इति, 'रघुनाथः तत्पत्नी च आगतौ आस्ताम्' इति वा वाक्यप्रयोगः भवितुम् अर्हति । 'लक्ष्मीः रघुनाथश्चेति दम्पती आगतौ आस्ताम्' इति, 'लक्ष्मीरघुनाथौ दम्पती आगतौ आस्ताम्' इति वा प्रयोगः अपि सम्भवति ।

४) कस्मिंश्चित् ग्रामे **कृषकदम्पती** वसतः स्म ।
न कोऽपि दोषः अत्र । कृषकौ च तौ दम्पती च कृषकदम्पती । कृषकशब्दः विशेषणम् । (पूर्वस्मिन् उदाहरणे तु रघुनाथपदं न विशेषणम् आसीत् । अतः आपत्तिः उक्ता ।)

५) कार्यक्रमे **दम्पतीगणः** उपस्थितः आसीत् ।
**'दम्पतिगणः'** इति शब्दप्रयोगः साधुः । जाया च पतिश्च दम्पती । जायाश्च पतयश्च दम्पतयः । तेषां दम्पतीनां गणः दम्पतिगणः । षष्ठीतत्पुरुषः अत्र । पूर्वपदस्य विभक्तेः लोपः । तस्मात् 'दम्पतिगणः' इति रूपम् । पूर्वपदस्य अन्ते स्थितस्य इकारस्य दीर्घः न केनापि सूत्रेण विहितः । 'दम्पती' इत्यस्य इकारान्तद्विवचनान्तत्वं विस्मृत्य भ्रान्त्या ईकारान्तत्वं विचिन्त्य 'दम्पतीगणः' इति प्रयोगः कृतः स्यात् ।

## ३. तृतीयोऽध्यायः
# स्त्रीप्रत्ययगताः दोषाः

### ३.१. सामान्यः -

स्त्रीप्रत्यायन्तरूपाणां विषये केषाञ्चित् भ्रान्तिः अस्ति । प्रादेशिक-भाषायाः प्रभावतः प्रायः एवं भवति । तादृशानि भ्रान्तियुक्तानि रूपाणि यथा -

| अशुद्धम् (✗) | शुद्धम् (✓) |
|---|---|
| अध्यापकी | अध्यापिका |
| लेखकी | लेखिका |
| उपन्यासकी | उपन्यासिका |
| नायकी | नायिका |
| उद्घोषकी | उद्घोषिका |
| सेवकी | सेविका |
| अनुवादकी | अनुवादिका |
| विभूषकी | विभूषिका |
| उपाध्यायिनी | उपाध्याया / उपाध्यायी |

एतेषु कर्त्रर्थे 'ण्वुल्'प्रत्ययः अस्ति । *'प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः'* (७.३.४४) इति सूत्रेण ककारस्य इकारः अपि परे । अतः एते टाबन्ताः एव, न तु ङीबन्ताः । 'उपध्यायी' इत्यत्र विकल्पेन ङीष् । ङीषः अभावे टाप् । या स्वयमेण अध्यापिका सा उपाध्यायी उपाध्याया वा (ङीष् टाप् वा) । या उपाध्यायस्य पत्नी भवति सा उपाध्यायानी (आनुक्), उपाध्यायी (ङीष्) वा ।

### ३.२. विशेषः -

स्त्रीप्रत्ययप्रकरणे एव अन्यानि कानिचन रूपाणि दृश्यन्ते भ्रान्ति-मूलकानि । तत्रापि प्रादेशिकभाषाप्रभावः एव कारणम् । तानि

यथा -

| अशुद्धम् (✗) | शुद्धम् (✓) |
| --- | --- |
| अध्यक्षिणी | अध्यक्षा |
| सिंहिणी | सिंही |

इन्नन्ताः शब्दाः स्त्रियाम् ईकारं प्राप्नुवन्ति खलु ? (यथा - अधिकारिणी, उपकारिणी, न्यायवादिनी इत्यादयः) तेषां सादृश्यं मनसि निधाय 'अध्यक्षिणी' इत्यादीनि रूपाणि प्रयुज्यन्ते प्रायः ।

## ३.३. नर्तकी -

अधोलिखितं वाक्यं पठत -

सा **नर्तकी** रमणीयतया नृत्यति ।

अत्र **'नर्तकी'** इति यत् प्रयुक्तं तत् साधु । 'नृती'धातोः *'शिल्पिनि ष्वुन्' (३.१.१४५)* इति सूत्रेण ष्वुन्प्रत्यये नर्तकः इति रूपम् । तस्य स्त्रियां न 'टाप्', अपि तु ङीष्, *'षिद्गौरादिभ्यश्च' (४.१.४१)* इति सूत्रेण । अतः 'नर्तकी ' इति रूपम् ।

एतदत्र स्मर्तव्यम् । शिल्पं नाम क्रियाकौशलम् । तद्वतः कर्तुः ष्वुन् स्यात् । तदभावे ? तदभावे तु कर्तरि 'ण्वुल्' स्यात् एव । तदा अपि 'नर्तकः' इति रूपम् । किन्तु स्त्रियां षित्त्वाभावात् न ङीष्, अपि तु टाप् । *'प्रत्ययस्थात्......'* इति सूत्रेण अकारस्य इकारः । तदा च 'नर्तिका' इति रूपम् । 'नर्तनकौशलरहिता' इत्यर्थः सिध्यति* ।

तात्पर्यं तु - नर्तकी - नर्तनकौशलसहिता

नर्तिका - नर्तनकौशलरहिता

## ३.४. सुन्दरा -

सा लेखनी **सुन्दरा** अस्ति ।

इत्यस्मिन् वाक्ये यः 'सुन्दरा'शब्दः प्रयुक्तः सः असाधुः । **'सुन्दरी'** इत्येव साधु रूपम् । सुन्दरशब्दः गौरादिगणे पठितः । अतः *'षिद्-गौरादिभ्यश्च' (४.१.४१)* इति सूत्रेण ङीष् ।

चेतनावतीषु 'सुन्दरी' इति प्रयोगः क्रियते विना चिन्ताम् । यथा - तरुणी सुन्दरी । किन्तु अचेतनासु आत्वं स्यादिति भ्रमः । अतः

---

*'सिद्ध्यति' इति दधयोः लेखनम् अपि न दोषाय ।

'सुन्दरा लेखनी' 'सुन्दरा लता' इत्यादयः प्रयोगाः क्रियन्ते । 'सुन्दर'शब्दः स्त्रियां सर्वत्र (चेतनेषु अचेतनेषु च) ईत्वम् एव प्राप्नोति, न कदाचिदपि आत्वम् ।

**३.५. सुमङ्गली -**

**सुमङ्गल्यः** आशीर्भिः वधूम् अनुगृहीतवत्यः ।

अत्र **'सुमङ्गलाः'** इति स्यात् । सुमङ्गलाशब्दः छन्दसि संज्ञायां चैव ईत्वं (ङीप्) प्राप्नोति *'केवलमामक... सुमङ्गलभेषजाच्च' (४.१.३०)* इति सूत्रेण । तद्भिन्नस्थले, तन्नाम भाषायां, 'सुमङ्गला' इत्येव रूपम् । 'सुमङ्गली' इति रूपं वेदे एव । लोके च संज्ञायां गम्यमानायां भवति । बालिकायाः नाम 'सुमङ्गली' इति भवितुम् अर्हति ।

आश्चर्यं नाम प्रादेशिकभाषासु अविधवायां 'सुमङ्गली' इति ईकारान्तस्य प्रयोगः, नाम्नि 'सुमङ्गला' इति आकारान्तस्य प्रयोगः च दृश्यते । विपरीतप्रयोगः अयम् ।

**३.६. चोरा** सा आरक्षकैः गृहीता ।

अत्र 'चोरी' प्रयोक्तव्यम् । स्तेयार्थकात् चुरधातोः अचि (चुर + णिच् + अच्) चोरशब्दः सिद्ध्यति । ण्यन्तात् स्त्रियां ङीप् । अतः 'चोरी' इति रूपम् । चोरार्थे चौरशब्दोऽपि अस्ति । चुरधातोः 'अ'प्रत्यये 'चुरा' इति रूपम् । चुरा शीलम् अस्य इति चौरः । (चुरा + णः - *छत्रादिभ्यो णः* - ४.४.६२) तस्यापि ण्यन्तात् (स्त्रियां ङीप्) अतः 'चौरी' इति रूपम् ।

**३.७. सनातनादयः -**

| अशुद्धम् (✗) | शुद्धम् (✓) |
|---|---|
| सनातना | सनातनी |
| पुरातना | पुरातनी |
| आधुनिका | आधुनिकी |
| इदानीन्तना | इदानीन्तनी |
| वार्षिका | वार्षिकी |
| षाण्मासिका | षाण्मासिकी |

| | |
|---|---|
| प्राचीनी | प्राचीना |
| नवीनी/नूतनी | नवीना/नूतना |
| अधस्तना | अधस्तनी |

एते सर्वे कालसम्बद्धाः शब्दाः । टित्प्रत्ययानां ठगादीनां वा कारणतः एते स्त्रीलिङ्गे ईकारम् एव अर्हन्ति, न तु आकारम् । प्राचीननवीन-नूतनाः न तथा । प्राचीननवीनौ 'ख'प्रत्ययान्तौ । नूतनः 'तनप्-प्रत्ययान्तः । टित्वाद्यभावात् एतेषु ईकारः न, अपि तु आकारः । अन्येषां तु ईकारः ।

अतः 'सनातना परम्परा', 'पुरातना भाषा' इत्यादयः प्रयोगाः असाधवः एव ।

**३.८. प्रार्थनाप्रभृतयः -**

प्रार्थना/प्रार्थनम्, उद्घाटना/उद्घाटनम्, गणना/गणनम्... इत्येवं रूपद्वयं श्रूयते । प्रार्थनादिषु रूपद्वयं दृष्ट्वा केचन भ्रान्त्या 'पठना, लेखना' इत्यादीनि रूपाणि अपि भवन्ति इति चिन्तयन्ति । वस्तुस्थितिस्तु इत्थम् -

पठनम्, लेखनम्, गणनम्, उद्घाटनम् इत्यादिषु भावे ल्युट्प्रत्ययः । एषः सर्वेभ्यः धातुभ्यः विधीयते । सर्वे धातवः भावार्थे ल्युडन्तरूपम् अर्हन्ति । एतेषां नपुंसकत्वम् एव ।

'प्रार्थना' इत्यादिषु 'युच्'प्रत्ययः । *(ण्यासश्रन्थो युच् -३.३.१०७)* सर्वे णिजन्ताः, परिगणिताः केचन शब्दाश्च स्त्रियां युचम् अर्हन्ति । अतः प्रार्थनागणनादीनि रूपाणि सिद्ध्यन्ति । ये णिजन्ताः न, परिगणितेषु शब्देषु अन्तर्भावः अपि येषां नास्ति, ते स्त्रियां युचं न अर्हन्ति । अतः तादृशधातूनां भावार्थे ल्युडन्तत्वात् आकारान्तं रूपं न भवति, अपि तु नपुंसकरूपम् एव । अतः पठना, लेखना इत्यादीनि रूपाणि असाधूनि एव ।

ये णिजन्ताः न, परिगणितेषु अपि न अन्तर्भवन्ति ते आकारान्तं रूपं न अर्हन्ति इति तात्पर्यम् । अन्वेषणा वन्दना इत्यादीनि परिगण-नाकारणतः सिद्धानि ।

---

* णि, आस, श्रन्थ - एभ्यः स्त्रियां भावादिषु युच् स्यात् ।

### ३.९. भयङ्करीप्रभृतयः -

अधोनिर्दिष्टानि वाक्यानि परिशीलयत -

१. तस्याः राक्षस्याः आकृतिः **भयङ्करी** आसीत् ।

२. एषा मम **सहोदरी** ।

३. काचित् **युवती** अद्य मिलिता ।

४. एषा **स्वाभाविका** प्रक्रिया ।

५. संस्कृतभाषा **परमपावना** अस्ति ।

६. 'संस्कृतसेवा करणीया' इति मम **जीवनाभिलाषा** ।

एतेषु षट्सु वाक्येषु यानि स्त्रीप्रत्ययान्तानि रूपाणि प्रयुक्तानि तेषां विषये ज्ञातव्यं किञ्चिदस्ति ।

१. भयङ्करी इति असाधुः । **'भयङ्करा'** इत्येव ।
*'मेधार्तिभयेषु कृञः'* (३.२.४३) इति सूत्रेण अत्र खच्प्रत्ययः । अतः स्त्रियां टाप् एव, न तु ङीबादयः । तस्मात् 'भयङ्करा' इति आकारान्तं रूपम् एव साधु ।

२. **'सहोदरा'** इति आकारान्तरूपम् एव शुद्धम् । सह समानम् उदरम् अस्य इति सहोदरः । सभावे तु सोदरः इति ।
*सहनञ्विद्यमानपूर्वाच्च* (४.१.५७) इति सूत्रेण ङीषः निषेधः । अतः टाप् एव । तस्मात् 'सहोदरा' इति आकारान्तम् एव शुद्धम् । ईकारान्तस्य न साधुता ।
लोके क्वचित् सहोदरी इति रूपं प्रयुक्तं दृश्यते । यदि शिष्टाः प्रयोगाः दृश्यन्ते तर्हि गौरादिगणादिषु पाठः अङ्गीकरणीयः भवेत् ।

३. *यूनस्तिः* (४.१.७७) इति सूत्रेण तिप्रत्यये **युवतिः** इति सिद्धम् । केचन युवती इति ईकारान्तं रूपं न अङ्गीकुर्वन्ति । सिद्धान्तकौमुद्यां तु *'यौतेः शत्रन्तात् ङीषि बोध्यम्'* इति वचनेन युवती इति रूपं समर्थितम् एव । व्याख्याकाराः तत्साधनाय अन्यान् अपि मार्गान् दर्शितवन्तः दृश्यन्ते । अतः **'युवती'** इति रूपम् अपि साधु एव ।

४. **'स्वाभाविकी'** इति ईकारान्तं रूपम् एव साधु । स्वभावात् आगतः इत्यर्थे ठक्प्रत्ययः । तेन स्त्रियां ङीष् । ईकारान्तत्वम् ।

५. पावनशब्दः करणल्युडन्तः । तेन टित्त्वात् ङीप्प्रत्यये **'पावनी'** इति रूपं स्यात् । अतः पावना इति आकारान्तं रूपम् असाधु ।

६. 'अभिलाषा' इति आकारान्तं रूपम् असाधु । 'अभिलाष'-शब्दः घञन्तः । *'घञबन्ताः पुंसि'* इति लिङ्गानुशासनेन घञन्तस्य पुंस्त्वं विहितम् । अतः **'अभिलाषः'** इति पुँल्लिङ्गविशिष्टं रूपम् एव साधु ।

## ३.१०. शूर्पणखीप्रभृतयः -

अधोनिर्दिष्टानि वाक्यानि परिशीलयत -

१. राक्षसी **शूर्पणखी** रामसमीपम् आगता ।

२. अरण्ये काचित् **पिशाचा** वसति स्म ।

३. चित्रस्था आकृतिः **नैजा** इति भाति ।

**शूर्पणखा** इत्येव साधुः । *'नखमुखात् संज्ञायाम्' (४.१.५८)* इति ङीषः निषेधात् ईकारस्य प्रसक्तिः नास्ति अत्र । पिशाचः 'अण्'प्रत्ययान्तः । अतः स्त्रियां ङीष् । तस्मात् **'पिशाची'** इत्येव रूपम् *। निजशब्दात् स्वार्थे अणि नैजम् इति रूपम् । एवं तस्य अण्णन्तत्वात् स्त्रियां *'टिड्ढाणञ्...'* इति सूत्रेण ङीप् । अतः **'नैजी'** इति रूपम् ।

४. प्रतिदशवर्षं देशे **जनगणतिः** प्रचलति ।

'जनगणतिः' इति अपशब्दः । **'जनगणना'** इति प्रयोक्तव्यम् । गणधातुः दशमगणीयः । अतः तस्य स्वार्थे णिच् । णिजन्तात् 'क्तिन्' न भवति, प्रत्युत 'युच्' भवति - *'ण्यासश्रन्थो युच्'* (३.३.१०७) इति सूत्रेण । युचि (यकारस्य अनादेशः) 'गणना' इति रूपम् ।

'गणतिः' इति रूपं तदा स्यात्, यदा च णिज्रहितं रूपं प्राप्येत गणधातोः । आधृषीयाः णिज्रहितं रूपम् अपि प्राप्नुवन्ति । (*'आधृषाद्वा'* इति गणसूत्रम्) किन्तु गणधातुः न आधृषीयः । 'सर्वे चुरादयः विकल्पेन णिचं लभन्ते' इति कश्चन पक्षः अस्ति । किन्तु तं वादं सर्वे न अङ्गीकुर्वन्ति । 'गणति'शब्दं कोषकाराः

---

* 'पिशाचिनी' इत्यपि रूपं श्रूयते लोके । तदपि असाधु एव ।

अपि दर्शितवन्तः न दृश्यन्ते । अतः 'गणना' इत्येव रूपं वरं भावार्थे ।

**३.११. बहवः** -

**बहवः** महिलाः शास्त्राध्ययने उत्सुकाः दृश्यन्ते ।

**'बहवः'** इति न दोषाय । बहुशब्दस्य पुंसि बहुवचने बहवः इति रूपम् । स्त्रियाम् अपि 'बहवः' इति रूपम् अस्ति । पुँल्लिङ्ग-स्त्रीलिङ्गयोः रूपभेदः द्वितीयाबहुवचनान्तादारभ्य ज्ञायते । तावत्-पर्यन्तं समानं रूपम् । द्वितीयाबहुवचनान्ते पुंसि 'बहून्' इति रूपम् । स्त्रियां 'बहूः' इति । एवमग्रेऽपि ।

बहुशब्दात् स्त्रियां विकल्पेन ङीष् विधीयते *'बह्वादिभ्यश्च'* *(४.१.४५)* इति सूत्रेण । ङीषि **'बह्वी'** इति रूपम् । तदभावे **'बहुः'** इति रूपम् ।

केचन 'बहुशब्दस्य स्त्रियां 'बह्वी' इत्येव रूपम्' इति भावयन्ति । अतः 'बहवः' इति रूपं पुंसि एव इति तेषां भ्रान्तिः । ङीष् विकल्पेन इति ते विस्मरन्ति ।

एवमेव -

| | |
|---|---|
| मृदुः | **मृद्वी** |
| लघुः | **लघ्वी** |
| गुरुः | **गुर्वी** |
| पटुः | **पट्वी** इत्यादयः अपि । |

**३.१२.** हलन्ताः अपि केचन शब्दाः आकारान्ततां प्राप्नुवन्ति कदाचित् । यथा -

| | | |
|---|---|---|
| वाक् | - | वाचा |
| दिक् | - | दिशा |
| निट् | - | निशा |
| प्रतिपत् | - | प्रतिपदा |
| सम्पत् | - | सम्पदा |

अत्र प्रमाणं तु -

*वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।*
***आपं चैव हलन्तानां** यथा वाचा निशा दिशा ॥*

(वष्टि = इच्छति)

## ४. चतुर्थोऽध्यायः

# सुबन्ताः

०१. जीवने तत्त्वस्य **प्राधान्यता** स्यात् ।

'प्राधान्यता' इति अपशब्दः । **'प्राधान्यम्'** इति, **'प्रधानता'** इति **'प्रधानत्वम्'** इति वा प्रयोक्तव्यम् ।

'प्राधान्यम्' इत्यत्र भावार्थे 'ष्यञ्' । 'प्रधानत्वम्' इत्यत्र 'त्व'प्रत्ययः भावार्थे । 'प्रधानता' इत्यत्र 'तल्' भावार्थे । एवं भावार्थे त्रयः प्रत्ययाः । एकस्मिन्नेव अर्थे प्रत्ययद्वयस्य प्रसक्तिः नास्ति । किन्तु लोके प्रमादवशात् भावार्थकस्य प्रत्ययद्वयस्य योजनं कृतं दृश्यते । एतत् अनुचितम् ।

'प्राधान्यता'सदृशानि अन्यानि कानिचन पदानि यथा -

| *अशुद्धानि* (✗) | *शुद्धानि* (✓) |
|---|---|
| वैशिष्ट्यता | वैशिष्ट्यम् |
| ऐक्यता | ऐक्यम् |
| दाढर्यता | दाढर्यम् |
| मौर्ख्यता | मौर्ख्यम् |
| काठिन्यता | काठिन्यम् |
| शौर्यता | शौर्यम् |
| वैरस्यता | वैरस्यम् |
| नैपुण्यता | नैपुण्यम् |
| प्रामुख्यता | प्रामुख्यम् |
| वैविध्यता | वैविध्यम् |
| साफल्यता | साफल्यम् |
| प्रावीण्यता | प्रावीण्यम् |
| नावीन्यता | नावीन्यम् |
| प्रामाण्यता | प्रामाण्यम् |

वैशिष्ट्यादीनि यथा तथैव **'विशिष्टता' 'विशिष्टत्वम्'** इत्यादीनि रूपाणि अपि साधूनि एव ।

०२. सः **अत्रतः** तत्र गतवान्, **तत्रतः** अन्यत्र गतवान् ।

'अत्रतः' 'तत्रतः' इत्येतत् उभयम् अपि अशुद्धम् । **'इतः' 'ततः'** इति प्रयोक्तव्यम् ।

तस्मिन् इति सप्तम्यन्तात् स्वार्थे (सप्तम्यर्थे) त्रल्प्रत्यये कृते *(सप्तम्यास्त्रल् - ५.३.१०)* 'तत्र' इति रूपं सिद्ध्यति । एवं च 'तत्र' इत्यस्य प्रकृतिः 'तत्'शब्दः । 'तसिल्'प्रत्ययस्य प्रकृतिः अपि 'तत्'शब्दः एव । *(पञ्चम्यास्तसिल् - ५.३.७)* त्रल्प्रत्ययान्तात् सप्तम्यर्थकात् 'तत्र' इत्येतस्मात् तसिल् न विहितः, अपि तु पञ्चम्यन्तात् तच्छब्दात् विहितः । अतः 'तत्रतः' इति असाधु । एवम् एव सप्तम्यन्तात् एतच्छब्दात् त्रलि 'अत्र' इति रूपम् । तसिलि तु इदमः **'इतः'** इति । अत्रापि तसिल् त्रलन्तात् सप्तम्यर्थकात् 'अत्र' इत्येतस्मात् न भवति ।

०३. बालकः **उपरितः** पतितः ।

'उपरितः' इति अपशब्दः । **'उपरि'** इति, **'उपरिष्टात्'** इति वा प्रयोक्तव्यम् ।

ऊर्ध्वशब्दात् सप्तमीपञ्चमीप्रथमार्थेषु उपादेशः रिल्रिष्टातिलौ च *'उपर्युपरिष्टात्' (५.३.३१)* इति सूत्रेण । तस्मात् 'उपरि' 'उपरिष्टात्' इति शब्दौ पञ्चम्यर्थकौ अपि । अतः 'उपरि' इति प्रयुक्ते एव 'ऊर्ध्वभागतः' इत्यर्थः सिद्ध्यति । पुनः तसिलः प्रयोगः न आवश्यकः । अन्यच्च 'उपरि'शब्दात् तसिल् न विहितः अपि । 'बालकः **उपरि** पतितः' इति प्रयोगः कृतः चेत् 'ऊर्ध्वभागात्' इत्यर्थः सिद्ध्यति एव । स्पष्टप्रतीतिः नास्ति इति यदि चिन्त्यते तर्हि **'उपरिष्टात्'** इति प्रयुज्यताम् । **'ऊर्ध्वभागात्'** इति वा प्रयुज्यताम् ।

उपरिष्टात् इत्यस्य पञ्चम्यर्थकत्वम् इति, 'उपरि' इत्यस्य सप्तम्यर्थमात्रकत्वम् इति वा भ्रान्तिः मास्तु । उभयोः अपि सप्तमीपञ्चमीप्रथमार्थाः सन्ति एव ।

०४. विद्यालयतः इत्यत्र **तसिल्प्रत्ययः** ।

'विद्यालयतः' इति रूपं तु साधु । किन्तु अत्र 'तसिल्' इति कथनम् असाधु । वस्तुतः अत्र **तस्प्रत्ययः** । **तसिल् सर्वनामशब्दमात्रात्**

**विहितः**, न तु सर्वस्मात् । अतः विद्यालयतः इत्यत्र तसिल् न भवति । 'तस्' तु भवति । *'आद्यादिभ्यः उपसंख्यानम्'* इति वार्तिकेन [ *'प्रतियोगे पञ्चम्यास्तसिः'* (५.४.४४) इति सूत्रे ] तस् । एषः एव 'सार्वविभक्तिकः तसिः' इत्यपि उच्यते ।

०५. तत् **बहिस्तात्** अन्तः आनय ।

'बहिस्तात्' इति अपशब्दः । **'बहिर्भागतः'** इति, **'बहिः'** इत्येव वा वक्तव्यम् । अस्तातिप्रत्ययः बहिश्शब्दात् न विहितः । अतः बहिस्तात् इत्यत्र अस्तातिः अस्थाने ।

०६. **पाश्चिमात्याः** अपि संस्कृताध्ययने आसक्ताः दृश्यन्ते ।

'पाश्चिमात्याः' इति अपशब्दः । **'पाश्चात्त्याः'** इति वक्तव्यम् । *'दक्षिणापश्चात्पुरसस्त्यक्'* (४.२.९८) इति सूत्रेण पश्चाच्छब्दात् त्यक्प्रत्यये कृते 'पाश्चात्त्यः' इत्यस्य सिद्धिः । त्यक्प्रत्ययः पश्चाच्छब्दात् विहितः, न तु पश्चिमशब्दात् । अतः 'पाश्चिमात्यः' इति रूपं न भवति । **'पाश्चात्त्यः' इत्यत्र तकारद्वयं लेखनीयम् इति स्मर्तव्यम्** । (पश्चाच्छब्दगतः एकः तकारः, त्यक्प्रत्ययगतः अपरः । आहत्य तकारद्वयम् ।)

०७. **औत्तरेयाः** हिन्दीभाषया वदन्ति प्रायः ।

**'औत्तराहाः'** इति वक्तव्यम् । *'उत्तरादाहञ्'* इति वार्तिकात् आहञ् उत्तरशब्दात् । उत्तराशब्दात् ढकि औत्तरेयः इति रूपं तु भवति । किन्तु ढक् अपत्यार्थकः । अतः उत्तरायाः अपत्यम् इति अर्थः सिद्ध्यति । स च अर्थः अत्र न अभिप्रेतः ।

एवं **'वाराणसेयः'** इति शब्दोऽपि । *(नद्यादिभ्यो ढक् - ४.२.९७)* 'वाराणसीयः' इति तु दोषाय ।

०८. एषा **राष्ट्रीया** समस्या अस्ति ।

**'राष्ट्रिया'** इति वक्तव्यम् । राष्ट्रशब्दात् *'राष्ट्रावारपाराद्घखौ'* *(४.२.९३)* इति सूत्रेण 'घ'प्रत्ययः । घस्य इयः *'आयनेयीनीयियः'* *(७.१.२)* इति सूत्रेण । तस्मात् 'राष्ट्रियः' इति रूपस्य सिद्धिः । केचन - ''*वृद्धाच्छः (४.२.११४)* इति सूत्रेण छप्रत्ययः अपि भवति । छस्य ईयः । तस्मात् 'राष्ट्रीयः' इत्यपि सिद्धम्'' इति वदन्ति ।

एतत् असत् । छप्रत्ययः सामान्यतया विहितः । घप्रत्ययः तु विशेषतः विहितः । छघप्रत्यययोः बाध्यबाधकभावः अस्ति एव । अतः छप्रत्ययं बाधित्वा घप्रत्ययः एव प्रवर्तते । तस्मात् 'राष्ट्रियः' इत्येव रूपम् ।

०९. **महाराष्ट्रियाः** मराठीभाषया भाषन्ते ।
**'महाराष्ट्रीयाः'** इति रूपं साधु ।
नात्र राष्ट्रशब्दः अस्ति, येन 'राष्ट्रियः' इति इकारस्य ह्रस्वः स्यात् । महाराष्ट्रशब्दः राष्ट्रशब्दात् अन्यः । अतः न 'घ'प्रत्ययः । अपि तु भवार्थे छप्रत्ययः । *'येन विधिस्तदन्तस्य' (१.१.७२)* इति सूत्रस्य बलात् राष्ट्रशब्दस्य यत् विहितं तत् महाराष्ट्रशब्दस्यापि भवति इति न चिन्तनीयम् । *'समासप्रत्ययविधौ प्रतिषेधः'* इति वार्तिकेन प्रत्ययविधौ तस्य निषेधात् । *'राष्ट्रावार...'* इति सूत्रेण प्रत्ययः खलु विधीयते । अतः महाराष्ट्रीयः इत्यत्र ईकारः एव ।
एवं राष्ट्रशब्दात् पूर्वं (समासाङ्गत्वेन) किञ्चन पदम् अस्ति चेत् न घप्रत्ययः, अपि तु छप्रत्ययः । तस्मात् न ह्रस्वता । अतः 'बहुराष्ट्रीया' 'हिन्दुराष्ट्रीया' इत्यादिषु दीर्घः एव । केवलस्य राष्ट्रशब्दस्य प्रयोगे तु ह्रस्वः ।

१०. दुष्टैः जनानां **हत्या** कृता ।
**'हननं कृतम्'** इति वक्तव्यम् ।
'हत्या' इत्यत्र हनधातोः क्यप् कृतः । स च सुप्युपपदे एव विहितः, न तु निरुपपदे । हत्या इत्यत्र उपपदं किमपि नास्ति । अतः क्यप् न भवति । *'हनस्त च' (३.१.१०८)* इति सूत्रस्य वृत्तौ 'सुप्युपपदे' इति स्पष्टम् उक्तम् । बालमनोरमाटीकायां *'निरुपपदं हत्येति तु असाध्वेव'* इति पङ्क्तिरपि लिखिता । अतः निरुपपदं 'हत्या' इति रूपम् असाधु । 'ब्रह्महत्या' 'आत्महत्या' इत्यादयः तु साधवः ।

११. आरक्षकभटैः **हन्तकः** मारितः ।
'हन्तकः' इति अपशब्दः । 'हननकर्ता' इत्यर्थः अत्र अपेक्षितः । हनधातोः कर्त्रर्थे ण्वुल्प्रत्ययः अत्र कृतः । हनधातोः ण्वुलि *'हनस्तोऽचिण्णलोः' (७.३.३२)* इति हन्तेः तकारः । *'हो हन्तेः...'* (७.३.५४) इति कुत्वेन हकारस्य घकारः । *'युवोरनाकौ'* इति ण्वुलवयवभूतस्य वकारस्य अकादेशः । तस्मात् **'घातकः'** इति रूपं

सिद्ध्यति । कर्त्रर्थे तृच्णिनिप्रभृतयः अपि सन्ति । तृचि **'हन्ता'** इति रूपम् । णिनि **'घाती'** इति । 'हन्तकः' इति रूपं तु कथमपि न भवति ।

१२. अपत्यहीनाः **वृद्धाप्ये** कष्टम् अनुभवन्ति ।
**'वार्धके'** इति, **'वार्धक्ये'** इति वा वक्तव्यम् । वृद्धः एव वृद्धकः । स्वार्थे कः । वृद्धकस्य भावः वार्द्धक्यम् । *'गुणवचनब्राह्मणादिभ्यः ष्यञ्'* इति सूत्रेण ष्यञ् । वृद्धस्य आप्तुं योग्यं यत्किञ्चित् वृद्धाप्यं भवितुम् अर्हति । स च अर्थः अत्र न अभिप्रेतः । बाल्ययौवनादिः दशाविशेषः अत्र वक्तुम् इष्टः । सः भावार्थकः एव स्यात् ।
वार्धक्यविषये अपरः अपि साधुत्वकथनक्रमः दृश्यते । स च इत्थम् - ''वृद्धस्य भावः वार्द्धकम् । *'द्वन्द्वमनोज्ञादिभ्यश्च'* - ५.१.१३३ इति सूत्रेण भावे वुञ् । वार्द्धकम् एव वार्द्धक्यम् । *'चतुर्वर्णादीनां स्वार्थे ष्यञ् वक्तव्यः'* इति वार्तिकेन स्वार्थे ष्यञ् । अतः भावार्थकः वुञ्, वुञर्थकः एव ष्यञ् वा प्रयोक्तव्यः'' इति । किन्तु कौमुद्यां दत्तानि उदाहरणानि पश्यामः चेत् एतेन क्रमेण समर्थनम् अनुचितम् इति भाति । अतः अस्माभिः पूर्वदर्शितक्रमः आश्रितः ।

१३. केरलेषु सर्वे **अक्षरस्थाः** एव ।
**'अक्षरज्ञाः एव'** इति, **'साक्षराः एव'** इति वा प्रयोक्तव्यम् । यः अक्षरे तिष्ठति सः अक्षरस्थः स्यात् । अत्र तु अक्षरज्ञता अपेक्ष्यते । अतः 'अक्षरज्ञः' इति प्रयोगः करणीयः । 'साक्षरः' इत्यस्यापि सः एव अर्थः ।

१४. अध्यक्षभाषणं श्रुत्वा सर्वे **सभिकाः** करताडनं कृतवन्तः ।
**'सभ्याः'** इति वक्तव्यम् ।
'सभायां ये भवन्ति ते' इत्यर्थः अत्र अपेक्षितः । सभायां साधवः **'सभ्याः'** भवन्ति । सभिकाः नाम द्यूतकाराः । तथा हि कोषः - *'सभिकाः द्यूतकारकाः'* इति । (अमरः)
सभा नाम द्यूतस्थानम् अपि । सभा द्यूतम् आश्रयत्वेन अस्य अस्ति इति सभिकः । एवं सभिकाः भवन्ति द्यूतकाराः । सभायां ये भवन्ति ते सभ्याः । *'सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते'* इति अमरः । अतः सभ्यसभिकयोः अर्थभेदं मनसि निधाय शब्दप्रयोगः

करणीयः । अन्यथा सम्मानयोग्याः सभ्याः सभिकशब्दप्रयोगेण निन्दिताः स्युः ।

१५. **सम्भवतः** सः अद्य न आगच्छति ।

**'प्रायः' 'प्रायशः'** इति वा प्रयोक्तव्यम् । सम्भवपदस्य उत्पत्त्यादयः अर्थाः । तथा हि कोषः - *'सम्भवो जनने हेतौ मेलके चारुजन्मनि । आधेयस्याधारानतिरिक्तत्वे समयेऽपि च'* इति । ते च अर्थाः अत्र न अभिप्रेताः । प्रायः, प्रायशः, प्रायेण इत्यादयः शब्दाः अपेक्षितम् अर्थं गमयन्ति ।

१६. सभायाम् **अनुमानतः** त्रिशतं जनाः आसन् ।

अत्रापि **प्रायः, प्रायेण, प्रायशः** इत्यादिषु अन्यतमः शब्दः प्रयोक्तव्यः । 'अनुमानतः' इत्येषः शब्दः अपेक्षितम् अर्थं गमयितुम् असमर्थः । अनुमितेः करणं = हेतुः 'अनुमानम्' इत्येतत् तर्कशास्त्रीयं पारिभाषिकं किञ्चन पदम् । अनुमानपदस्य यः अर्थः सः अत्र न अभिप्रेतः ।

१७. अहम् **अनुमानं** करोमि यत् ....

'अहम् **ऊहां** करोमि यत्' 'अहं **चिन्तयामि** यत्' 'अहं **तर्कयामि** यत्' इत्येवं स्यात् वाक्यस्य आनुपूर्वी ।

अनुमानपदस्य अर्थः पूर्वं विवृतः एव । तादृशः अर्थः अत्र न अपेक्षितः । न ह्यत्र हेत्वादिकं दृष्ट्वा व्याप्तिज्ञानपुरस्सरं पक्षे किमपि निश्चीयते । ऊह्यते, तर्क्यते, चिन्त्यते वा । अतः तदनुगुणम् एव वाक्यं रचनीयम् ।

१८. कृपया मम **सहायं** करोतु मित्र !

**'साहाय्यम्'** इति प्रयोक्तव्यम् । सहायः नाम सहकर्ता सहैव स्थितः वा । एतस्मिन् वाक्ये तु सहायस्य भावः कर्म वा अपेक्षितम् । तस्मिन्नर्थे ष्यञ् । ततः 'साहाय्यम्' इति रूपम् ।

१९. एषः मम **साहाय्यकः** ।

**'सहायकः'** इति पदेन एव इष्टसिद्धिः । सहायः नाम सहकर्ता । सहायः एव सहायकः । स्वार्थे कप्रत्ययः । तथा हि कोषः - *'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः'* इति । (अमरः)

२०. अद्यतनं **गायनम्** अत्युत्तमम् आसीत् ।

**'गानम्'** इति वक्तव्यम् । अत्र गानक्रिया अभिप्रेता । तन्नाम गैधातोः

भावे ल्युटि कृते 'गानम्' इति रूपम् । गायनः नाम गानकर्ता । *'ण्युट्' च' (३.१.१४७)* इति सूत्रेण कर्त्रर्थे ण्युट् । कुशलः गायकः इति तस्य अर्थः । गायकगायनौ समानार्थकौ । (गानकर्तारौ इत्यर्थः )

**२१.** तस्य पुस्तकस्य एका **प्रतिः** प्रेषणीया ।

**'प्रतिकृतिः'** इति प्रयोक्तव्यं, शब्दान्तरं वा ।

'प्रति' इति अव्ययम् । तस्य प्रयोगे विभक्तिप्रत्ययस्य लुक् । अतः विभक्तिप्रत्ययः न दृश्यते । अन्यच्च प्रतिशब्दः प्रतिकृत्यर्थे न प्रयुक्तपूर्वः अपि । हिन्द्यादिभाषाप्रभावकारणतः एतादृशाः शब्दाः प्रयुज्यन्ते ।

**२२.** अष्टावधानकार्यक्रमे **पृच्छकाः** विविधान् प्रश्नान् पृच्छन्ति ।

**'प्रच्छकाः'** इति प्रयोगः वरम् । ज्ञीप्सार्थकस्य प्रच्छधातोः कर्त्रर्थे ण्वुलि प्रच्छकः इति रूपम् । अत्र सम्प्रसारणस्य न कापि प्रसक्तिः । अतः पृच्छकः इति रूपं न ।

ये तु प्रच्छधातोः ण्वुलि 'पृच्छकः' इति रूपम् इति वदन्ति ते तु भ्रान्ताः । वर्तमाने 'पृच्छति' इति यत् रूपं भवति तस्य सादृश्यं मनसि निधाय ते तादृशं रूपं वदन्ति । लटि प्रथमपुरुषैकवचने तु विकरण-प्रत्ययः शः । तस्य सार्वधातुकत्वम् । तस्मात् ङिद्वद्भावः । *('सार्वधातुकमपित्' इति सूत्रेण)* । ततः सम्प्रसारणम् । ण्वुल् तु आर्धधातुकम् । अतः न तस्य ङिद्वद्भावः । तस्मात् न सम्प्रसारणम् । केचन तु - पृच्छां प्रश्नं करोति इत्यस्मिन्नर्थे पृच्छाशब्दात् णिचि ण्वुलि 'पृच्छकः' इति सिद्धम् इति वदन्ति ।

**२३.** अद्य **शारीरिकाध्यापकः** अनुपस्थितः अस्ति ।

**'शारीरकाध्यापकः'** इति, **'दैहिकाध्यापकः'** इति वा वक्तव्यम् । शरीरस्य अयं शारीरः । ततः स्वार्थे कः । शरीरसम्बन्धी इत्यर्थः । शारीरकः अध्यापकः शारीरकाध्यापकः इति कर्मधारयः ।

'शारीरिकः' इति रूपम् अपि भवति । तेन निर्वृत्तम् इत्यर्थे ठक् । ठस्य इकः । तस्मात् शारीरिकपदस्य सिद्धिः । किन्तु अयमर्थः अत्र न अभिप्रेतः ।

अतः अपेक्षितस्य अर्थस्य ज्ञापनाय 'शारीरक'पदम् एव प्रयोक्तव्यम् । 'शारीरकीयम्' इति छप्रत्ययान्तम् अपि प्रयोक्तुं शक्यम् । 'दैहिकाध्यापकः' इति प्रयोगः शोभतेतराम् ।

२४. भवता **न्यायेन** मार्गेण गन्तव्यम् ।
**'न्याय्येन'** इति प्रयोक्तव्यम् ।
न्यायशब्दः पुंलिङ्गविशिष्टः कश्चन अस्ति । स तु न धर्मिपरः । अत्र तु मार्गस्य विशेषणत्वेन धर्मिपरः शब्दः अपेक्षितः । अतः 'न्याय्य'पदं प्रयोक्तव्यम् । 'न्यायादनपेतः' इत्यादयः अर्थाः भवन्ति न्याय्यपदस्य । तथा हि भर्तृहरिप्रयोगः - 'न्याय्यात्पथः प्रविचलन्ति पदं न धीराः' इति ।

२५. सः **निराशया** एवम् उक्तवान् ।
**'निराशतया'** इति वक्तव्यम् । निर्गता आशा यस्मात् सः निराशः । निराशस्य भावः निराशता । *'प्रकृत्यादिभ्यः उपसंख्यानम्'* इति तृतीयान्तस्य तस्य क्रियायाम् अन्वयः ।

२६. भवता **सावधानतया** पठनीयम् ।
भवता **सावधानं** पठनीयम् ।
भवान् **सावधानेन** पठेत् ।
**'सावधानतया' 'सावधानम्' 'सावधानेन'** इति त्रिधा अपि प्रयोगः युक्तः एव ।
अवधानेन सहितः सावधानः । तस्य भावः सावधानता । तस्य प्रकृत्यादित्वात् (प्रकृत्यादिगणे प्रवेशात्) तृतीयान्ततया क्रियायाम् अन्वयः । 'सावधानम्' इत्यत्र कर्मत्वेन क्रियायाम् अन्वयः । 'अवधानेन सह यथा स्यात् तथा' इति अर्थः ।
'सावधानेन' इत्यत्र 'मनसा' इति पदम् अध्याहार्यम् । 'अवधानसहितेन मनसा' इति तात्पर्यं भवति । 'सावधानेन भोक्तव्यम्' इत्यादयः प्रयोगाः बहुधा श्रूयन्ते इत्यतः मनश्शब्दस्य अध्याहारः चिन्तितः । स्थितस्य गतेः चिन्तनार्थम् एषः मार्गः आश्रितः ।

२७. भवता **सावधानेन** गन्तव्यं, न तु वेगेन ।
अत्र **'मन्दगत्या'** इति, **'मन्दम्'** इति वा प्रयोक्तव्यम् ।
मन्दगत्यर्थे अत्र सावधानपदप्रयोगः कृतः । तम् आशयं स्पष्टीकर्तुम् एव वेगस्य निषेधः कृतः । किन्तु मन्दगत्यर्थे सावधानपदं न युज्यते । कश्चित् अवधानसहितः यदा भवति तदा गतिः मन्दा भवेत् नाम । तथापि सावधानपदस्य तु मन्दगतिः इति अर्थः नास्ति । अतः तस्य प्रयोगः अत्र औचित्यं न आवहति ।

२८. किं भोः, **अपरूपदर्शनं** भवतः !

**'विरलदर्शनः भवान्'** इति प्रयोक्तव्यम् ।

प्रादेशिकभाषाप्रभावकारणतः विरलार्थे अपरूपशब्दस्य प्रयोगः कृतः अत्र । तत् अयुक्तम् । अपगतं रूपं यस्मात् सः अपरूपः । तन्नाम रूपहीनः । तादृशः अर्थः न अत्र अभिप्रेतः ।

२९. राज्ञः धनागारे **यथेच्छं** धनम् अस्ति ।

**'प्रभूतम्'** इति प्रयोक्तव्यम् ।

अत्र धनस्य बाहुल्यम् इष्यते, न तु यथेष्टता । इच्छाम् अनतिक्रम्य यथेच्छम् । धनस्य सत्तायां कस्यापि इच्छायाः प्रसक्तिः नास्ति ।

क्वचित् 'यथेच्छम्' 'प्रभूतम्' इति उभयोः अपि प्रयोगः शक्यः । (सूक्ष्मः अर्थभेदः तु तत्र भवति एव ।)

यथा - सः यथेच्छं/प्रभूतं कार्यं करोति ।

अत्र पर्यायेण उभयोः अपि पदयोः प्रयोगे न विसङ्गतिः । एतावता तयोः पर्यायार्थकता न ।

यत्र यथेच्छशब्दः न सङ्गच्छते तादृशं स्थलं तु उपरि दर्शितम् । यत्र प्रभूतपदस्य प्रयोगः न सङ्गच्छते तादृशं स्थलं यथा - त्वं मम गृहे यथेच्छं वस ।

अतः यथेच्छ-प्रभूतयोः नियतप्रयोगस्थलानि सन्ति, पर्यायेण प्रयोगोऽपि क्वचित् सङ्गच्छते एव । अतः तयोः प्रयोगविषये सावधानता अपेक्ष्यते ।

३०. भवतः आगमनेन मम गृहं **पुनीतं** जातम् ।

'पुनीतम्' इति अपशब्दः । **'पूतम्'** इति प्रयोक्तव्यम् ।

पवनार्थकस्य पूङ्धातोः क्तप्रत्यये पूतः इति रूपम् । एतस्मिन् एव अर्थे **पवित्र**शब्दोऽपि प्रयोक्तुं शक्यः ।

३१. **अद्यत्वे** जनाः धनैकपराः दृश्यन्ते ।

**'अद्यत्वे'** इति प्रयोगः न दोषाय ।

'आज कल' इत्यर्थे 'अद्यत्व' शब्दः प्रयुज्यते बहुधा । तत् असहमानाः केचन - 'अस्मिन् अहनि इत्यर्थकात् अद्यशब्दात् भावार्थकः त्वप्रत्ययः न दृष्टचरः, भवार्थे ट्युप्रत्ययात् अद्यतनः इत्येव साधु' इति वदन्ति । तत् असत् । 'अद्यत्वे' इति भाष्यकारैः एव निपातितं दृश्यते । 'अस्मिन् काले' इत्येव अर्थः तस्य ।

भाष्यप्रयोगः यथा -

*'पुराकल्प एवमासीत्....। **अद्यत्वे** न तथा । वेदमधीत्य...'*

- पस्पशाह्निके प्रयोजनचिन्तनावसरे

**३२.** अद्य **सृजनात्मक**प्रतिभा विरला जाता अस्ति ।

**'सर्जनात्मकम्'** इति वक्तव्यम् । 'सृजनम्' इति अपशब्दः ।

सृजधातोः ल्युटि गुणः तु दुर्वारः । गुणे कृते 'सर्जनम्' इति रूपम् ।

**३३.** अयं **श्रेष्ठतमः** पण्डितः ।

**'श्रेष्ठतमः'** इति साधुः एव इति वदन्ति प्रसिद्धाः वैयाकरणाः श्रीमन्तः चारुदेवशास्त्रिवर्याः ।

अतिशयेन प्रशस्यः भवति श्रेष्ठः । *'प्रशस्यस्य श्रः' (५.३.६०)* इति सूत्रेण प्रशस्यस्य श्रादेशः । इष्ठन्प्रत्ययः *'अतिशायने तमबिष्ठनौ' (५.३.५५)* इति सूत्रेण । प्रशस्यतमार्थे एव अत्र इष्ठन्प्रत्ययः । एतादृशात् आतिशायनिकान्तात् आतिशायनिकः तमप् पुनः न भवति इति केचन अभिप्रयन्ति । चारुदेवशास्त्रिणां पङ्क्तिः तु एषा -

*''यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदा आतिशायनिकान्तात् अपरः आतिशायनिकः प्रत्ययः भवत्येव इति वृत्तौ उक्तम् । तेन श्रेष्ठतमः इति साधु''* इति ।

**३४.** अद्य समाजे **जागृतिः** न दृश्यते ।

**'जागर्या'** इति प्रयोक्तव्यम् । जागृतिः इति अपशब्दः ।

*'जागर्तेरकारो वा'* इति वार्तिकेन अकारः विकल्पेन । अकारे कृते **'जागरा'** इति रूपम् । अकाराभावे शः । शे परतः सार्वधातुके यक् । *'जाग्रोऽविचिण्...'* इति गुणः । ततः **'जागर्या'** इति रूपं सिद्धम् । क्तिनः अपवादत्वेन एषः विधिः अस्ति । **अतः जागृधातोः क्तिन्नन्तं रूपं नास्ति ।**

**३५.** समाज**जागर्तिं** विना संस्कृतविकासः असाध्यः ।

'जागर्तिः' इत्यस्य परिहारः वरम् । **'जागरा'** इति, **'जागर्या'** इति वा प्रयोक्तव्यम् ।

'जागृधातोः क्तिन्नन्तं रूपं नास्ति' इति पूर्वम् उक्तम् एव । 'जागर्तिः' इत्यत्र क्तिच् वक्तव्यः । चारुदेवशास्त्रिणः शब्दापशब्दविवेके वदन्ति - *'जागर्तिरिति क्तिचि कथञ्चित् व्युत्पाद्यम् । प्रयोगस्तु जागर्तेः*

*सुदुर्लभः'* इति । अतः जागर्तेः प्रयोगस्य परिहारः अपि वरम् एव ।

३६. भवता **कतमं** पुस्तकम् इष्यते ?

'कतमम्' इति अशुद्धम् । **'कतमत्'** इति वक्तव्यम् ।

कतमशब्दः 'डतमच्'प्रत्ययान्तः । नपुंसके तु *'अद्ड्डतरादिभ्यः पञ्चभ्यः'* *(५.१.२५)* इति अद्डादेशः । ततः कतमत् इति रूपम् । कतमच्छब्दस्य पुंलिङ्गरूपं 'कतमः' इति । तत् अकारान्तम् । पुंसि यः अकारान्तः भवति सः नपुंसके अमन्तः भवति एव इति न ।

३७. **अन्यतमत्** उदाहरणं वदतु भोः ।

'अन्यतमत्' इति अपशब्दः । **'अन्यतमम्'** इति प्रयोक्तव्यम् । यद्यपि अन्यतमशब्दः कतमशब्दः इव दृश्यते, तथापि सः कतमशब्दः इव डतमच्प्रत्ययान्तः न । अव्युत्पन्नः सः डतमच्प्रत्ययान्तार्थं बोधयति स्वभावात् ।

३८. (अत्र चिकित्सार्थं धनं न स्वीक्रियते ।) **'उचिता'** चिकित्सा अत्र । अत्र 'उचित'शब्दः अस्थाने । **'निश्शुल्का'** इति प्रयोक्तव्यम् । 'उचित'शब्दः 'योग्यः' 'अर्हः' इत्यादीन् अर्थान् बोधयति । ते च अर्थाः अत्र न अपेक्षिताः । शुल्कं विना या चिकित्सा सा भवति 'निश्शुल्का' ।

३९. एषः धनिकः **उदारी** अस्ति ।

'उदारी' इति अपशब्दः । **'उदारः'** इति प्रयोक्तव्यम् ।

उदारः स्वयं धर्मिपरः । औदार्यवान् इत्यर्थः । अतः तस्य धर्मिपरतां गमयितुम् अन्यः मतुबर्थकः प्रत्ययः न आवश्यकः ।

४०. यदि सर्वाणि **घटकानि** सम्यक् कार्यं कुर्वन्ति तर्हि संस्था वर्धते ।

**'घटकानि'** इति प्रयोगः न दोषाय । शब्दान्तरम् अपि प्रयोक्तुं शक्यम् ।

'Unit' इत्यर्थं ज्ञापयितुम् अयं शब्दः प्रयुज्यते । 'सूत्रघटकम् इदं पदम्' इत्यादयः प्रयोगाः श्रूयन्ते शास्त्रेषु । अत्र 'घटक'पदस्य सम्बन्धकल्पकम्, अङ्गम् इत्यादयः अर्थाः । तस्मात् 'घटक'पदं परम्परया Unit इति अर्थं बोधयितुम् अर्हति ।

यदि एतेन पदेन न तुष्टिः तर्हि पदान्तरं प्रयुज्यतां नाम ।

४१. एतस्य पुस्तकस्य मुद्रणाय उत्तमस्य **कर्गजस्य** उपयोगः कृतः ।
'कर्गजस्य' इत्येतस्य परिहारः वरम् । **'कागदस्य'** इति प्रयोगः उचितः ।
कर्गजशब्दस्य प्रयोगः बहुत्र क्रियमाणः दृश्यते । किन्तु तस्य व्युत्पत्तिः का इति न ज्ञायते ।
'Paper' इत्यर्थः बोधयितुम् इष्टः । तस्मिन् अर्थे 'कागद'शब्दस्य प्रयोगः वरम् । स च शब्दः प्रयुक्तपूर्वः, प्रकृतिप्रत्ययादिविवेकयुक्तः च । 'कागः कागवर्णो मस्यादिः दीयते अत्र' इति विग्रहः । प्रयोगो यथा -

भूर्जे वा वसने रक्ते क्षौमे वा तालपत्रके ।
**कागदे** वाष्टगन्धेन ....... ।।

*- मन्त्रकल्पद्रुमः*

४२. अत्र सर्वाणि **सौविध्यानि** सन्ति ।
अत्र **'आनुकूल्यानि'** इति शब्दः, शब्दान्तरं वा प्रयोक्तव्यम् ।
शोभना विधा सुविधा । ततः स्वार्थे ष्यञि सौविध्यम् इति रूपस्य सिद्धिः । विधा नाम प्रकारः । अत्र प्रकारार्थस्य न कोऽपि सम्बन्धः । अतः अस्थाने एतस्य शब्दस्य प्रयोगः । आनुकूल्यम् इति प्रयोगः, सौलभ्यम् इति प्रयोगो वा अत्र औचित्यम् आवहति ।
अथवा शिष्टप्रयोगः यदि कोऽपि स्यात् तर्हि इत्थं तस्य समर्थनं शक्यम् - 'सुकरतया विधत्ते इति सुविधः । *'आतश्चोपसर्गे'* *(३.१.१३६)* इति कः । सुविधस्य भावः सौविध्यम्' इति ।
स्थितस्य गतिः दर्शिता अत्र । तथापि 'आनुकूल्य'शब्दस्य प्रयोगः एव वरम् इत्यत्रैव नैर्भर्यम् अस्माकम् ।

४३. **ग्रामान्तरप्रदेशे** मम गृहम् अस्ति ।
'ग्रामान्तरप्रदेशे' इति प्रयोगः अयुक्तः । **'ग्रामप्रदेशे'** इति, **'अमुक-ग्रामजनपदे'** इति वा प्रयोक्तव्यम् ।
ग्रामान्तरं भवति अन्यः ग्रामः । अन्यस्मिन् ग्रामे वसामि इत्यर्थः अत्र न विवक्षितः । केषाञ्चित् महानगराणां नाम्ना एव जनपदाः (जिल्ला) अपि भवन्ति । तादृशे वसन् कश्चित् उपर्युक्तं वचनं वदति । अतः अत्र ग्रामान्तरशब्दः परिहरणीयः । तत् जिल्लाक्षेत्रं सूचयितुं समुचितं पदान्तरं प्रयोक्तव्यम् ।

४४. येन **सम्मानम् अवमानं** च समानतया दृश्यते सः समदर्शी ।
**'सम्मानः अवमानः च'** इति प्रयोक्तव्यम् ।
सम्मानावमानशब्दौ पुंलिङ्गे एव । 'गर्वोऽभिमानोऽहङ्कारः' इति अमरकोषः अत्र प्रमाणम् । (सम्मानावमानयोः उपसर्गभेदः, प्रत्ययः तु समानः ।) अनयोः एव अर्थयोः **सम्माननम्** इति, **अवमाननम्** इति च ल्युडन्तरूपम् अपि अस्ति । ल्युडन्तं च नपुंसकम् । **अपमानशब्दः** अपि कश्चन अस्ति । अवमानः इत्येव अर्थः तस्य ।

४५. भारतम् इदम् **एकम्** । अत्र विघटनं कदापि न भवेत् ।
**'भारतम् इदम् अखण्डम्'** इति प्रयोक्तव्यम् । 'एकम्' इति पदम् एकत्वं द्योतयति, तन्नाम द्वित्वादिकं निवारयति । भारतस्य एकत्वं तु स्वतः सिद्धम् एव । प्रकृतवाक्ये अखण्डत्वं हि विवक्षितं, न तु एकत्वम् । 'एक'शब्दस्य अखण्डार्थप्रतिपादकत्वं कुत्रापि न दृष्टचरम् । अतः 'भारतम् इदम् अखण्डम्' इति प्रयोगः एव उचितः ।

४६. पण्डिताः भवन्तः **कुत्र**, पामराः वयं **कुत्र** ?
**'भवन्तः क्व, वयं क्व'** इति प्रयोगः एव उचितः स्यात् ।
महदन्तरं यदा द्योतयितुम् इष्यते तदा उभौ क्वौ प्रयुज्येते । तथा च वचनम् - *'द्वौ क्वौ महदन्तरं सूचयतः'* इति । प्राचीनप्रयोगः यथा -

• क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।

- रघु. १.२

• क्व वयं क्व परोक्षमन्मथो........

- शाकुन्तलम् - २.१८

एतस्मिन् एव अर्थे द्वयोः 'कुत्र'पदयोः प्रयोगः न दृष्टपूर्वः । अतः एव चारुदेवशास्त्रिणः वदन्ति - *''द्वौ क्वौ महदन्तरं सूचयतः । तत्कस्मात् इति चेत् । व्यवहारे परतन्त्राः वयं, न स्वतन्त्राः''* इति ।

४७. **कुत्र कुत्र** शक्यं **तत्र सर्वत्र** अहं संस्कृतेन वदामि ।
**'यत्र यत्र** शक्यं तत्र सर्वत्र' इति प्रयोक्तव्यम् । यत्तच्छब्दाभ्यां यः अर्थः अवगम्यते तं द्योतयितुम् इच्छति वक्ता । यच्छब्दस्थाने किंशब्दः प्रयुक्तः अस्ति तेन । अयं प्रयोगः अपेक्षितम् अर्थं न अवगमयति । अधिकरणजिज्ञासायां 'कुत्र' इत्येतत् प्रयुज्यते । अत्र तादृशी जिज्ञासा नास्ति । अतः अत्र यच्छब्दः एव प्रयोक्तव्यः ।

४८. **काया** वाचा मनसा अहं देशसेवां करोमि ।

**'कायेन'** इति प्रयोक्तव्यम् । 'काया' इति रूपम् असाधु ।

देहपर्यायः कायशब्दः पुंसि । सः अकारान्तः । तस्मात् तृतीयाविभक्तौ तस्य रूपं भवति - **'कायेन'** इति । अतः 'काया' इति प्रयोगः भ्रान्त्या एव ।

४९. संस्कृतभाषायाः **उगमः** कदा अभूत् इति केनापि न ज्ञायते ।

'उगमः' इति अपशब्दः । **'उद्गमः'** इति, **'उत्पत्तिः'** इति वा प्रयोक्तव्यम् ।

'उद्गमः' इत्यत्र उदुपसर्गपूर्वकस्य गम्धातोः भावे अप् । 'उत्पत्तिः' इत्यत्र अपि उपसर्गः उत् एव । पत्लृधातोः क्तिन् तत्र । उभयत्रापि अर्थः समानः । 'उ' इति उपसर्गः न कोऽपि अस्ति, येन धातोः पूर्वं तस्य प्रयोगः स्यात् । उपसर्गस्तु 'उत्' इति । अतः उत्पूर्वकः गम्धातुः पत्लृधातुर्वा प्रयोक्तव्यः उत्पत्त्यर्थे ।

५०. 'किमर्थम् आगतम्' इति पृष्टे तेन उक्तं - **'तूष्णीम् आगतम्'** इति ।

**'निष्कारणम्** आगतम्' **'विशेषकारणं विनैव** आगतम्' इत्यादीनि वाक्यानि प्रयोक्तव्यानि ।

अत्र 'तूष्णीम्' इति पदम् अस्थाने । तूष्णीम् इति मौनार्थकम् अव्ययम् । तथा हि अमरः - *'मौने तु तूष्णीं तूष्णीकाम्'* इति । मौनं नाम निर्वचनस्थितिः । प्रकृतवाक्ये निर्वचनस्थितेः सवचनस्थितेः वा जिज्ञासा नास्ति । कारणजिज्ञासा अत्र । अतः उत्तररूपेण निष्कारणादयः शब्दाः प्रयोक्तव्याः ।

प्रादेशिकभाषायां केषाञ्चित् पदानाम् अर्थद्वयं भवति । प्रसङ्गानुगुणं स स अर्थः अवगम्यते । अर्थसूक्ष्मताम् अजानानाः केचन सर्वत्रापि एकमेव पदं प्रयुञ्जते अनुवादाद्यवसरे ।

५१. सभायाम् अतिथिं परिचाययता कार्यकर्त्रा उक्तं - **'भवन्तः** महान्तः कवयः' इति ।

**'एषः महाकविः'** इति वाक्यविन्यासः वरं स्यात् ।

परिचयकथनसमये अङ्गुलिनिर्देशपूर्वकं हिन्दीभाषया उच्यते 'आप' इति । सा तु हिन्दीशैली । संस्कृतशैली ततः भिन्ना । सन्निकृष्टस्य जनस्य निर्देशाय एतदादयः शब्दाः प्रयुज्यन्ते, न तु भवच्छब्दः । अतः

'एषः' इति प्रयोगः एव युक्तः । आदरार्थे सर्वत्र बहुवचनान्तप्रयोगः अपि न युक्तः । प्रादेशिकभाषायां तु आदरद्योतनाय बहुवचनान्तता एव प्रयुज्यते । संस्कृतभाषायां तु वर्यमान्यादयः आदरसूचकाः शब्दाः । एकवचनान्तं तान् (आदरार्हान्) अपि निर्दिशति एव । अतः आदर-द्योतनाय वर्यमहोदयादीनां प्रयोगपुरस्सरम् एकवचनान्तप्रयोगः न दोषाय सर्वथा ।

५२. **तत्रभवन्तो भवन्तः** सर्वे प्रणम्यन्ते अस्माभिः ।

**'तत्रभवन्तः सर्वे'** इति प्रयोगः प्रशस्ततरः ।

'तत्रभवन्तः' 'अत्रभवान्' इत्यादयः पदसमुदायाः पूज्यवचनाः । 'तत्र'पदसन्निधाने पूज्यार्थाभिधानेऽपि भवच्छब्दः सर्वनामत्वं तु न जहाति । अतः एव नाटकादिषु तत्रभवच्छब्दस्य अनन्तरं नाम्नः एव प्रयोगो दृश्यते ।

यथा - 'तत्रभवान् कालिदासः आह...' इत्येवम् ।

किन्तु 'तत्रभवन्तो भवन्तः' इत्येषा आनुपूर्वी तु प्राचुर्येण दृश्यते लोके । तस्मात् करिकलभादिषु यथा तथैव अत्रापि तत्रभवच्छब्दस्य पूज्यार्थ-मात्रभिधायकत्वम् इति अभिप्रयन्ति वैयाकरणाः । अतः 'तत्रभवन्तो भवन्तः इति प्रयोगः अशुद्धः' इति वक्तुं न शक्यते । अप्रशस्तता तु आरोप्येत कैश्चित् ।

५३. **वराकेन** तेन महत् कष्टम् अनुभूतम् ।

'वराकेन' इति अशुद्धम् । **'वराकेण'** इति वक्तव्यम् ।

णत्वस्य निमित्तं - रेफः, षकारः ऋकारः च । रेफषकारयोः परः ऋकारात् परश्च नकारः णत्वं प्राप्नोति । *'रषाभ्यां नो णः समानपदे' (८.४.१)* इति सूत्रम्, *'ऋवर्णान्तस्य णत्वं वाच्यम्'* इति वार्तिकं च अत्र प्रमाणम् ।

निमित्तनकारयोः मध्ये अट्कुप्वादयः सन्ति चेदपि णत्वं प्रवर्तते - *'अट्कुप्वाङ्नुम्व्यवायेऽपि' (८.४.२)* इति सूत्रेण । 'वराकेण' इत्यत्र निमित्तस्य रेफस्य अनन्तरं आकार-ककार-एकाराः सन्ति । अतः णत्वं प्रवर्तते एव । तच्च णत्वं नित्यम् । अतः 'वराकेण' इत्येव प्रयोक्तव्यम् ।

एतादृशानि अन्यानि उदाहरणानि यथा -

| *अशुद्धम् (✗)* | *शुद्धम् (✓)* |
|---|---|
| शुष्कानि | शुष्काणि |
| वैशेषिकानाम् | वैशेषिकाणाम् |
| वृषभानाम् | वृषभाणाम् |
| निरूपकेन | निरूपकेण |
| द्रवद्रव्येन | द्रवद्रव्येण |
| विश्वासार्हानाम् | विश्वासार्हाणाम् |
| पितृव्यानाम् | पितृव्याणाम् |
| क्षत्रियानाम् | क्षत्रियाणाम् |
| तक्षकेन | तक्षकेण |
| त्रिवर्षीयेन | त्रिवर्षीयेण |

५४. विषयेऽस्मिन् **विमर्शकाणाम्** आशयः अन्यः एव अस्ति । **'विमर्शकानाम्'** इति वक्तव्यम् । णत्वम् अत्र न सम्भवति । अत्र णत्वस्य निमित्तं रेफः । रेफनकारयोः मध्ये शकारः अपि अस्ति । स च णत्वस्य बाधकः । अतः अत्र णत्वं न भवति । एतादृशानि सन्ति बहूनि उदाहरणानि । अतः निमित्तनकारयोः मध्ये विघ्नकारकाः वर्णाः सन्ति किम् इति परिशील्य एव णत्वं कर्तव्यम् ।

एतादृशानि अन्यानि उदाहरणानि यथा -

| *अशुद्धम् (✗)* | *शुद्धम् (✓)* |
|---|---|
| कार्यदर्शिणा | कार्यदर्शिना |
| राजकीयेण | राजकीयेन |
| प्रतिमाणाम् | प्रतिमानाम् |
| नर्तकाणाम् | नर्तकानाम् |
| अर्चकेण | अर्चकेन |
| चर्च्यमाणः | चर्च्यमानः |
| दृश्यमाणम् | दृश्यमानम् |

५५. केनचित् महानुभावेन **'सीतायणम्'** इति ग्रन्थः लिखितः । **'सीतायनम्'** इति प्रयोक्तव्यम् । 'सीतायणम्' इति अपशब्दः ।

णत्वप्राप्तेः निमित्तं भवति रेफः षकारः वा । अट्कुप्वादीनां व्यवधाने सत्यपि णत्वं भवति निमित्ते सति । निमित्ताभावे तु णत्वं कथमपि न भवति । सूर्यस्यैव अभावे सूर्यकिरणानां प्रसक्तिः कथम् ? 'सीतायणम्' इत्यत्रापि एषैव गतिः । णत्वनिमित्तभूतः रेफः षकारः वा नास्ति तत्र । तस्मात् 'सीतायनम्' इत्येव रूपम् । णत्वप्रकरणम् अपरिशीलितवद्भिः प्रयुज्येरन् 'सीतायणम्' इत्यादीनि पदानि ।

एतादृशानि कानिचन उदाहरणानि यथा

| अशुद्धम् (✗) | शुद्धम् (✓) |
|---|---|
| अनुधाव्यमाणः | अनुधाव्यमानः |
| चिन्त्यमाणे | चिन्त्यमाने |
| शशाङ्केण | शशाङ्केन |
| माण्डलिकाणाम् | माण्डलिकानाम् |
| उट्टङ्कणम् | उट्टङ्कनम् |

५६. **दौर्भाग्येन** मया णत्वविषये अधिकं न ज्ञायते ।

**'दौर्भाग्येण'** इति प्रयोक्तव्यम् । 'दौर्भाग्येन' इति अपशब्दः । निमित्तस्य सद्भावे उत्तरपदे यदा कवर्गः भवति तदा (प्रातिपदिकान्तनुम्-विभक्तिषु) णत्वं नित्यम् । *'कुमति च' (८.४.१३)* इति सूत्रम् । अतः 'दौर्भाग्येण' इति रूपम् एव प्रयोक्तव्यम् ।

विस्तरः तु एषः -

यत्र खण्डद्वयं भवति (व्रीहिवापिणा इत्यादिषु) तत् सखण्डं पदम् इति उच्यते । तत्र निमित्तं पूर्वपदे, नकारश्च उत्तरपदे यदा भवति तदा *'प्रातिपदिकान्त...'* इति सूत्रेण विकल्पेन णत्वम् । (स च नकारः प्रातिपदिकान्ते स्थितः, विभक्तिसम्बद्धः, नुम्सम्बद्धः वा भवेत् इति नियमः ।[१]) यदि उत्तरपदं कवर्गवत् ('कु'मत्) भवति तदा णत्वं नित्यं *'कुमति च'* इति सूत्रेण ।

अन्यानि उदाहरणानि यथा -

| अशुद्धम् (✗) | शुद्धम् (✓) |
|---|---|
| शुष्कमेघानाम् | शुष्कमेघाणाम् |

---

१. णत्वसम्बद्धाः विशेषाः 'णत्वणिजन्त'नामके लघुपुस्तके द्रष्टव्याः । अत्र तु णत्वप्रकरणं ज्ञापयितुं न उद्युक्तम् । अतः णत्वसम्बद्धदोषस्थानमात्रं दर्शितम् ।

| | |
|---|---|
| चक्रवाकेन | चक्रवाकेण |
| वर्षभोगिना | वर्षभोगिणा |
| रविमयूखेन | रविमयूखेण |
| वरयुवकानाम् | वरयुवकाणाम् |
| गिरिगुहानाम् | गिरिगुहाणाम् |

५७. सः **नियमिततया** योगासनकक्ष्यां गच्छति ।

'नियमिततया' इति शब्दः अस्थाने । **'नियततया'** इति प्रयोक्तव्यम् । 'नियमितः' इत्यत्र इतच्प्रत्ययः वक्तव्यः स्यात् । *'तदस्य सञ्जातं तारकादिभ्यः इतच्' (५.२.३६)* इति हि सूत्रम् । 'नियमयुक्तः' इति तात्पर्यं भवति । 'नियमयुक्तता' अत्र न विवक्षिता । 'सातत्येन' इत्यर्थः अत्र अपेक्षितः । तम् अवगमयितुम् अर्हति 'नियत'शब्दः । अतः 'नियततया' इति प्रयोगः एव औचित्यम् आवहति अत्र ।

५८. **आगतवतेभ्यः** सर्वेभ्यः धन्यवादाः समर्प्यन्ते ।

'आगतवतेभ्यः' इति अपशब्दः । **'आगतवद्भ्यः'** इति वक्तव्यम् । 'आगतवद्भ्यः' इत्यस्य प्रातिपदिकम् 'आगतवत्' इति । तकारान्तः शब्दः सः । *'बहुवचने झल्येत्' (७.३.१०३)* इति एकारः अदन्ताङ्गस्य विहितः, न तु तकारान्तस्यापि । अतः अत्र एकारश्रवणं नास्ति । आगतवत् + भ्यस् इति स्थिते सन्धिकार्ये रुत्वविसर्गे च 'आगतवद्भ्यः' इति रूपम् । 'आगतवतेभ्यः' 'आगतवतानाम्' इत्यादयः तु बालिशाः प्रयोगाः ।

५९. अद्य मन्त्रिमण्डलस्य **पुनर्रचना** विहिता ।

'पुनर्रचना' इति अपशब्दः । **'पुनारचना'** इति वक्तव्यम् । पुनर् इति रेफान्तम् अव्ययम् । रचनाशब्दः रेफादिः । पुनर् + रचना इत्यत्र रेफात् रेफः परः अस्ति रेफस्य रेफे परे लोपः *'रो रि' (८.३.१४)* इति सूत्रेण । लोपे कृते पूर्वस्य अकारस्य दीर्घः *'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६.३.१११)* इति सूत्रेण । तदा च 'पुनारचना' इति रूपम् । 'पुनर्रचना' इति रूपं प्रादेशिकभाषासु प्रयुज्यते । असंस्कृतं रूपं तत् ।

अन्यानि उदाहरणानि यथा -

पुनः + रोषः = पुनारोषः

अन्तः + राज्यीयम् = अन्ताराज्यीयम्
पुनः + रूपम् = पुनारूपम्

एवमेव नीरोगता (निर् + रोगता), नीरसः (निर् + रसः) धनूराशिः (धनुस् + राशिः) इत्यादयः अपि ।

६०. तस्य नायकस्य **महानता** जनैः न ज्ञाता एव ।

'महानता' इति अपशब्दः । **'महत्ता'** इति प्रयोक्तव्यम् ।

वक्ता अत्र भाववाचकं 'ता'प्रत्ययं कर्तुम् इच्छति । स च प्रत्ययः प्रातिपदिकात् भवति । 'महान्' इत्यस्य प्रातिपदिकं 'महत्' इति । तस्य 'ता'प्रत्यये 'महत्ता' इति रूपम् । प्रथमान्तात् 'ता'प्रत्ययः न भवति । अतः 'महानता' इति रूपम् अपि न भवति ।

६१. एतत् पत्रं भवतः **अवगाहनाय** प्रेष्यते ।

'अवगाहनाय' इति प्रयोगः अस्थाने । **'विषयज्ञापनाय** भवते प्रेष्यते' इति, भङ्ग्यन्तरेण वा प्रयोक्तव्यम् ।

अवगाहनं नाम अवतरणम्, अन्तः प्रवेशः वा । स च अर्थः अत्र न अभिप्रेतः । परिशीलनं, ज्ञापनम्, अवधानाकर्षणं वा अत्र अपेक्ष्यते । अतः तदनुगुणः वाक्यप्रयोगः एव करणीयः । प्रादेशिकभाषासु अवगाहनपदस्य परिशीलनाद्यर्थाः स्युः नाम । संस्कृते तु तादृशस्य अर्थस्य द्योतनसामर्थ्यं तस्य पदस्य नास्ति ।

६२. कार्यक्र**मोपरान्तं** सः गृहं गतवान् ।

'उपरान्त'शब्दः न संस्कृतः । **'कार्यक्रमानन्तरम्'** इति प्रयोक्तव्यम् । प्रादेशिकभाषायां योऽयम् उपरान्तशब्दः श्रूयते सः न संस्कृतशब्दः । संस्कृताभासः सः । अतः तस्य प्रयोगः सर्वथा परिहरणीयः ।

६३. आश्रमे जनानाम् **आवागमनं** विशेषतः दृश्यते ।

'आवागमनम्' इति अपशब्दः । **'गमनागमनम्'** इति प्रयोक्तव्यम् । प्रकृतवाक्ये (जनानां) गमनम् आगमनं च वक्तुम् इष्टम् । तम् अर्थं बोधयितुम् 'आवागमनम्' इति शब्दः न समर्थः । आवागमनम् इत्यत्र आ + अव + आ इत्येतेषाम् उपसर्गाणां सद्भावः वक्तव्यः भवेत् । तावता अपि अपेक्षितस्य अर्थस्य अभिव्यञ्जने तत् पदं न समर्थम् । अतः तस्य पदस्य प्रयोगस्य त्यागः एव श्रेयसे ।

६४. भारतेन **'क्षिपणिः'** सज्जीकृता अस्ति ।

'क्षिपणिः' इत्यस्य परिहारः वरम् । **'क्षेपणी'** इति प्रयोक्तव्यम् । क्षिपधातोः करणार्थे ल्युट्प्रत्ययः *'करणाधिकरणयोश्च'* (३.३.११७) इति सूत्रेण । ल्युटः टित्त्वात् *'टिड्ढाणञ्...'* इति सूत्रेण ङीप् । *'पुगन्तलघूपधस्य च'* (७.३.८६) इति सूत्रेण गुणः । तस्मात् 'क्षेपणी' इति रूपम् ।

*'संज्ञापूर्वको विधिः अनित्यः'* इति परिभाषायाः आधारेण गुणविधेः अनित्यत्वम् अङ्गीकृत्य गुणाभावयुक्तं 'क्षिपणी' इति रूपं समर्थयितुं शक्यं, यदि प्रामाणिकः प्रयोगः दृष्टः स्यात् । तादृशस्य अदर्शनात् 'क्षेपणी' इति प्रयोगः एव वरम् ।

६५. **पत्रवितरकः** पत्राणि वितरति ।

**'वितारकः'** इति प्रयोक्तव्यम् ।

*'ण्वुल्तृचौ'* (३.१.१३३) इति सूत्रेण ण्वुलि *'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन'* (वा - ७.१.१०२) इति वृद्धिः । तस्मात् (वि)तारकः इति रूपम् । ण्वुलि तरकः इति रूपं तु न भवति । 'वितारकः' इत्येव प्रयोक्तव्यम् ।

अथवा, यदि 'वितरकः' इत्यपि साधनीयः एव इत्याग्रहः तर्हि एवं व्युत्पाद्यताम् -

(वि)तरतीति (वि)तरः । पचाद्यच् । (वि)तरः एव (वि)तरकः इति स्वार्थे कप्रत्ययः ।

एतदत्र स्मर्तव्यं यत् स्थितस्य गतेः चिन्तनाय दर्शितः मार्गः एषः । प्रामाणिकप्रयोगाभावे तु अस्माभिः क्रियमाणः 'वितरक'शब्दस्य प्रयोगः अनुचितः एव स्यात् ।

६६. सः **चलचित्रं** द्रष्टुं गतवान् ।

**'चलचित्रम्'** इति रूपं साधु एव । एतस्मिन् एव अर्थे **'चलच्चित्रम्'** इति, **'चलनचित्रम्'** इति वा अपि प्रयोक्तुं शक्यम् ।

यत् चित्रं चलं (चञ्चलं) भवति तत् 'चलचित्रम्' । 'चलं लोलं चलाचलम्' इति हि अमरः । यत् चित्रं चलत् भवति तत् 'चलच्चित्रम्' । कर्मधारयसमासः अत्र । चलनोपेतं चित्रं चलनचित्रम् । अतः त्रीणि अपि पदानि साधूनि एव ।

६७. सः **तैत्तरीयोपनिषदं** पठति ।

'तैत्तरीयम्' इति अपशब्दः । **'तैत्तिरीयम्'** इति प्रयोक्तव्यम् ।

तित्तिरिः नामः कश्चन ऋषिः । तत्सम्बद्धं तैत्तिरीयम् । यदि ऋषेः नाम तैत्तरिः इति स्यात् तर्हि तैत्तरीयम् इति शब्दः साधुः स्यात् । किन्तु तन्नामकः ऋषिः नास्ति । ऋषेः नाम तु 'तित्तिरिः' इति । तस्मात् 'तैत्तिरीयम्' इत्येव शुद्धम् ।

६८. पुनश्चिन्तनाय एषः **सकालः** ।

'सकालः' इति प्रयोगः अस्थाने । **'सुकालः'** इति, **'योग्यः कालः'** इति वा प्रयोक्तव्यम् ।

'सकालः' इत्यस्य अर्थः भवेत् कालेन सहितः इति । कालसहितत्वं नात्र अभिप्रेतम् । शोभनः/योग्यः कालः अभिप्रेतः । अतः तदनुगुणः एव पदप्रयोगः अत्र करणीयः ।

'सकालः' इति प्रादेशिकभाषायां प्रयुज्यते । तत् अनुकुर्वद्भिः औचित्यम् अचिन्तयद्भिः कैश्चित् सुकालार्थे 'सकाल'शब्दः प्रयुज्येत । स च दोषाय एव ।

६९. सः भिक्षुकः **सदृढः** दृश्यते ।

'सदृढः' इति अस्थाने । **'सुदृढः'** इति **'दृढकायः'** इति वा प्रयोक्तव्यम् ।

'सदृढ'पदस्य अर्थः भवति - 'दृढेन सहितः' इति । दृढकायत्वम् अत्र इष्यते । अतः तदनुगुणः एव पदप्रयोगः अत्र औचित्यम् आवहेत् ।

७०. सः एतत् कार्यं कर्तुं **सक्षमः** अस्ति ।

'सक्षमः' इति अस्थाने । **'क्षमः'** इत्येतावता एव अलम् ।

'क्षमः' नाम समर्थः । 'सः कार्यकरणे समर्थः अस्ति' इत्येषः अर्थः अत्र विवक्षितः । तं गमयितुं 'क्षम'शब्दः समर्थः ।

'सक्षमः' नाम 'क्षमेण (समर्थेन) सहितः' । अत्र तु समर्थः एव विवक्ष्यते, न तु समर्थेन सहितः कश्चित् अन्यः । तस्मात् क्षमशब्दप्रयोगमात्रं पर्याप्तम् । 'सक्षम'शब्देन नार्थः ।

एवमेव 'सशक्त'प्रभृतयः अपि । 'शक्तः' इत्यनेनैव इष्टसिद्धिः । 'स' इत्यस्य योजनं न आवश्यकम् ।

७१. एतादृशः **दृष्टिकोणः** न युक्तः ।

'दृष्टिकोणः' इति अस्थाने । **'दृष्टिः'** इति, **'चिन्तनम्'** इति वा प्रयोक्तव्यम् ।

दृष्टिः नाम दर्शनं ज्ञानं वा । कोणशब्दस्य गृहादीनाम् एकदेशः, दिशोः विदिशोः वा मध्यभागः, रेखयोः सन्धिस्थानम् इत्यादयः अर्थाः । प्रकृतवाक्ये 'कोण'शब्दवाचकस्य अर्थस्य न कापि प्रसक्तिः । चिन्तनस्य (ज्ञानस्य वा ) अयुक्तता वक्तुम् इष्यते । तदर्थं 'दृष्टि'शब्दप्रयोगमात्रं पर्याप्तम् । कोणशब्दस्य प्रयोगः अत्र न आवश्यकः ।

७२. **अधीनस्थाभ्यः** संस्थाभ्यः तेन पत्रं प्रेषितम् ।

'अधीनस्थाभ्यः' इति प्रयोगः अस्थाने । **'अधीनाभ्यः'** इति प्रयोक्तव्यम् ।

अधीनः नामः अस्वतन्त्रः आश्रितः वा । 'अधीनाः संस्थाः' इति प्रयोगेण एव इष्टसिद्धिः ।

'गृहस्थः' इत्यादौ 'गृहेषु तिष्ठति इति गृहस्थः' इति विग्रहः । तत्र गृहशब्दस्य अधिकरणता । तथा अधिकरणता अधीनशब्दस्य अत्र नास्ति, येन अधीनस्थशब्दः व्युत्पाद्येत ।

७३. **चातकपक्षि**रपि मेघं न याचते ।

'चातकपक्षिः' इति अपशब्दः । **'चातकपक्षी'** इति प्रयोक्तव्यम् । पक्षौ अस्य स्तः इति पक्षी । इनिप्रत्ययः अत्र *'अत इनिठनौ'* (५.२.११५) इति सूत्रेण । इनिप्रत्ययान्तत्वात् सः शब्दः नकारान्तः (इन्नन्तः), न तु इकारान्तः । इन्नन्तस्य प्रथमैकवचनान्ते ईकारस्य श्रवणम् । ('पक्षी' इति रूपम् ।) तत्र इकारस्य ह्रस्वत्वं विसर्गश्रवणं वा नास्ति । अतः पक्षिरिति प्रयोगः अज्ञानमूलः एव ।

७४. कार्यस्य सफलतायै **विशेषप्रयत्नः** करणीयः ।

**'विशेषप्रयत्नः'** इति प्रयोगः न दोषाय । **'प्रयत्नविशेषः'** इत्यपि प्रयोगः कर्तुं शक्यः ।

'विशेषप्रयत्नः' इत्यत्र 'प्रयत्नः' विशेष्यम् । 'विशेषः' इति तु विशेषणम् । किन्तु 'विशेष'पदं तु धर्मबोधकम् । अतः तत् विशेषणं भवितुं न अर्हति । 'विशेषेण' युक्तः भवति 'विशिष्टः' । स च भवति धर्मिबोधकः । अतः 'विशिष्टः प्रयत्नः' इत्येव प्रयोगः साधुः

इति केषाञ्चित् कथनम् । तत् असत् ।
'विशेष'पदं पुंलिङ्गवाचि धर्मपरम् एव इति तु सत्यम् । वैशिष्ट्यादयः अर्थाः तस्य । किन्तु धर्मपरत्वमात्रम् एव तस्य नार्थः । धर्मिपरत्वम् अपि अस्ति तस्य ।
एतद्विषये कालिदासप्रयोगो यथा -

शशाम वृष्ट्यापि विना दवाग्निः
आसीत् **विशेषा** फलपुष्पवृद्धिः ।।

- रघु॰ २.१४

अत्र 'विशेष'शब्दः धर्मिपरत्वेनैव प्रयुक्तः इति तु स्फुटम् । तस्मात् 'विशेष'शब्दः धर्मिपरं प्रयोगम् अर्हति इति सिद्धम् । अतः एव लोके 'विशेषप्रयत्नः' 'विशेषवार्ता' 'विशेषकार्यक्रमः' इत्यादयः प्रयोगाः क्रियमाणाः दृश्यन्ते ।

७५. अत्र न कापि **विशेषता** ।
**'विशेषता'** इति प्रयोगः न दोषाय ।
'विशेष'शब्दः धर्मिपरः अपि अस्ति इति पूर्वम् उक्तम् एव । विशेषस्य भावः विशेषता । भावार्थे *'तस्य भावस्त्वतलौ'* *(५.१.११९)* इति सूत्रेण तल् । 'तलन्तं स्त्रियाम्' (लि - १७) । अतः विशेषता इति सिद्धम् ।

७६. ❖ एतत् कार्यं नितरां **कष्टकरम्** ।
❖ **कष्टं** कार्यं मया कृतम् ।
❖ भवतः गमनं मम **कष्टाय** कल्पेत ।
उपरि त्रीणि वाक्यानि सन्ति । त्रिषु अपि वाक्येषु कष्टशब्दः प्रयुक्तः । प्रथमे वाक्ये 'कष्ट'शब्दः धर्मपरः । कष्टं करोति इति कष्टकरः । द्वितीये वाक्ये कष्टशब्दः कार्यस्य विशेषणम् । तस्मात् तत् धर्मिपरम् । (धर्मी एव विशेषणं भवति ।) तृतीये वाक्ये कष्टशब्दः धर्मपरः ।
एवं तर्हि कष्टशब्दः धर्मिपरः उत धर्मपरः ? 'कष्टं कार्यम्' इति प्रयोगः भवितुम् अर्हति, उत 'कष्टकरं कार्यम्' इत्येव प्रयोगः साधुः ?
उभयथा इत्येव उत्तरम् । कष्टशब्दस्य धर्मपरत्वे न कस्यापि

विप्रतिपत्तिः । 'धर्मिपरत्वं किम् अस्ति ?' इत्यस्ति बहूनां सन्देहः । धर्मिपरत्वम् अपि तस्य अस्ति एव ।
प्राचीनप्रयोगाः यथा -

• बन्धनानि च **कष्टानि** परप्रेष्यत्वमेव च ।

- मनु० १२.७८

• **कष्टमा**हुररिं बुधाः ।

- मनु० ७. २१०

अमरकोशः वदति - *'स्यात्कष्टं कृच्छ्रमाभीलं* ***त्रिष्वेषां भेद्यगामि यत्'*** इति । 'कष्टादिषु शब्देषु यत् द्रव्यगामि (धर्मिपरं) तत् त्रिषु लिङ्गेषु भवति' इति तस्य तात्पर्यम् ।
तस्मात् कष्टशब्दः धर्मिपरः अपि । अतः **'कष्टकरं कार्यम्' 'कष्टं कार्यम्'** इति उभयथा अपि प्रयोगः साधुः । 'कष्टकरं कार्यम्' इत्येवंरूपः प्रयोगः तु आधिक्येन दृश्यते लोके ।
'त्रिष्वेषां भेद्यगामि यत्' इति वदन् अमरटीकाकारः ('सुधा'कारः) **'दुःखा** सेवा' 'दुःखः सुतो निर्गुणः' 'सर्वं दुःखं विवेकिनः' इति त्रीणि वाक्यानि उदाहरति । तस्मात् **दुःखशब्दः धर्मिपरः अपि अस्ति** इति ज्ञायते । (तस्य धर्मपरत्वे तु न कस्यापि सन्देहः)
प्राचीनप्रयोगो यथा -

❖ सुसुखा न च **दुःखा** सा न शीता न च घर्मदा ।

- हरिवंशः - २२९.४९

❖ भेकाभः पीड्यते **दुःखैः** शोणितक्षयसम्भवैः ।
(दुःखैः रोगैः इति तट्टीका)

- भावप्रकाशः (अर्शोरोगाधिकारे)

७७. तेन **फलार्धः** खादितः ।
तेन **अर्धफलं** खादितम् ।
अत्र स्थितम् उभयविधम् अपि वाक्यं शुद्धम् एव ।
आदौ अर्धशब्दस्य स्वरूपं ज्ञातव्यम् अस्माभिः । सः संमाशवाची अंशसामान्यवाची चेति द्विधा । समे अंशे अर्धशब्दः नपुंसकलिङ्गः एव । अंशसामान्यवाची तु पुंसि (नपुंसके वा) । अत्र अमरकोष-प्रामाण्यं यथा - 'वा पुंस्यर्धोऽर्धं समेंऽशके' इति । भाष्ये तु -

'समप्रविभागे नपुंसकलिङ्गोऽर्धशब्दः । अंशसामान्यवाची तु पुंलिङ्गः' इति उक्तम् ।

यदा किमपि वस्तु छिद्यते, कर्त्यते, विदार्यते वा तदा भागद्वयं भवति । उभौ अपि भागौ समानाकारकौ यदा भवतः तदा 'अर्धम्' इति नपुंसकलिङ्गविशिष्टस्य प्रयोगः । यदा भागयोः समता नास्ति तदा 'अर्धः' इति पुंलिङ्गप्रयोगः ।

नपुंसकलिङ्गवाची अर्धशब्दः ('अर्धम्' इत्येतत्) प्रथमातत्पुरुष-समासं प्राप्नोति । *'अर्धं नपुंसकम्' (२.२.२)* इति सूत्रम् । अर्धशब्दस्य पूर्वनिपातः उपसर्जनसंज्ञत्वात् । *(प्रथमानिर्दिष्टं समास उपसर्जनम् - १.२.४३, उपसर्जनं पूर्वम् - २.२.३०)*

अतः 'अर्धफलम्' इति प्रयोगः । अत्र अर्धशब्दः समांशवाची एव स्यात् इति स्मर्तव्यम् ।

यदि अर्धशब्दः समांशवाची न, तर्हि फलस्य अर्धः फलार्धः इति षष्ठीतत्पुरुषः । षष्ठीतत्पुरुषस्थले अर्धशब्दः अंशसामान्यवाची, समांशवाची न ।

एतदत्र उक्तं भवति -

अर्धशब्दः द्विधा - समांशवाची अंशसामान्यवाची चेति ।




७८. तेन **अर्धं फलं** खादितम् ।

**'अर्धं फलम्'** इति प्रयोगः अपि साधुः एव ।

'अर्धं फलम्' इति प्रयोगः असाधुः स्यात् इति कश्चन भ्रमः भवितुम् अर्हति । तत्र कारणं तु -

अर्धशब्दः एकदेशवाची । अर्धः, अर्धं वा कश्चन भागः एव खलु ? एकदेशवाची अवयविना अभेदेन सम्बन्धं न अर्हति । अवयवावयविनोः न अभेदेन सम्बन्धः । अतः अवयववाची शब्दः षष्ठ्यन्तेन अवयविना अभिसम्बद्ध्यते । तस्मात् अर्धं फलस्य, अपरं कायस्य, पूर्वं कायस्य इत्यादयः प्रयोगाः सम्भवन्ति । 'अर्धं फलम्' इत्यत्र अर्धशब्दः विशेषणत्वेन प्रयुक्तः अस्ति । अत्र अर्धशब्दः अवयवः विशेषणत्वेन । 'फलम्' शब्दः अवयवी । अनयोः अवयवावयविनोः (एकदेशवाचि-एकदेशिवाचिनोः) सामानाधिकरण्यम् (अभेदेन सम्बन्धः) न युक्तम् इति भावः भवितुम् अर्हति । तस्मात् 'अर्धं फलम्' इति प्रयोगः असाधुः इति चिन्तनं स्यात् कदाचित् । एतत् चिन्तनं सर्वथा अयुक्तम् । यतः महाभाष्यस्यैव प्रयोगः अस्ति - *''समानाधिकरणं समासो भविष्यति । अर्धं च सा पिप्पली च अर्धपिप्पलीति''* इति । (परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः इति सूत्रे) अत्र अर्ध-पिप्पल्योः सामानाधिकरण्येन प्रयोगः तु स्फुटः । भाष्यस्यैव प्रयोगस्य सद्भावात् 'एतादृशः प्रयोगः किं साधुः' इति प्रश्नः एव न उद्भवति ।

तदा अपरः प्रश्नः उद्भवेत् - 'अवयवावयविभावः अस्ति - अर्धं फलम्' इत्यत्र । तथा सति तयोः अभेदेन सम्बन्धः कथम् ?' इति । भाष्यव्याख्याने प्रदीपाख्ये कैयटः लिखति - *'अवयवे समुदायोपचारात् सामानाधिकरण्यम्'* इति । कौमुद्याः व्याख्यायां तत्त्वबोधिन्यां लिख्यते - *'समुदाये दृष्टाः शब्दाः अवयवेष्वपि वर्तन्ते इति न्यायात्'* इति । तस्मात् सिद्धं यत् 'अर्धं फलम्' इत्यत्र अवयववाचिनि अर्धशब्दे अवयवित्वम् आरोप्य सामानाधिकरण्यं प्रतिपाद्यते इति । अतः 'अर्धं फलम्' इति प्रयोगः अपि साधुः एव ।

**७९.** सभायाम् **अर्धजनानां** व्यवहारः अशोभनः आसीत् ।

**'जनानाम् अर्धस्य'** इति प्रयोगः करणीयः ।

'अर्धं नपुंसकम्' इति समासविधायकं सूत्रम् । तत्र 'एकाधिकरणे' इति पदं पूर्वसूत्रात् अनुवर्तते । तस्मात् अवयवी एकत्वसंख्याविशिष्टः चेदेव अयं समासः । 'जनानाम्' इत्यत्र बहुत्वं स्फुटम् । अतः प्रथमातत्पुरुषस्य प्राप्तिः न भवति । यदि षष्ठीतत्पुरुषः इष्यते तर्हि

'जनार्धस्य' (जनानाम् अर्धस्य इति विग्रहः) इति प्रयोगः भवितुम् अर्हति ।

८०. अत्र **अर्धफलानि** दृश्यन्ते ।
पूर्वं यथा उक्तं तथा, 'फलानाम् अर्धानि' इति विग्रहवाक्यं यदि कथयामः तर्हि 'अर्धफलानि' इति प्रयोगः असाधुः एव । तदा तु **'फलानाम् अर्धानि'** इति व्यस्तः एव प्रयोगः ।
तथापि 'अर्धफलानि' इत्येतत् सर्वथा समर्थनानर्हं तु न । इत्थं समर्थयितुं शक्यम् - अर्धं फलस्य अर्धफलम् । अर्धफलं च अर्धफलं च अर्धफलं च अर्धफलानि इति खण्डसमुच्चयः । तदा तु न असाधुता । अयं क्रमः सिद्धान्तकौमुद्याः तत्त्वबोधिनीटीकायाम् एव प्रदर्शितः ।

८१. अस्वस्थः सः **ओषधिं** सेवितवान् ।
'ओषधिम्' इति अस्थाने । **'औषधम्'** इति प्रयोक्तव्यम् ।
ओषधिः अन्यः, औषधम् अन्यत् । तयोः न समानार्थकता । ओषधयः व्रीह्यादयः भवन्ति । 'ओषध्यः फलपाकान्ताः' इति अमरः । ओषधयः पेयाः न । *'ओषधेरजातौ' (५.४.३७)* इति सूत्रेण अणि 'औषधम्' इति रूपम् । तत् तु पानयोग्यम् ।' कौमुद्याम् अपि 'ओषधेरजातौ' इति सूत्रे वृत्तौ 'औषधं पिबति' इति उदाहृत्य 'ओषधयः क्षेत्रे रूढाः' इति उक्तम् । तस्मात् सिद्धं यत् पानयोग्यम् 'औषधम्', क्षेत्रेषु वर्धमानः 'ओषधिः' इति भेदः सुस्पष्टः ।
'औषधं' नपुंसके, 'ओषधिः' पुंसि ।

८२. शब्दखण्डः एतस्मिन् वर्षे **पठ्यविषयः** अस्ति ।
'पठ्यम्' इति अपशब्दः । **'पाठ्यम्'** इति प्रयोक्तव्यम् ।
पठधातुः हलन्तः । तस्मात् *'ऋहलोर्ण्यत्' (३.१.१२४)* इति सूत्रेण ण्यत् । ण्यति आदिवृद्धिः । 'पाठ्यम्' इति रूपम् । ण्यति 'पठ्यम्' इति रूपं कथमपि न भवति । यत्प्रत्यये कृते तु स्यात् । किन्तु यत् अजन्तात् विहितः *(अचो यत् - ३.१.९७)* । धातुरयं न अजन्तः । अतः यत् न भवति । तस्मात् 'पठ्यम्' इति तु अपशब्दः एव । छात्रैः यत् पठ्यते तत् 'पठ्य'पुस्तकम्, अध्यापकैः यत् पाठ्यते तत् 'पाठ्य'पुस्तकम् इति चिन्तनम् अपि असाधु एव ।

८३. संस्कृतस्य विकासः **पन्थाह्वानरूपेण** तिष्ठति ।

'पन्थाह्वानम्' इति अपशब्दः । **'स्पर्धाह्वानम्'** इति, शब्दान्तरं वा प्रयोक्तव्यम् । वस्तुतः वाक्यान्तरेणैव अभिप्रायस्यास्य आविष्करणं वरम् ।

पथि मार्गे आह्वानम् इति विग्रहे तु 'पथ्याह्वानम्' इति स्यात्, न तु पन्थाह्वानम् इति । अकारान्तः पन्थशब्दः संस्कृते नास्ति । नकारान्तस्य पथिन्शब्दस्य प्रथमैकवचनान्तं रूपं 'पन्थाः' इति ।

तस्मात् 'स्पर्धाह्वानम्' इति प्रयोगः वरम् । यदि तस्मात् शब्दात् न सन्तोषः तर्हि शब्दान्तरं प्रयुज्यताम् । 'पन्थाह्वानम्' इति तु अपशब्दः एव ।

८४. कार्यकर्तारः एव एतस्य कार्यस्य **आशाज्योतिषः** सन्ति ।

'आशाज्योतिषः' इति अस्थाने । **'आशाज्योतींषि'** इति प्रयोक्तव्यं, शब्दान्तरं वा ।

ज्योतिश्शब्दः सकारान्तः नपुंसकलिङ्गः च । आशायाः ज्योतींषि आशाज्योतींषि । षष्ठीतत्पुरुषसमासः अयम् । तत्पुरुषे उत्तरपद-प्राधान्यम् । उत्तरपदस्य यत् लिङ्गं तदेव लिङ्गं समस्तपदस्यापि । अतः 'आशाज्योतींषि' इति रूपम् ।

आशा ज्योतिः येषां ते इति विग्रहे 'आशाज्योतिषः' इति रूपं स्यात् । किन्तु स च अर्थः अत्र न अभिप्रेतः ।

८५. **ऐषमे वर्षे** महाकार्यक्रमः करिष्यते अस्माभिः ।

'ऐषमे वर्षे' इति असाधुः प्रयोगः । **'ऐषमः वर्षे'** इति प्रयोक्तव्यम् । वर्तमानं वर्षम् उच्यते 'ऐषमः' इति । *'इदम इष् समसण्प्रत्ययश्च संवत्सरे'* इति वार्तिकेन *(सद्यःपरुत्परार्यैषम.... ५.३.२२)* समसण्-प्रत्ययः 'इदम्'शब्दात् । समसण्प्रत्ययान्तं तत् अव्ययम् । अतः तस्य सप्तम्यादिषु न रूपभेदः ।

'ऐषमः'शब्दः विसर्गयुक्तः सन् अकारान्तभ्रमं जनयति । तस्मात् 'ऐषमे वर्षे' इति प्रयोगः क्रियते क्वचित् । तस्य तु अव्ययत्वात् तादृशः प्रयोगः दुष्यति ।

'ऐषमः' इत्यत्र मूर्धन्यषकारः, न तु तालव्यः (श) इत्यपि स्मर्तव्यम् । अतः 'ऐशमः' इति रूपं न ।

८६. **परेद्युः** तेन नगरं प्रति गतम् ।

'परेद्युः' इति अप्रशस्तम् । **'परेद्यवि'** इति प्रयोक्तव्यम् ।

'परस्मिन् अहनि' इत्यर्थे *'परस्मादेद्यव्यहनि'* इति वार्तिकेन परशब्दात् एद्यविप्रत्यये 'परेद्यवि' इति रूपम् । एतच्च अव्ययम् । 'अन्येद्युः' 'पूर्वेद्युः' 'उभयेद्युः' इत्यादिषु एद्युस्प्रत्ययः दृश्यते इति कृत्वा 'परेद्युः' इत्यत्रापि एद्युस्प्रत्ययः इति भावयन्ति केचन । किन्तु 'पर'शब्दात् एद्युस् न विहितः, अपि तु 'एद्यवि'प्रत्ययः विहितः । तस्मात् 'परेद्यवि' इति रूपम् ।

'अमुकः' 'पुरतः' इत्यादिवत् 'परेद्युः' इति अव्युत्पन्नः पृषोदरादिः वा साधुः इति वदन्ति केचन ।

*'परेद्युः इति मुग्धबोधव्याकरणात् साधु'* इति वदति शब्दकल्पद्रुमः ।

८७. वाणिज्ये महत् **नष्टं** प्राप्य सः खिन्नः ।

'नष्टम्' इति शब्दः अस्थाने । **'हानि'**शब्दः प्रयोक्तव्यः ।

नष्टं नाम अदृश्यतां गतम् । प्रकृतवाक्ये अदृश्यतां गतस्य कस्यचित् पदार्थविशेषस्य प्रस्तावः न क्रियते । लाभस्य विरुद्धं पदम् इष्यते अत्र । तच्च 'हानिः' इति पदम् । तस्मात् 'हानि'शब्दस्य प्रयोगः एव उचितः ।

८८. जाति-**पन्थ**-भेदाः न भवेयुः समाजे ।

'पन्थः' इति अपशब्दः । **'उपासनापद्धतिः'** इति, पदान्तरं वा प्रयोक्तव्यम् ।

समाजे उपासनापद्धतयः सन्ति बहवः । तत्कारणतः वैषम्यम् अपि दृश्यते । तत् वैषम्यं न भवेत् समाजे इति वक्त्रा इष्यते वक्तुम् । प्रादेशिकभाषासु पान्थ-पन्थादयः शब्दाः उपयुज्यन्ते तदर्थम् । संस्कृते तु तादृशं पदं नास्ति । अतः 'उपासनापद्धतिः' इति, पदान्तरं वा प्रयोक्तव्यम् ।

८९. स च कश्चन **प्रामाणिकः** पुरुषः ।

'प्रामाणिकः' इति प्रयोगः अस्थाने । **'ऋजुः' 'निष्कपटः'** इत्यादयः शब्दाः प्रयोक्तव्याः । पदान्तरं वा प्रयोक्तव्यम् ।

प्रामाणेन निर्वृत्तः 'प्रामाणिकः' भवति । प्रमाणसिद्धः, यथार्थानुभव-कारणीभूतः इत्यादयः तस्य अर्थाः। पूर्वोक्ते वाक्ये तु 'निष्कपटः'

'विश्वासार्हः' 'ऋजुत्वोपेतः' इत्यादयः अर्थाः विवक्षिताः । तदर्थम् 'ऋजुः' 'निष्कपटः' इत्यादयः शब्दाः प्रयोक्तव्याः ।

लोके यः कपटः सः न भवति प्रमाणम् । यः निष्कपटः भवति तमेव प्रमाणत्वेन स्वीकरोति लोकः । तस्मात् निष्कपटः 'प्रामाणिकः' भवति । एवं 'प्रामाणिक'पदस्य परम्परया 'निष्कपटः' इत्यपि अर्थः इति वक्तुं शक्यम् । तथापि 'प्रामाणिक'पदं निष्कपटार्थमात्रम् एव बोधयति इति न । तस्मात् निष्कपटार्थे 'प्रामाणिक'पदस्य प्रयोगः मा भवतु इति उच्यते अस्माभिः ।

९०. **प्रान्तीयभाषाः** सर्वाः संस्कृतेनैव पोषिताः ।

**'प्रादेशिकभाषाः'** इति प्रयोगः औचित्यम् आवहति ।

प्रकृष्टः अन्तः प्रान्तः इति उच्यते । अतः प्रान्तः नाम सीमा इत्यर्थः । तस्मात् 'प्रान्तीयभाषा' नाम 'राज्यस्य सीमाप्रदेशेषु या भाषा भवेत् सा' इत्यर्थः सिद्धः भवति । स च अर्थः अत्र न विवक्षितः। 'विशाले प्रदेशे (राज्ये) याः भवन्ति ताः' इत्यर्थः विवक्षितः अत्र । तस्मात् 'प्रादेशिकभाषाः' इति प्रयोगः उचितः । चारुदेवशास्त्रिणः अपि स्वस्य 'वाग्व्यवहारादर्श'ग्रन्थे एतम् एव आशयम् असकृत् प्रकटितवन्तः दृश्यन्ते ।

९१. बालकाः **अङ्गणे** क्रीडन्ति ।

**'अङ्गणे'** इति णत्वोपेतं रूपं प्रयोगानर्हं न ।

'अङ्गणम्' इत्यत्र गत्यर्थकः 'अगि'धातुः । अधिकरणे ल्युट् *'करणाधिकरणयोश्च' (३.३.११७)* इति सूत्रेण । 'अत्र णत्वं न भवति' इति केचन वदन्ति ।

किन्तु णत्वोपेतं रूपं सर्वथा असाधु न । अमरकोषस्य सुधाव्याख्याने उच्यते - 'अङ्गणम् इति पाठे तु पृषोदरादिः' इति । तत्रैव टिप्पण्यां पृषोदरादिगणे तस्य प्रवेशं निराकृतवतां वादं खण्डयित्वा सोदाहरणं प्रतिपादितं यत् अङ्गणशब्दः पृषोदरादिगणे प्रवेशम् अर्हति एव इति । अतः णत्वोपेतं रूपम् अपि (अङ्गणम् इति रूपम्) साधु एव ।

९२. अद्य समाजस्य **परिस्थितिः** शोचनीया अस्ति ।

**'परिस्थितिः'** इति प्रयोगः समर्थनार्हः एव ।

अत्र 'परि' इति उपसर्गः । गतिनिवृत्त्यर्थकः ष्ठाधातुः । क्तिन्प्रत्ययः ।

तस्मात् 'परिस्थितिः' इति रूपम् ।

''परि इत्येतस्मिन् उपसर्गे स्थितात् निमित्तात् (इकारात्) परस्य ष्ठाधातुसम्बद्धस्य सकारस्य षत्वं स्यात् - *'उपसर्गात् सुनोति .....'* *(८.३.६५)* इति सूत्रेण । तस्मात् 'परिष्ठितिः' इति रूपम् । षत्वम् अत्र नित्यम् इत्यतः षत्वरहितं रूपम् असाधु'' इति केचन अभिप्रयन्ति । परि इत्यस्य 'स्था'क्रियया यदि योगः उच्यते तदा एव षत्वस्य प्रसङ्गः । यदि 'परिगता स्थितिः' इति विवरणम् उक्त्वा 'परि' इत्यस्य गम्धातुना सम्बन्धः उच्यते (न तु ष्ठाधातुना) तदा तु षत्वं न । एवं गम्धातोः प्रश्लेषः क्रियते अत्र ।

एवं प्रादेः धात्वन्तरे सम्बन्धं कल्पयित्वा षत्वस्य निवारणं भाष्ये एव कृतं दृश्यते 'निस्सेचकः' 'अभिसावकीयति' इत्यादौ । *'यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञकाः भवन्ति'* इति महाभाष्यकारः । (यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः इति दुर्धियः इत्यत्र हल्सन्धिप्रकरणे ।)

'परिस्थितिः' इति शब्दः लोके बहुधा श्रूयते इत्यतः भाष्योक्तं क्रमम् अवलम्ब्य स्थितस्य गतिः चिन्तिता अत्र ।

**१३. फाल्गुणमासे** महाशिवरात्रिपर्व भवति ।

'फाल्गुण'मासे इति अपशब्दः ।**'फाल्गुनमासे'** इति प्रयोक्तव्यम् । 'फाल्गुनः' इत्यत्र निष्पत्त्यर्थकः फलधातुः । उनन्प्रत्ययः गुक् च । स्वार्थे अण् । णत्वं प्रति रेफषकारौ निमित्तभूतौ । निमित्तस्यैव अभावत् न णत्वम् ।

क्वचित् उक्तिः श्रूयते - 'गगने फाल्गुने फेने णत्वमिच्छन्ति बर्बराः' इति । (बर्बराः नाम पामराः नीचाः च ।)

तस्मात् 'फाल्गुनः' इत्यत्र न णत्वम् ।

**१४. निस्स्थानात्** यानम् इदानीम् निर्गतम् ।

**'निस्स्थानात्'** इति प्रयोगः न दोषाय ।

'निर्'-उपसर्गपूर्वकात् ष्ठाधातोः अधिकरणे ल्युट् । 'निर्' इत्येतस्मात् निमित्तात् परस्य ष्ठाधातुगतस्य सकारस्य कुतः षत्वं न इति प्रश्नः अत्रापि उद्भवेत् एव । 'निस्स्थानम्' इत्यस्य विग्रहः उच्यते - 'निर्गत्य तिष्ठन्ति अत्र' (यानानि) इति । उपसर्गस्य गमधातौ योगः, न तु

ष्ठाधातौ । तस्मात् (उपसर्गयोगाभावात्) *'उपसर्गात् सुनोति.....'* इति सूत्रेण न षत्वम् ।

एवं गम्धातोः प्रश्लेषात् षत्वं निवार्यते । भाष्योक्तः एव अयं क्रमः इत्यतः एतस्य अनुसरणं न दोषाय । स्थितस्य गतेः चिन्तनाय अयं क्रमः आश्रीयते । (दृश्यताम् - ९२ - परिस्थितिः)

'निस्स्थानम्' इत्यत्र सकारद्वयं लेखनीयं, विसर्गसकरौ वा लेखनीयौ इति तु न विस्मर्तव्यम् ।

९५. **दुर्वासः** कोपशीलः मुनिः ।

'दुर्वासः' इति अपशब्दः । **'दुर्वासाः'** इति प्रयोक्तव्यम् ।

दूर्वासश्शब्दः सकारान्तः । 'दुर्वासस्' इति प्रातिपदिकम् । तस्मात् प्रथमाविभक्तेः एकवचने कृते 'दुर्वासाः' इति रूपम् । (विसर्गात् पूर्वम् आकारः एव श्रूयते, न तु अकारः) सः अकारान्तः इति केषाञ्चित् भ्रमः ।

९६. **दुर्वासमुनिः** शकुन्तलायै शापं दत्तवान् ।

दुर्वासमुनिः इति अशुद्धम् । **दुर्वासोमुनिः** इति प्रयोक्तव्यम् ।

दूर्वासश्शब्दः सकारान्तः इति पूर्वम् उक्तम् । समासे सकारस्य रुत्वे हश्परत्वात् उत्वे गुणे च 'दुर्वासोमुनिः' इति रूपम् । (मकारः हश्)

९७. 'मेनका' नाम **अप्सरकन्या** भूलोकम् आगता ।

'अप्सरकन्या' इति अपशब्दः । **'अप्सरःकन्या'** इति प्रयोक्तव्यम् ।

अप्सरश्शब्दः सकारान्तः । (बहुवचनान्तः सः । एकवचनान्तप्रयोगोऽपि शिष्टसम्मतः एव इति प्रथमाध्याये उक्तम् ।) 'अप्सराः + कन्या' इति विग्रहे अप्सरश्शब्दस्य प्रातिपदिकरूपेण अवस्थितौ *'कुप्वो≍क ≍पौ च'* (८.३.३७) इति सूत्रेण सकारस्य जिह्वामूलीयत्वं विसर्गो वा । तस्मात् 'अप्सरःकन्या' इति ('अप्सर ≍कन्या' इति वा) रूपम् ।

एवमेव अप्सरोगणः, अप्सरोनगरी, अप्सरःपुत्री, अप्सरःकुलम् इत्यादयः अपि । विसर्गसन्धिप्रक्रिया अत्र स्मर्तव्या ।

९८. प्रकोष्ठे **अनुकूलं** बहु अस्ति ।

'अनुकूलम्' इति पदम् अत्र परिहरणीयम् । **'आनुकूल्यम्'** इति प्रयोक्तव्यम् ।

वक्त्रा अत्र भाववाचकः शब्दः प्रयोक्तुम् इष्टः । अनुकूलः धर्मिपरः । अनुकूलस्य भावः आनुकूल्यम् । अतः 'आनुकूल्यम्' इति पदम् एव प्रयोक्तव्यम् ।
यदि 'अनुकूल'शब्दप्रयोगे एव प्रीतिः तर्हि 'प्रकोष्ठः अनुकूलः अस्ति' इति प्रयुज्यताम् । अनुकूलशब्दं प्रकोष्ठस्य विशेषणं क्रियताम् ।

९९. **भारतसदृशे** विशाले देशे अभिप्रायभेदः सहजः ।
'भारतसदृशे' इति प्रयोगः अनुचितः अत्र । **'भारत'**शब्दः प्रयोक्तव्यः ।
'भारतं विशालः देशः । अत्र अभिप्रायभेदः सहजः' इति वक्तुम् इच्छति वक्ता । किन्तु तेन पदप्रयोगः कृतः अस्ति - 'भारतसदृशे देशे' इति । भारतसदृशः देशः कश्चित् अन्यः भवति, न तु भारतम् । वक्ता भारतविषये वक्तुम् इच्छति, न तु भारतसदृशस्य अन्यस्य कस्यचित् देशस्य विषये । अतः **'विशाले भारतदेशे'** इति आनुपूर्वी शोभते । सदृशशब्दप्रयोगात् तु अन्यस्य देशस्य प्रतीतिः भवति, न तु भारतस्य । तत्तु वक्त्रा न इष्टम् । अतः अभिप्रायानुगुणस्य शब्दप्रयोगस्य विषये अधिकम् अवधानं दातव्यम् ।

१००. **भवादृशे सति** का भीतिः अस्माकम् ?
**'भवति सति'** इति प्रयोगः साधुः । धीरं बुद्धिमन्तं वा कश्चित् उद्दिश्य उक्तं वाक्यम् एतत् । वक्त्रा पुरतः स्थितस्य भवत्पदवाच्यस्य जनस्यैव सत्ता इष्यते, न तु तत्सदृशस्य अन्यस्य कस्यचित् । स च भावः 'भवादृशे सति' इत्येतस्मात् न प्रतीयते । तस्मात् 'भवति सति' इति प्रयोगः एव अपेक्षितस्य भावस्य अभिव्यञ्जने समर्थः ।

१०१. अस्माकं **माताश्री** सम्यक् बोधयति ।
'माताश्री' इति अपशब्दः । **'मातृश्रीः'** इति प्रयोक्तव्यम् ।
विद्यालयस्य बालकस्य बालियायाः वा उक्तिः इयम् । केषुचित् विद्यालयेषु अध्यापिका निर्दिश्यते 'माताश्री'शब्देन ।
'श्रीः' इत्येषः न ङ्यन्तः । अतः प्रथमैकवचने कृते न सुलोपः । तस्मात् विसर्गस्य श्रवणम् ।

मातृ + श्रीः इति स्थिते (मातृरूपा श्रीः इति मध्यमपदलोपी समासः वक्तव्यः भवेत् । स्थितस्य गतिः खलु चिन्तनीया ?) मातृशब्दस्य प्रातिपदिकरूपेण स्थितौ 'मातृश्रीः' इति रूपम् । प्रातिपदिकं तु 'मातृ' इति । आकारः प्रथमैकवचनान्ते श्रूयते, न तु प्रातिपदिके । एवमेव पितृश्रीः, भ्रातृश्रीः इत्यादयः अपि ।

इदं तु स्मर्तव्यं यत् न एषा संस्कृतशैली इति ।

१०२. अहं तं पृष्टवान् । तेन कापि **प्रतिक्रिया** न दर्शिता ।

'प्रतिक्रिया' इति अस्थाने । **'प्रतिस्पन्द'**शब्दः, शब्दान्तरं वा प्रयोक्तव्यम् ।

'प्रतिक्रिया'शब्दः प्रतीकारार्थकः, निवारणोपायार्थकः वा । क्रियायाः अनन्तरं या अन्यस्य क्रिया भवति तां 'प्रतिक्रिया'शब्दः बोधयितुं नार्हति । प्राचीनैः कुत्रापि तस्मिन् अर्थे प्रयोगः कृतः न दृश्यते । अतः 'प्रतिस्पन्दः' इत्यस्य प्रयोगः वरम् । शब्दान्तरं वा प्रयोक्तव्यम् ।

१०३. भवान् अस्वस्थः । **सन्दर्भे**ऽस्मिन् जागरूकता आवश्यकी ।

**'अवसरेऽस्मिन्'** इति प्रयोक्तव्यम् । 'सन्दर्भ'शब्दः अस्थाने । सन्दर्भः नाम ग्रन्थः । योजनम् इत्यादयः अर्थाः तस्य । कोषो यथा - 'सन्दर्भः तु प्रबन्धः स्यात्' - (त्रिकाण्डः) 'श्रन्थनं ग्रन्थनं गुम्फः सन्दर्भो रचना न ना' - (वैजयन्ती) । अवसरादयः अर्थाः तस्य पदस्य न उक्ताः । तस्मात् 'अवसरः' इति प्रयोगः वरम् । शब्दान्तरस्य प्रयोगः अपि भवितुम् अर्हति ।

१०४. अत्रत्या **प्रकृतिः** रमणीया अस्ति ।

'प्रकृतिः' इति पदम् अस्थाने । **'निसर्ग'**शब्दस्य प्रयोगः वरम् । 'प्रकृतिः' इति पदस्य बहवः अर्थाः सन्ति - स्वभावः, सृष्टि-कारणीभूता, प्रजाः इत्यादयः । वक्त्रा तु दृश्यमाना सृष्टिः वर्ण्यते । प्रकृतिपदं सृष्टिं न बोधयति, अपि तु सृष्टिकारणीभूतं तत्त्वम् । तथा हि प्रयोगः - 'विश्वोत्पत्तिनिमित्तत्वात् प्रकृतिः प्रोच्यते बुधैः' (वेदान्त-कौस्तुभः) इति । प्रकृतिः भवति कारणम् । वक्त्रा तु कार्यं वक्तुम् इष्यते । तस्मात् 'निसर्गः' 'सृष्टिः' इत्यादिषु अन्यतमः शब्दः प्रयोक्तव्यः ।

१०५. एतत् श्रुत्वा सः नितरां **चकितः** जातः ।

'चकितः' इति पदम् अस्थाने । **'आश्चर्यान्वितः'** इति, **'आश्चर्य-चकितः'** इति वा प्रयोक्तव्यम् ।

'चकितः' नाम भीतः । कोषकारैः सर्वैः चकितपदस्य भीतियुक्तादयः एव अर्थाः वर्णिताः । आश्चर्यार्थः केनापि न उक्तः । अतः आश्चर्यार्थे चकितपदस्य प्रयोगः असाधुः एव भवति । तस्मात् यत्र आश्चर्यमात्रम् एव इष्यते तत्र 'आश्चर्यान्वितः' इति प्रयोगः करणीयः ।

यत्र आश्चर्यं भवति तत्र भीत्यंशः अपि सम्मिलितः भवति । तादृशे अवसरे 'आश्चर्यचकितः' इति प्रयोगः शक्यः ।

१०६. सः **भाषणप्रतियोगितायां** भागं वोढुम् इच्छति ।

'प्रतियोगिता' इति कथञ्चित् समर्थनीयम् इति भाति । **'स्पर्धायाम्'** इति प्रयोगः वरम् ।

यस्य अभावः उच्यते स तस्य प्रतियोगी भवति । घटाभावस्य प्रतियोगी घटः । अयं च तर्कशास्त्रीयः पारिभाषिकः शब्दः कश्चन । स्पर्धायाम् अपि भागग्रहीत्रोः विरोधः परस्परं भवत्येव इति कृत्वा प्रतियोगिता नाम स्पर्धा इति व्याख्येयम् । प्राचीनैः कुत्रापि स्पर्धा-पर्यायत्वेन प्रतियोगिताशब्दः न प्रयुक्तः । सर्वैः अनुमते स्पर्धाशब्दे सति अप्रयुक्तस्य प्रतियोगितापदस्य प्रयोगे आस्था कुतः ? प्रतियोगितापदे एव अस्माकं प्रीतिः इति यदि सबलम् उच्यते तर्हि 'भवतु नाम' इति वदामः वयं विरुद्धसम्बन्धयुक्ततां मनसि निधाय । 'स्पर्धा'शब्दस्य प्रयोगः एव श्रेयसे इति तु अस्माकं मतम् ।

१०७. अहं तेन सह **वार्तां करोमि** ।

'वार्ता'शब्दः अत्र अस्थाने । **'वार्तालापं करोमि'** इति, **'सम्भाषणं करोमि'** इति वा वक्तव्यम् ।

करोतिः भाववाचकेन युक्तः सन् क्रियाम् अभिधत्ते । अतः एव अध्ययनं, पाकः, उद्घाटनम् इत्यादिभिः भाववाचकैः शब्दैः सह करोतिं योजयित्वा वयं क्रियां वदामः ।

वार्ताशब्दः न हि भाववाचकः । तस्मात् 'वार्तां करोति' इत्येतस्मात् 'वार्तां निर्माति' इत्यस्य अर्थस्य प्रतीतिः भवितुम् अर्हति । स च

अर्थः अत्र न अभिप्रेतः । अतः 'वार्तालाप'शब्दस्य प्रयोगः वरम् । 'आलाप'शब्दः भाववाचकः । तस्मात् 'वार्तालापं करोति' इत्यस्य सङ्गतिः ।

अथवा यदि 'आलापं करोति' इत्यस्मात् 'सम्भाषते' इत्यर्थः न प्रतीयते इति चिन्त्यते तर्हि 'सम्भाषणं करोति' इत्येव प्रयुज्यताम् । अथवा 'सम्भाषते' इति अखण्डक्रियापदं वा प्रयुज्यताम् ।

१०८. **अन्तर्देशीय**पत्रस्य मूल्यम् इदानीं सार्धद्विरूप्यकात्मकम् ।

**'देशीयम्'** इत्यनेन एव इष्टसिद्धिः । अथवा **'अन्तर्देशीयम्'** इत्येव वा भवतु ।

विदेशसम्बद्धस्य व्यवहारस्य निमित्तं यत् पत्रम् उपयुज्यते तस्य 'विदेशीयं पत्रम्' इति नाम भवितुम् अर्हति । यस्य उपयोगः देशे भवति तत् 'देशीयम्' पत्रम् । 'देशीयम्' इत्यस्य अर्थः 'देशसम्बन्धी' इति । देशस्य अन्तः एव तस्य उपयोगः भवति, न तु देशात् बहिः स्थितेषु अन्येषु देशेषु । एवं 'देशीयम्' इत्यस्मात् एव अपेक्षितस्य अर्थस्य भानं भवति । तस्मात् तेन सह 'अन्तर्'शब्दस्य योजनं वस्तुतः न आवश्यकम् ।

किन्तु पत्रालयविभागेन 'अन्तर्देशीय'शब्दः एतावता एव व्यवहारपथम् आनीतः । स्थितस्य गतिः खलु चिन्तनीया ? तस्मात् एवं विग्रहः उच्यते - देशस्य अन्तः अन्तर्देशः । एकदेशिसमासः अत्र । देशस्य अन्तर्भागः इत्यस्य अर्थस्य सिद्धिः । अन्तर्देशस्य सम्बन्धि अन्तर्देशीयम् ।

१०९. **स्वदेशी**वस्तूनाम् उपयोगः एव करणीयः सर्वैः ।

'स्वदेशी' इति शब्दः अस्थाने । **'स्वदेशीय'**शब्दः प्रयोक्तव्यः । **'देशीय'**शब्देनापि इष्टसिद्धिः ।

स्वस्य देशः स्वदेशः । स्वदेशस्य इदं स्वदेशीयम् । 'स्वदेशी' इत्येतस्मात् शब्दात् तु 'स्वदेशवान्' इत्यस्य अर्थस्य प्रतीतिः भवेत् । (स्वस्य देशः स्वदेशः । स्वदेशः अस्य अस्ति इति स्वदेशी) स्वदेशवान् इत्येषः अर्थः अत्र न अभिप्रेतः ।

अद्य देशे द्विविधानि वस्तूनि उपलभ्यन्ते - बहुराष्ट्रीयाभिः संस्थाभिः निर्मीयमाणानि, देशीयाभिः संस्थाभिः निर्मीयमाणानि चेति ।

देशीयसंस्थाभिः निर्मितानि उच्यन्ते - 'स्वदेशीयानि' इति । वस्तुतः तु 'देशीयानि' इति कथनात् एव 'अस्मद्देशीयानि' इत्यस्य अर्थस्य प्रतीतिः भवति । तस्मात् 'स्व'शब्दस्य त्यागात् अपि अपेक्षितस्य अर्थस्य प्रतीतिः भवेत् एव । तथापि 'स्व'शब्दस्य योजनात् एव अपूर्वोत्पत्तिः इति यदि चिन्त्यते तर्हि भवतु नाम तत् । स्वशब्दस्य योजनात् विशिष्टार्थस्य भानं तु न भवति ।

११०. बालः **स्वमातापितरौ** नमस्कृतवान् ।

**'मातापितरौ'** इत्येतावता एव इष्टसिद्धिः । स्वशब्दः परिहर्तुं शक्यः ।

'स्व'शब्दः सर्वत्र योज्यते अस्माभिः । बहुत्र तस्य योजनं न आवश्यकं भवति ।

प्रकृतवाक्ये 'मातापितरौ' इत्येतावता एव 'स्वस्य' इत्यस्य अर्थस्यापि भानं भवति । यदा अन्यस्य मातापितरौ निर्देष्टव्यौ तदा अन्यादिपदानां योजनं करणीयं भवति ।

चारुदेवशास्त्रिणः एतद्विषये वदन्ति - *''पित्रादयस्सम्बन्धिशब्दास्तत्र सम्बन्धाख्यायकः स्वशब्दो नापेक्ष्यते, न च योज्यते''* इति ।

अधोनिर्दिष्टानि वाक्यानि परिशील्यन्ताम् -

- रामः स्वपितुर्भवनं जगाम ।
- सः स्वमातरं नमस्कृतवान् ।
- बालः स्वबान्धवान् निमन्त्रितवान् ।
- बालः स्वगुरुं नमस्कृतवान् ।
- सा स्वपतिम् उक्तवती ।
- सः स्वपत्नीम् आहूतवान् ।
- बालः स्वहस्तं दर्शितवान् ।
- सः स्वगृहं गतवान् ।

एतेषु सर्वेषु वाक्येषु स्वशब्दः परिहर्तुं शक्यः, परिहरणीयश्च । स्वतः सिद्धस्य सम्बन्धस्य द्योतनाय पुनः स्वशब्दस्य प्रयोगः न उचितः । एतादृशेषु वाक्येषु स्वशब्दस्य त्यागात् एव संस्कृतत्वस्य सिद्धिः ।

१११. कश्चित् **व्यापारी** सम्यक् **व्यापारं** करोति स्म ।

'व्यापारी' इत्यस्य स्थाने **'वणिक्'** इति, 'व्यापार'पदस्य स्थाने **'वाणिज्यम्'** इति च प्रयोगः वरम् ।
'व्यापार'पदस्य 'वाणिज्यम्' इति न अर्थः । 'क्रियासामान्यं' व्यापारपदेन उच्यते । वाणिज्यम् अपि कश्चन व्यापारः । तत् व्यापारेषु अन्यतमम् । हस्तचालनादयः अपि व्यापाराः एव । किन्तु ते वाणिज्यपदवाच्याः न ।
प्रादेशिकभाषासु सर्वासु 'व्यापार'पदेन वाणिज्यार्थः निर्दिश्यते । संस्कृते तु वाणिज्यं क्रयविक्रयसम्बन्धि । व्यापारश्च हस्तपादादि-चालनरूपः सर्वोऽपि व्यवहारः ।
अतः क्रयविक्रयादिरूपे व्यवहारे 'वाणिज्य'पदस्य प्रयोगः, तत्कर्तुः निर्देशाय 'वणिक्'शब्दप्रयोगश्च वरम् ।

११२. कश्चन **साधुः** ग्रामसीमायां निवसति स्म ।
**'संन्यासी'** इति **'विरागी'** इति वा प्रयोगः शोभते ।
साधुः नाम सभ्यः सत्पुरुषः । साधुशब्दः संन्यासिनः पर्यायपदं न । यः संन्यासी भवति सः साधुः (सज्जनः) भवति । किन्तु यः साधुः भवति सः संन्यासी एव भवेत् इति न नियमः । उत्तमस्वभाववान् सर्वोऽपि साधुः भवति । संन्यासी तु काम्यकर्मपरित्यागी, सर्वकर्म-फलत्यागी च ।
काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
– भगवद्गीता – १८.२
एवं साधुत्वं व्यापकः धर्मः, संन्यासः व्याप्यः धर्मः । प्रापञ्चिकविषयेषु अनादरवान् 'विरागी' इति उच्यते । प्रकृतवाक्ये तु 'संन्यासी' इति 'विरागी' इति वा प्रयोगः शोभते ।
कोषकारः हेमचन्द्रः एकः एव – 'साधुर्जैने मुनौ वार्धुषिके सज्जन-रम्ययोः' इति वदति । तस्य दृष्ट्या साधुः नाम जैनमुनिः अपि । अन्ये कोषकाराः तु साधुः इत्यस्य सज्जनाद्यर्थमात्रं लिखितवन्तः दृश्यन्ते ।

११३. तस्य **सांसारिकं** जीवनं सुखमयं नास्ति ।
'सांसारिकम्' इति अस्थाने । **'कौटुम्बिकम्'** इति प्रयोक्तव्यम् । संसारः नाम इहप्रपञ्चः । मातापितापुत्रादयः कुटुम्बशब्देन निर्दिश्यन्ते ।

एतस्मिन् वाक्ये सुखाभावः उच्यते कौटुम्बिकजीवने । यः सांसारिक-जीवने सुखं न पश्यति सः विरक्तः सन् संन्यासाश्रमम् अवलम्बेत । यः कौटुम्बिकजीवने सुखं न पश्यति स तु खिद्यमानः सन् अपि सुखप्राप्तये पुनः प्रयतते ।

११४. तस्य पत्नीपुत्रादयः **परिवारजनाः** नगरान्तरम् अगच्छन् ।
'परिवारजनाः' इति शब्दप्रयोगः अत्र अनुचितः । **'कुटुम्बजनाः'** इति प्रयोक्तव्यम् ।
संस्कृतभाषायां परिवारः नाम परिजनाः = सेवकादीनां गणः । तस्मात् पत्नीपुत्रादयः न परिवारजनाः, अपि तु कुटुम्बजनाः । अतः एव निमन्त्रणपत्रादिषु 'सकुटुम्बं सपरिवारम् आगन्तव्यम्' इति मुद्र्यते । तस्मात् स्पष्टं यत् परिवारः कुटुम्बात् अन्यः इति ।

११५. ज्येष्ठान् द्रष्टुं **रिक्तहस्तेन** मा गच्छ ।
'रिक्तहस्तेन' इति अस्थाने । **'रिक्तहस्ततया'** इति प्रयोक्तव्यम् । रिक्तः हस्तः रिक्तहस्तः । गमनक्रियायां हस्तस्य न करणत्वम् । अतः 'रिक्तहस्तेन' इति तृतीयान्तं पदम् अनन्वितं तिष्ठति । 'रिक्तः हस्तः यस्य सः' इति विग्रहः वक्तुं शक्यः रिक्तहस्तपदस्य । तदा तु रिक्तहस्तः स्यात् कर्ता । कर्तरिप्रयोगत्वात् अत्र कर्तुः प्रथमा । तद्विशेषणस्यापि प्रथमा एव स्यात्, न तु तृतीया । अतः 'रिक्तहस्तः' इति बहुव्रीहिसमासोपेतं पदं कर्तुः विशेषणं भवितुम् अपि न अर्हति । क्रियायां तु धर्मपरः शब्दः अन्वेति । रिक्तहस्तस्य भावः रिक्तहस्तता । तस्य तृतीयान्तत्वेन क्रियायाम् अन्वयः । अतः 'रिक्तहस्ततया' इति प्रयोगः एव साधुः ।
यदि 'रिक्तहस्तेन' इति प्रयोक्तव्यम् एव इति तीव्रेच्छा तर्हि कर्मणिप्रयोगः अवलम्ब्यताम् । यथा - ज्येष्ठान् द्रष्टुं रिक्तहस्तेन न गन्तव्यम् इति ।
किन्तु एतदत्र स्मर्तव्यं यत् वक्ता यदि पुमान् भवति तदा एव एतत् वाक्यं सम्भवति । यदा स्त्रिया उच्यते तदा तु 'रिक्तहस्तया न गन्तव्यम्' इति प्रयोगः स्यात्, न तु 'रिक्तहस्तेन' इति ।

११६. एषः **कोषः / कोशः** उत्तमः अस्ति ।
**'कोषः' 'कोशः'** इति उभयथा अपि साधु ।

निष्कर्षार्थकः कुषधातुः । अधिकरणादौ घञ् । 'कोषः' इति रूपम् । (मूर्धन्यः षकारः) कोषकारैः तालव्योपेतं (शकारोपेतम्) रूपम् अपि दर्श्यते । तस्मात् तालव्योपेतम् अपि रूपं (कोशः इति रूपम्) साधु एव । अमरकोषस्य सुधाव्याख्याने लिख्यते - 'कुश-संश्लेषणे । तालव्याः मूर्धन्याश्चैते इत्यधिकारे कोशविशदौ च इति शभेदः' इति । नपुंसकलिङ्गः अपि अयं शब्दः । तस्मात् कोषं / कोशम् इत्यपि रूपम् ।

११७. **कृषिकः / कृषकः** क्षेत्रे कृषिं करोति ।
**'कृषिकः' 'कृषकः'** इति रूपद्वयम् अपि साधु ।
'कृष विलेखने' इति धातुः । क्वुन्प्रत्यये 'कृषकः' इति रूपम् । किकन्प्रत्यये 'कृषिकः' इति रूपम् ।

११८. गणपतेः वाहनं **मूषकः / मूषिकः** ।
**'मूषकः' 'मूषिकः'** इति उभयम् अपि साधु ।
स्तेयार्थकस्य मुषधातोः ण्वुल्प्रत्यये 'मूषकः' इति रूपम् । तस्यैव धातोः 'किकन्'प्रत्यये (दीर्घे च) मूषिकः इति रूपम् ।
मुषधातोः अच्प्रत्यये 'मूष' इति रूपम् । तस्यापि 'मूषिकः' इत्येव अर्थः ।

११९. एषः **नारिकेलः / नालिकेरः** उन्नतः अस्ति ।
**'नारिकेलः' 'नालिकेरः'** इति उभयम् अपि साधु ।
नार्याः वनितायाः केलः इव केलः यस्य इति विग्रहे पृषोदरादित्वात् 'नारिकेलः' इति रूपं साधु । रलयोः अभेदात् 'नालिकेरः' इत्यपि रूपम् ।
अत्र 'नारिकेलः' वृक्षवाची । तस्मात् पुंस्त्वं युक्तम् । फलवाचित्वे तु नपुंसकता ।

१२०. सैनिकः **प्रतिकाराय / प्रतीकाराय** प्रयतते ।
**'प्रतिकारः' 'प्रतीकारः'** इति उभयम् अपि साधु ।
करणार्थकस्य कृञ्धातोः घञ्प्रत्यये 'प्रतिकारः' इति रूपम् । *'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६.३.१२२)* इति सूत्रेण दीर्घः । तस्मात् 'प्रतीकारः' इत्यपि रूपम् ।

१२१. **हनुमान् / हनूमान्** रामस्य परमभक्तः ।

**'हनुमान्'** **'हनूमान्'** इति उभयथा अपि साधु ।
'हनुः' इति उकारान्तं पदम् । हन्धातोः औणादिके 'उ'प्रत्यये 'हनुः' इति रूपम् । तस्यैव धातोः औणादिकः 'ऊञ्'प्रत्ययः अपि भवति । तदा 'हनूः' इति रूपम् । हनुरस्य अस्ति इति हनुमान् । हनूरस्य अस्ति इति हनूमान् ।
उभयोः अपि प्रयोगः यथा -

❖ मत्करोत्सृष्टवज्रेण हनुस्तस्य तदा क्षतः ।
नाम्नैष हरिशार्दूलः भविता **हनुमा**निति ।

- रामा॰ उत्तरकाण्डः

❖ अहं केशरिणः क्षेत्रे वायुना जगदायुना ।
जातः कमलपत्राक्ष **हनूमान्**नाम वानरः ।।

- महा. - ३.१२७

१२२. तस्य **मध्यमाङ्गुली** / **मध्यमाङ्गुलिः** दीर्घा अस्ति ।
**'अङ्गुलिः'** **'अङ्गुली'** इति उभयथा अपि साधु । 'अङ्गुलिः' इत्यत्र उलिच्प्रत्ययः । तस्यैव विकल्पेन ङीपि 'अङ्गुली' इति रूपम् ।
प्रयोगो यथा -

❖ उद्वेजयत्य**ङ्गुलि**पार्ष्णिभागान् ।

- कुमार॰ - १.११

❖ त्याज्यो दुष्टः प्रियोऽप्यासीद**ङ्गुली**वोरगक्षता ।

- रघु॰ - १.१८

एवमेव व्यवहारे श्रूयमाणानां बहूनां शब्दानां रूपद्वयं रूपत्रयं वा क्वचित् श्रूयते । तानि रूपाणि यथासम्भवम् ऊह्यानि ।

१२३. बालकः **प्रतिनित्यं** चलनचित्रं पश्यति ।
'प्रतिनित्यम्' इति अस्थाने । **'प्रतिदिनम्'** इति वक्तव्यम् ।
'नित्य'शब्दः 'दिन'पर्यायः न । तन्नाम नित्यदिनयोः अभेदार्थकता न । 'नित्य'पदस्य नियत-शाश्वतादयः अर्थाः सन्ति । नियतं भवं नित्यम् इति भाष्योक्तिः । *'त्यब्नेर्ध्रुव इति वक्तव्यम्'* इति वार्तिकम् । [*'अव्ययात्त्यप्' (४.२.१०४)* इति सूत्रे ।] तस्मात् एव यत् प्रतिदिनं न भवति, तदपि नित्यशब्देन निर्दिश्यते, नियतं भवतीति कृत्वा । एकादश्युपवासादयः अत्र उदाहरणानि ।

'नित्यकर्म'शब्देन निर्दिश्यमानानि कानिचन कर्माणि प्रतिदिनं प्रवर्तन्ते इत्यतः नित्यदिनयोः अभेदः इति भ्रमः केषाञ्चित् । अतः 'प्रतिदिनम्' इति प्रयोगः एव उचितः ।

अतः 'नित्योपयोगीनि वस्तूनि' इत्यस्य स्थाने 'दैनन्दिनोपयोगीनि वस्तूनि' इति प्रयोगः युज्यते ।

**१२४.** पाण्डवेषु सहदेवः **कनीयः** ।

'कनीयः' इति अपशब्दः । '**कनीयान्**' इति प्रयोक्तव्यम् ।

'कनीयस्'शब्दः सकारान्तः । तस्य प्रथमैकवचनान्तं रूपं कनीयान् इति ।

'युव'शब्दात् ईयसुन्प्रत्यये *'उगिदचाम्....'* (७.१.७०) इत्यनेन नुम् । *'सान्तमहतः.....'* इति दीर्घः । *'संयोगान्तस्य लोपः'* इत्यनेन सकारलोपः । (सुलोपस्तु *'हल्ङ्याब्भ्यो दीर्घात्....'* इति सूत्रेण ।) कनीयश्शब्दः अकारान्तः इति तु भ्रमः एव ।

**१२५.** अद्य **प्रश्नोत्तरीस्पर्धा** अस्ति ।

'प्रश्नोत्तरी' इति अपशब्दः । '**प्रश्नोत्तरम्**' इति प्रयोक्तव्यम् ।

प्रश्नाः च उत्तराणि च एतेषां समाहारः प्रश्नोत्तरम् । समाहारद्वन्द्वे नपुंसकं स्यात् *'स नपुंसकम्' (२.४.१७)* इति सूत्रेण । अतः '**प्रश्नोत्तरम्**' इति रूपम् ।

यदि समाहारद्वन्द्वः न इष्यन्ते तर्हि प्रश्नाः च उत्तराणि च प्रश्नोत्तराणि, तेषां स्पर्धा प्रश्नोत्तरस्पर्धा । तदा अपि न ईकारः प्रश्नोत्तरशब्दे ।

द्विगुसमासे तु *'अकारान्तोत्तरपदो द्विगुः स्त्रियाम् इष्टः'* इति वार्तिकेन स्त्रीत्वं, ततः *'द्विगोः'* इति सूत्रेण ङीप् । तस्मात् 'पञ्चवटी' इत्यादीनि रूपाणि । 'प्रश्नोत्तरम्' इत्यत्र न द्विगुः, तस्मात् ङीप् अपि न । तस्मात् 'प्रश्नोत्तरी' इति रूपं तु असाधु एव ।

**१२६.** शिवरामेण **शिक्षाशास्त्री** पठिता ।

'**शिक्षाशास्त्रं पठितम्**' इति कथनम् औचित्यम् आवहति ।

यथास्थितं तु इदं वाक्यं आकुलितम् अस्ति । न हि 'शिक्षाशास्त्री' इत्येषः शब्दः स्त्रियाम् । अतः 'पठिता' इति प्रयोगः असाधुः । 'शिक्षाशास्त्री' इति उपाधेः (उपाधिमतः वा) नाम । तच्च पदम् इन्नन्तम् । अतः 'शिक्षाशास्त्रिणम्' इति स्यात् द्वितीयान्तः प्रयोगः ।

पठनविषयः न हि उपाधिः । पठ्यते हि शास्त्रम् । अतः 'शिक्षाशास्त्रं पठितम्' इति प्रयोगः औचित्यम् आवहति ।

१२७. सः मम विषये **निर्लक्ष्यतया** व्यवहरति ।

'निर्लक्ष्यतया' इति अस्थाने । **'उपेक्षया'** इति प्रयोक्तव्यम् ।

निर्लक्ष्यशब्दः उपेक्षापर्यायः न । निर्गतं लक्ष्यं यस्मात् सः निर्लक्ष्यः । तन्नाम लक्ष्यहीनः । तस्य भावः निर्लक्ष्यता । एतस्मिन् वाक्ये लक्ष्यहीनतायाः न कापि प्रसक्तिः । 'उपेक्षा' अत्र वक्तव्या अस्ति । अतः 'उपेक्षया' इति प्रयोगः एव साधुः ।

एवमेव 'निर्लक्षितवान्' इति प्रयोगः अपि श्रूयते । तत्रापि 'उपेक्षितवान्' इति प्रयोक्तव्यम् ।

१२८. अद्य देशस्य **प्रधानी** भाषणं करिष्यति ।

'प्रधानी' इति अयुक्तम् । **'प्रधानमन्त्री'** इति, **'प्रधानः'** इति वा प्रयोक्तव्यम् ।

प्रधानः प्रमुखः मन्त्री प्रधानमन्त्री । मन्त्रिशब्दः यदि न इष्यते तर्हि 'प्रधानः' इत्यपि प्रयोगः शक्यः । 'प्रधानी' इति इन्नन्तं पदं न प्रयुक्तपूर्वम् । प्रधानः अस्य अस्तीति प्रधानी इति अर्थः उपवर्णनीयः स्यात् । तदा तु 'प्रधानयुक्तः' इति अर्थः सिध्यति । तस्मिन् अर्थे अपि तस्य प्रयोगस्य असत्त्वात् तस्य प्रयोगस्य परिहारः एव वरम् ।

१२९. शत्रवः **षड्यन्त्रं** कुर्वन्तः सन्ति ।

'षड्यन्त्रम्' इति अस्थाने । **'कुतन्त्रम्'** इति प्रयोक्तव्यम् ।

'षड्यन्त्रम्' इति शब्दः एव व्युत्पन्नः न भवति । षण्णां यन्त्राणां समाहारः इति विग्रहे उक्ते 'षड्यन्त्री' इति रूपं स्यात् । अन्यच्च तादृशः अर्थः अत्र न अभिप्रेतः एव । जयादिनिमित्तं वाममार्गेण उपायः यः चिन्त्यते सः निर्देष्टुम् इष्टः अत्र । तदर्थं 'कुतन्त्र'शब्दः प्रयोक्तव्यः । कुत्सितं तन्त्रं कुतन्त्रम् । तन्त्रपदस्य उपायः, व्यवहारः इत्यादयः अर्थाः ।

१३०. पुस्तकस्य **आवश्यकता** नास्ति मम ।

**'आवश्यकता'** इति प्रयोगः न दोषाय ।

''अवश्यम्भावः आवश्यकम् । भावे वुञ्प्रत्ययः । आवश्यक-शब्देनैव भावस्य उक्तत्वात् पुनः भावार्थे तल्प्रत्ययेन नार्थः'' इति

वदन्ति केचन । अतः आवश्यकताशब्दस्य असाधुत्वं मन्यन्ते ते । 'आवश्यकशब्दः धर्मपरः' इति तेषां कथनस्य सारः । किन्तु आवश्यकशब्दः धर्मिपरत्वेनापि बहुधा दृश्यते । यथा -

❖ शेषाधिकारस्तावदा**वश्यकः** ।

- तत्त्वबोधिनीव्याख्या ('शेषे' इति सूत्रे)

❖ षादीनां निवृत्त्यर्थमप्यधिकारः **आवश्यकः** ।

- तत्त्वबोधिनीव्याख्या ('शेषे' इति सूत्रे)

❖ तृतीयासमासोऽपि **आवश्यक** इति त्वन्ये ।

- तत्त्वबोधिनीव्याख्या ('पूर्वसदृश..'सूत्रे)

एतेषु त्रिष्वपि धर्मिपरत्वं स्फुटम् । धर्मिपरत्वाभावे समानविभक्तिकत्वम् अनुपपन्नं स्यात् ।

'आवश्यकत्व'प्रयोगो यथा -

❖ तस्येदम् इत्यादौ ......ग्रहणाभावाय तदा**वश्यकत्वात्** ।

- बालमनोरमाव्याख्या ('शेषे' इति सूत्रे)

❖ ..... ग्रहणलाभाय तदा**वश्यकत्वात्** ।

- बालमनोरमाव्याख्या ('शेषे' इति सूत्रे)

❖ ........ अतस्तेषु समासविधानस्या**वश्यकत्वात्**......

- विभाषा - २.१.१२ इत्यस्य व्याख्याने बालमनोरमायाम्

अत्र त्रिष्वपि वाक्येषु 'आवश्यकत्व'प्रयोगः कृतः अस्ति । 'आवश्यकत्व'पदस्य 'आवश्यकता'पदस्य च समानार्थकत्वम् । यदि 'आवश्यकता' इत्येतत् अयुक्तं तर्हि बालमनोरमायां प्रयुक्तस्य 'आवश्यकत्व'पदस्यापि अयुक्तता वक्तव्या भवेत् । तस्मात् 'आवश्यकता' इति तु साधु एव ।

उभयोरपि साधुत्वप्रकारः इत्थं दर्शयितुं शक्यः -

अवश्यं भावः आवश्यकम् । भावे वुञ् । आवश्यकमस्य अस्तीति आवश्यकः । *अर्श आदिभ्यो अच्* - ६.२.१२८ इति सूत्रेण मत्वर्थे अच् । आवश्यकवान् इत्यर्थः फलितः भवति । तस्मात् 'शेषाधिकारः आवश्यकः' इत्यादयः प्रयोगाः सिद्धाः । इत्थं व्युत्पादितात् आवश्यकशब्दात् (मत्वर्थीयाजन्तात्) त्वप्रत्यये आवश्यकत्वमिति, तल्प्रत्यये च आवश्यकता इति च सिद्धम् ।

तदा बालमनोरमापङ्क्तिरपि युक्ता एव ।

१३१. सः देशसेवायै **स्वात्मानं** समर्पितवान् अस्ति ।

'स्वात्मानम्' इति प्रयोगः अस्थाने । **'आत्मानम्'** इति प्रयोगः साधुः ।

आत्म-स्वशब्दयोः समानः अर्थः । समानार्थकानि पदानि एकस्मिन् एव वाक्ये न प्रयुज्यन्ते । तेषु अन्यतमः प्रयुज्यते । अतः अत्र 'स्व'शब्दस्य परित्यागः करणीयः । 'आत्मानम्' इति प्रयोगः करणीयः । आत्मशब्दं परित्यज्य स्वशब्दमात्रस्य प्रयोगः अपि कर्तुं शक्यः ।

स्वशब्दस्य 'आत्मीयः' इत्यपि अर्थः अस्ति । तथापि आत्मनः स्वेति विशेषणम् अत्र न औचित्यमावहति ।

१३२. बालेन पठनं लेखनम् **इत्यादि** कृतम् ।

**'इत्यादि'** इति प्रयोगः न असाधुः ।

इति आदिः यस्य तत् इत्यादि । विशेष्यपदस्य अनुपादानात् नपुंसकता । जातौ एकवचनम् । तस्मात् 'इत्यादि' इति सिद्धम् । अथवा कार्यजातादिषु अन्यतमं पदम् अध्याह्रियताम् । तस्मादपि एकवचनत्वसिद्धिः ।

१३३. गृहं निर्मातव्यं, धनं सम्पादनीयम् **इत्यादि आशाः** मम न सन्ति ।

**'इत्यादयः आशाः'** इति, **'इत्याद्याशाः'** इति वा प्रयोक्तव्यम् ।

इत्यादिशब्दः आशायाः विशेषणम् । आशाशब्दः बहुवचनान्तः अस्ति । अतः इत्यादिशब्दः अपि बहुवचनान्तः स्यात् । तस्मात् 'इत्यादयः आशाः' इति प्रयोगः । यदि तयोः पदयोः समासः क्रियेत तर्हि 'इत्याद्याशाः' इति रूपम् ।

'इत्यादि आशाः' इत्यत्र तु विभक्तिः न योजिता, न वा समासः कृतः । 'अपदं न प्रयुञ्जीत' ( प्रातिपदिकमात्रं न प्रयोक्तव्यम्) इति हि व्याकरणोक्तिः । 'इत्यादि' इति नपुंसके तु रूपं भवेत् । किन्तु तस्य अन्वयः 'आशा'पदे भवितुं न अर्हति । अतः 'इत्यादि' इति नपुंसके इत्येवम् उक्त्वा समर्थयितुं क्रियमाणः प्रयासः व्यर्थः एव ।

१३४. अरण्ये विविधाः सस्य**प्राणि**पक्षिणः भवन्ति ।

'प्राणि'शब्दः अत्र अस्थाने । **'पशु'**शब्दः प्रयोक्तव्यः ।

प्राणी नाम प्राणवान् । प्राणाः तु मानवानां, पशूनां, पक्षिणाम्, अन्येषां जीविनां च भवन्ति । एवं प्राणवन्तः सर्वे प्राणिनः भवन्ति । तस्मात् मानवाः अपि प्राणिनः एव । प्राणिषु अन्यतमाः पशवः । उपर्युक्ते वाक्ये ते पशवः एव निर्देष्टुम् इष्टाः । तस्मात् सस्यपशुपक्षिणः इति प्रयोक्तव्यम् ।

१३५. भाषाक्षेत्रे संस्कृतस्य **महत्त्वं स्थानम्** अस्ति ।

'महत्त्वं स्थानम्' इति असाधु । **'महत्त्वभूतं स्थानम्'** इति प्रयोगः उचितः ।

'महत्त्व'शब्दं विशेषणं कर्तुम् इच्छति वाक्यस्य प्रयोक्ता । विशेषणं धर्मिपरं चेदेव विशेष्येण समानविभक्तिकतया अन्वयं प्राप्नोति । 'महत्त्वम्' इत्येतत् धर्मपरम् । महतः भावः महत्त्वम् । एवं धर्मपरः शब्दः सामानाधिकरण्येन 'स्थान'शब्देन अन्वयं प्राप्तुं न अर्हति । अतः 'महत्त्वभूत'शब्दः प्रयोक्तव्यः । स च धर्मिपरः । सः विशेषणत्वेन अन्वयं प्राप्नोति । तस्मात् 'महत्त्वभूतं स्थानम्' इति प्रयोगः साधुः भवति ।

१३६. निरुद्योगः भारतस्य **ज्वलन्तसमस्या** अस्ति ।

'ज्वलन्तसमस्या' इति अपशब्दः । **'महती समस्या'** इति, मार्गान्तरेण वा प्रयोगः करणीयः ।

ज्वलन्ती + समस्या इति स्थिते पूर्वोत्तरपदयोः विभक्तिलोपे, पुंवद्भावे, समस्तपदात् पुनः सुबुत्पत्तौ 'ज्वलत्समस्या' इति रूपम् । 'ज्वलन्तः' इति तु पुंसि प्रथमाबहुवचनान्तं रूपम् । समासे तु विभक्त्यन्तानि रूपाणि पूर्वपदत्वेन न दृश्यन्ते, अलुक्समासात् ऋते । पूर्वपदानां प्रातिपदिकरूपेण स्थितिः ।

'ज्वलत्समस्या' इति रूपं तु भवति । न हि समस्या ज्वलति । सा हि अस्मान् ज्वालयति । या ज्वलति सा क्षीयते । क्षयार्थज्ञापकात् विशेषणात् समस्यायाः उग्रता न अनुभवगोचरतां याति । समस्यायाः उग्रता एव वक्त्रा ज्ञापयितुम् इष्टा । तस्मात् 'महती समस्या' इति प्रयोगः वरम् । अथवा भङ्ग्यन्तरेण प्रयोगः अपि भवितुम् अर्हति ।

१३७. पूजासमये अर्चकेन **'आरतिः'** कृता ।

'आरतिः' इति प्रयोगः अनुचितः । **'नीराजनम्'** इति प्रयोक्तव्यम् ।

'आरति'पदस्य विश्रान्तिः, विरामः, निवृत्तिः इत्यादयः अर्थाः वर्णिताः कोषकारैः । नीराजनार्थः केनापि न वर्णितः । तस्मात् आरतिः इति प्रयोगः अस्थाने । 'नीराजनम्' इति प्रयोगः उचितः । केचन 'आरति'शब्दस्य साम्यं चिन्तयन्तः 'आरार्तिकम्' 'आरात्रिकम्' इत्यादीनि पदानि प्रयुञ्जते । तेषां साधुत्वकथनप्रकारः तु न ज्ञायते । अतः तेषां परिहारः अपि वरम् एव इति भाति ।

१३८. देहलीनगरे मया गान्धि**समाधिः** दृष्टा ।

'गान्धिसमाधिः दृष्टा' इति प्रयोगः अशुद्धः । **'गान्धिस्मारकं दृष्टम्'** इति प्रयोक्तव्यम् ।

प्रसिद्धस्य पुरुषस्य दिवंगतेः अनन्तरं तस्य स्मरणाय किञ्चन स्मारकं निर्मीयते । प्रादेशिकभाषासु तस्य 'समाधिः' इति नाम । संस्कृतभाषायां तत् 'स्मारकम्' इति उच्यते । समाधिपदं योगशास्त्रीयं पारिभाषिकं पदम् । एकाग्रतया मनसः स्थापनरूपः ध्येयमात्रस्मरणरूपः ध्यान-विशेषः 'समाधिः' इति उच्यते । समाधिः अन्यः, स्मारकं शवस्थानं वा अन्यत् । तयोः अभेदेन व्यवहारः नास्ति ।

अन्यच्च, समाधिशब्दः पुंसि । अतः 'समाधिः दृष्टा' इति प्रयोगः अनुचितः । 'समाधिः दृष्टः' इति पुंसि प्रयोक्तव्यम् ।

१३९. शिष्येण **गुरवे गुरुदक्षिणा** दत्ता ।

**'गुरवे दक्षिणा दत्ता'** इति प्रयोगः उचितः । गुरवे या दक्षिणा दीयते सा उच्यते 'गुरुदक्षिणा'* इति । एतस्मिन् वाक्ये 'गुरु'शब्दः द्विवारम् उपात्तः दृश्यते । तत् अनुचितम् । 'गुरवे दक्षिणा दत्ता' इति आनुपूर्वी एव शोभते ।

एवमेव -

| | |
|---|---|
| ग्रामस्य | ग्रामाधिकारी |
| ग्रामस्य | ग्रामदेवता |
| कार्यालयस्य | कार्यालयप्रमुखः |
| गृहस्य | गृहस्वामी / गृहरक्षकः |

---

* 'गुरुदक्षिणा' इत्यत्र 'गुरोः दक्षिणा' इति षष्ठीतत्पुरुषः । 'गुरवे दक्षिणा' इति चतुर्थीतत्पुरुषः न, विधायकसूत्राभावात् ।

| | |
|---|---|
| देवस्य | देवालयः |
| ग्रन्थस्य | ग्रन्थपरिचयः |
| राशेः | राश्यधिपतिः |
| राज्ञः | राजकुमारः |

इत्यादयः प्रयोगाः अनुचिताः । समानार्थकौ उभौ शब्दौ (एकः षष्ट्यन्तः, अपरः समासाङ्गभूतः) समाने वाक्ये न प्रयोक्तव्यौ ।

१४०. एतस्मात् मम **बहुखेदः** जातः ।
गुरौ **बहुश्रद्धा** तस्य ।
अत्र वाक्यद्वये अपि बहुशब्दः प्रयुक्तः । आधिक्यार्थे सः अत्र प्रयुक्तः । बहुशब्दप्रयोगे न दोषः । किन्तु तत्र संस्कृतत्वं सौन्दर्यं वा न्यूनम् । एतादृशे अवसरे महच्छब्दः प्रयुज्यते संस्कृतक्षेत्रे । तस्मात् **'महान् खेदः' 'महती श्रद्धा'** इत्येवं प्रयोगः शोभते ।
महच्छब्दः अन्यासु भाषासु एतेन प्रकारेण न प्रयुज्यते । संस्कृते तु महान् तस्य प्रयोगप्रसरः । केचन प्रयोगाः यथा -

| | |
|---|---|
| ❖ महत् दुःखम् | ❖ महान् आनन्दः |
| ❖ महती निद्रा | ❖ महान् सम्मर्दः |
| ❖ महती वेदना | ❖ महत् आश्चर्यम् |
| ❖ महान् आदरः | ❖ महती असूया |
| ❖ महान् कोपः | ❖ महान् उत्कर्षः इत्यादयः । |

१४१. ह्यः **मम मित्रम् आगतवान्** आसीत् ।
'मित्रम् आगतवान्' इति वाक्यम् अशुद्धम् । **'मित्रम् आगतवत्'** इति वक्तव्यम् ।
मित्रशब्दः नपुंसके । 'आगतवान्' इति तु पुंसि । आगतवच्छब्दस्य पुंस्त्वम् अत्र न सङ्गच्छते । मित्रशब्दस्य नपुंसकत्वात् आगतवच्छब्दस्य अपि नपुंसकता एव स्यात् । अतः 'मित्रम् आगतवत्' इत्येव प्रयोक्तव्यम् । 'मम मित्रं रमेशः आगतवान्' इति वाक्यप्रयोगः यदि भवति, तन्नाम रमेशपदस्य मध्ये निवेशः यदि भवति तर्हि 'आगतवान्' इति पुंलिङ्गप्रयोगः सङ्गच्छते एव । मित्रंशब्दः विशेषणं सत् गौणतां भजते । रमेशशब्दस्यैव प्राधान्यम् । तस्य पुंस्त्वात् आगतवच्छब्दस्यापि पुंस्त्वं युज्यते एव ।

१४२. **यदि** जनाः श्रद्धया कार्यं कुर्वन्ति **चेत्** देशस्य प्रगतिः सिद्ध्येत् ।
'यदि' इत्यस्य यः अर्थः सः एव अर्थः 'चेत्' इत्यस्यापि । अतः तयोः अन्यतरः प्रयोक्तव्यः । तन्नाम 'यदि'शब्दः प्रयुक्तः चेत् 'चेत्'शब्दः परिहरणीयः । 'चेत्' प्रयुक्तं चेत् 'यदि'शब्दः परिहरणीयः । समानार्थकयोः सहप्रयोगः न युज्यते ।

१४३. **शैत्यात्** तस्य नासिकातः सिङ्घाणः स्रवति ।
**'पीनसात्'** इति प्रयोक्तव्यम् ।
शीतस्य भावः शैत्यम् । जलादिषु तत् दृश्यते । हेमन्तादिषु कुज्झटिकाहिमादिकारणतः परिसरे अपि शैत्यं दृश्यते । ज्वरादिषु प्रसङ्गेषु अपि शैत्यम् अनुभूयेत । 'पीनसः' तु नासिकासम्बद्धः कश्चन रोगः । 'प्रतिश्यायः' इति तस्य अपरं नाम । नासिकातः स्रावः पीनसकारणतः जायते, न तु शैत्यकारणतः । पीनसः तु शैत्यकाले यथा, तथैव औष्ण्यकाले अपि भवितुम् अर्हति । अतः शैत्यम् अन्यत्, पीनसः अन्यः एव ।

१४४. पीनसकारणतः निरन्तरं **क्षुवः** मम ।
'क्षुवः' इति अपशब्दः । **'क्षवः'** इति, **'क्षुतम्'** इति वा प्रयोक्तव्यम् ।
टु क्षु (शब्दे) + भावे क्तः = क्षुतम् । टु क्षु (शब्दे) + अप् = क्षवः । उभयोः अपि समानः अर्थः । क्षुवः इत्यस्य साधुता तु नास्ति । अतः सः न प्रयोक्तव्यः ।

१४५. सुभाषचन्द्रादीनां जन्मतः देशस्य **घनता** प्रवृद्धा ।
'घनता' इति प्रयोगः अस्थाने । **'गौरवम्'** इति प्रयोक्तव्यम् । घनशब्दस्य सान्द्रादयः अर्थाः सन्ति । किन्तु गौरवार्थकत्वं नास्ति तस्य । अतः पूर्वोक्ते वाक्ये 'घनता' इति प्रयोगः अस्थाने । 'गौरवम्' इति प्रयोगः औचित्यम् आवहति ।

१४६. मातुः वचने पुत्रः **लक्ष्यं** न ददाति ।
'लक्ष्यम्' इति पदम् अस्थाने । **'अवधानम्'** इति प्रयोक्तव्यम् । 'लक्ष्य'पदस्य 'उद्दिष्टम्' 'लक्षणेन युक्तम्' इत्यादयः अर्थाः । उपर्युक्ते वाक्ये ते च अर्थाः न अभिप्रेताः । 'अवधानम्' इत्यर्थः अभिप्रेतः । अवधानं नाम मनसः एकाग्रता । अतः लक्ष्यम् अन्यत् ।

अवधानम् अन्यत् एव । तयोः न पर्यायता ।

१४७. केचन जनाः **ध्येयविहीनं** जीवनं यापयन्ति ।
अत्र 'ध्येय'पदस्य स्थाने **'लक्ष्य'**पदस्य निवेशनं वरम् ।
यत् ध्यातुं योग्यं (ध्यातुम् अर्हं वा) भवति तत् ध्येयम् । (ध्यै - चिन्तायाम् + यत्) लक्ष्यं तु उद्दिष्टं भवति । यद्यपि यत् लक्ष्यं भवति तत् ध्येयम् एव भवति, तथापि ध्येय-लक्ष्ययोः अस्ति एव सूक्ष्मः कश्चन भेदः ।
कश्चन अलसः बालः अस्ति इति चिन्त्यताम् । परीक्षायाम् उत्तीर्णताप्राप्तिः तस्य लक्ष्यम् । किन्तु स सर्वदा ध्यायति क्रीडादिकम् । एतादृशे प्रसङ्गे तस्य लक्ष्यम् अन्यत्, ध्येयं भवति अन्यत् एव । तस्मात् तयोः अर्थभेदः स्फुटः ।
तथापि लक्ष्यं यस्य जीवने प्रमुखं तस्य जीवने ध्येयम् अपि तदेव भवति इत्यतः ध्येयलक्ष्ययोः क्वचित् पर्यायता अपि सम्भवति । स्मर्तव्यम् अत्र यत् एषा समानार्थकता क्वचिदेव इति ।

१४८. कफदोषादिकारणतः शरीरेऽपि **कृमिः/क्रिमिः** जायते ।
**'कृमिः' 'क्रिमिः'** इति रूपद्वयम् अपि साधु एव ।
पादविक्षेपार्थकस्य 'क्रमु'धातोः इत्प्रत्ययः - *'क्रमितमिशतिस्तम्भामत इच्च' (३.४.१२१)* इति सूत्रेण । तदा च 'क्रिमिः' इति रूपम् । पूर्वसूत्रात् सम्प्रसारणस्य अनुवृत्तेः 'कृमिः' इत्यपि रूपम् । अतः रूपद्वयम् अपि साधु एव । तथा हि कोषः (मेदिनी) - 'कृमिर्ना क्रिमिवत्कीटे लाक्षायां कृमिले खरे' इति ।

१४९. अद्य नाटके पात्रधारिणां **वेषः / वेशः** उत्कृष्टः आसीत् ।
**'वेषः' 'वेशः'** इति रूपद्वयम् अपि साधु एव ।
'वेषः' इत्यत्र विष्लृ(व्याप्तौ)धातोः घञ् । 'वेशः' इत्यत्र विश(प्रवेशने)धातोः घञ् । (विशन्ति नयनानि अत्र) धातुभेदात् रूपभेदः ।

१५०. अहं **सर्वविधेनापि** भवतः साहाय्यं करिष्यामि ।
'सर्वविधया' इति प्रयोगः युक्ततरः ।
विधा नाम प्रकारः । प्रकारार्थकः सः स्त्रियाम् । तथा हि कोषः - 'विधा गजान्ने ऋद्धै च प्रकारे वेतने विधौ' (मेदिनी) । पुंसि

नपुंसके वा सः न आम्नातः । अतः 'विधेन' इति रूपं न सिद्ध्यति । 'विधा'शब्दस्य तृतीयान्तं रूपम् (ए.व.) 'विधया' इति ।

१५१. **सर्वविधैरपि** उपायैः कार्यस्य सिद्धिः चिन्तनीया ।

'सर्वविधैः' इति प्रयोगः न दोषाय ।

'विधाशब्दः आकारान्तः इति पूर्वम् उक्तम् । एवं स्थिते 'सर्वविधैः' इति रूपं कथम् ? 'सर्वविधाभिः' इति स्यात् खलु ?' इति प्रश्नः उदियात् कदाचित् । मास्तु तत्र भ्रान्तिः । 'सर्वविध'शब्दः तु अकारान्तः । अतः 'सर्वविधैः' इति तदीयं तृतीयाबहुवचनान्तं रूपं साधु एव ।

'विधा'शब्दः आकारान्तः इति तु सत्यम् । 'सर्वविध'शब्दः तस्मात् अन्यः । सः बहुव्रीहिसमासान्तः । अतः सः उपायस्य विशेषणम् । उपायशब्दः पुंसि । तस्मात् तद्विशेषणभूतः सर्वविधशब्दोऽपि पुंसि एव ।

एवमेव 'अनेकविधाः' 'बहुविधाः' 'नानाविधाः' इत्यादयः शब्दाः अपि भवन्ति विशेष्यनिघ्नाः ।

१५२. साधु, भवता **समर्पकं** कार्यं कृतम् ।

'समर्पकम्' इति प्रयोगः अस्थाने । **'समुचितम्'** इति **'योग्यम्'** इति वा प्रयोक्तव्यम् ।

समर्पणं यः करोति सः भवति समर्पकः । अत्र तादृशः अर्थः न अभिप्रेतः । कार्यस्य समुचितत्वं सुयोग्यत्वं वा प्रतिपादनीयम् अस्ति अत्र । तस्मात् तादृशः एव पदप्रयोगः चिन्तनीयः । केचन संस्कृतशब्दाः यस्यार्थस्य वाचकाः भवन्ति, तस्यैवार्थस्य वाचकाः न भवन्ति, ते यदा प्रादेशिकभाषायां प्रयुज्यन्ते । अतः विषयेऽस्मिन् अवधानवद्भिः भवितव्यं प्रयोक्तृभिः ।

१५३. क्रुद्धेन तेन **गाली दत्ता** ।

**'गालिः'** इति प्रयोक्तव्यम् । स च शब्दः पुंसि । अतः 'गालिः दत्तः' इति भवेत् आनुपूर्वी ।

गालिर्नाम शपनं निन्दा वा । गाल्यते विक्रियते श्रवणमात्रेण मनो यस्मात् येन वा । गल (प्रस्रवणे) + णिच् + इत् । 'गालिः शपनम्' इति त्रिकाण्डकोषः ।

हिन्द्यादिभाषासु तस्य पदस्य ईकारान्तता स्त्रीत्वं च दृश्यते । संस्कृतभाषायां तु तस्य इकारान्तता पुंस्त्वं च कोषकारैः निर्दिष्टं दृश्यते ।

१५४. उद्याने जनाः **आरामेण** उपविशन्ति ।
'आरामेण' इति प्रयोगः अस्थाने । **'सुखेन'** इति, **'ससुखम्'** इति वा प्रयोक्तव्यम् ।
वाक्यप्रयोक्ता सुखोपवेशनम् इच्छति । किन्तु पदप्रयोगः तेन अन्यथा कृतः । आरामः नाम उद्यानम् उपवनं वा । सुखार्थकत्वं तस्य पदस्य नास्ति । हिन्द्यादिभाषासु तदस्ति, न तु संस्कृते । प्रादेशिकभाषा-प्रभावकारणतः क्रियमाणः प्रयोगः अयम् ।

१५५. कार्यक्रमान्ते कार्यकर्त्रा **आभार**प्रदर्शनं कृतम् ।
**'कृतज्ञता ज्ञापिता' 'धन्यवादाः समर्पिताः'** इत्यादीनि वाक्यानि अत्र प्रयोक्तव्यानि । 'आभारः' इति पदम् अस्थाने ।
'भार'शब्दस्य यः अर्थः सः एव भवितुम् अर्हति 'आभार'-शब्दस्यापि । स च अर्थः अत्र न अभिप्रेतः । सभाम् आगत्य जनैः शान्ततया उपविश्य यत् श्रुतं तदर्थं धन्यवादाः अर्पणीयाः, कृतज्ञता ज्ञापनीया । अतः तदनुगुणः एव वाक्यप्रयोगः चिन्तनीयः अत्र ।

१५६. भवता यत् उपकृतं तदर्थम् अहम् **आभारी** अस्मि ।
**'कृतज्ञः अस्मि'** इति प्रयोक्तव्यम् । वाक्यान्तरं वा चिन्तनीयम् । आभारशब्दस्य अर्थः पूर्वम् उक्तः एव । वाक्यप्रयोक्ता कृतज्ञत्वम् इच्छति । आभारशब्दस्य तादृशं सामर्थ्यं नास्ति । तस्मात् स च परिहरणीयः एव एतादृशेषु प्रसङ्गेषु ।

१५७. लेखनस्य अन्ते लिख्यते **'साभारम्'** इति ।
कृतज्ञतापूर्वम् कस्माच्चित् मूलात् यदा विषयः उद्ध्रियते तदा प्रादेशिकभाषायाम् एतादृशः प्रयोगः क्रियते । किन्तु न एषा संस्कृत-शैली । आभारशब्दः न हि कृतज्ञतां गमयति । अतः **'सकार्तज्ञ्यम् उद्धृतम्' 'कृतज्ञतापूर्वकम् उद्धृतम्'** इत्यादयः प्रयोगाः प्रसङ्गेऽस्मिन् चिन्तनीयाः ।

१५८. **अभिभावकाः** छात्राणां विद्याभ्यासविषये अवधानवन्तः स्युः ।
'अभिभावकाः' इति अस्थाने । **'पालकाः' 'पोषकाः' 'पितरः'**

इत्यादयः शब्दाः अत्र प्रयोक्तुम् अर्हाः ।
अभिभावकपदेन अत्र पालनपोषणकर्तारः इष्टाः । किन्तु तादृशस्य अर्थस्य अभिव्यञ्जने अभिभावकपदस्य सामर्थ्यं नास्ति इति भाति । 'अभि' इति उपसर्गेण युक्तः भूधातुः (ण्यन्तः, अण्यन्तः वा) तिरस्काराद्यर्थं ददाति, न तु पोषणाद्यर्थम् । 'आत्तगर्वोऽभिभूतः स्यात्' इति अमरः । अन्ये कोषकाराः अपि एतादृशम् एव अर्थं लिखितवन्तः दृश्यन्ते ।
'अभिभावक'पदं तु संस्कृतम् एव । किन्तु सः पोषकाद्यर्थेषु कथं प्रयुज्यते इति तु न ज्ञायते । साधुत्वकथनप्रकारम् अपि वयं तु न जानीमः ।

१५९. सः नितरां **चाणाक्षः** अस्ति ।
'चाणाक्षः' इति अपशब्दः । **'चतुरः'** इति, **'निपुणः'** इति, पदान्तरं वा प्रयोक्तव्यम् ।
वक्ता अत्र चतुरमतित्वं नैपुण्यं वा निर्देष्टुम् इच्छति । चाणाक्षः इति तु असंस्कृतः शब्दः । अतः सः परिहरणीयः । चतुरनिपुणादयः यथायोग्यं प्रयोक्तव्याः ।

१६०. **पञ्चवादनपर्यन्तम्** एतत् कार्यं समापनीयम् अस्ति मया । **'पञ्चवादनाभ्यन्तरे'** इति प्रयोक्तव्यम् । 'पञ्चवादनपर्यन्तम्...' इत्येषा न संस्कृतशैली ।
'पञ्चवादनात् पूर्वं यदाकदाचित् एतत् कार्यं समापनीयम्' इति वाक्यप्रयोक्तुः आशयः । अयमेव आशयः 'पांच बजे तक' इति वाक्येन प्रकाश्यते हिन्दीभाषया । तस्यैव अनुवादः 'पञ्चवादन-पर्यन्तम्..' इति । शब्दानुवादः कृतः अत्र, न तु भावानुवादः । पर्यन्तशब्दः सीमां निर्दिशति । अवधिनिर्देशावसरे तस्य प्रयोगः भवितुम् अर्हति । अत्र तु अवधिनिर्देशः न इष्टः । अतः 'अभ्यन्तर'शब्दस्य प्रयोगः अत्र समुचितः ।

१६१. **वस्तूनि एकत्रीकृत्य** नयतु भवती ।
'एकत्रीकृत्य' इति अपशब्दः । **'सङ्गृह्य'** इति, **'समाहृत्य'** इति वा प्रयोक्तव्यम् ।
'एकत्रीकृत्य' इत्यत्र च्विप्रत्ययः अस्ति । च्विप्रत्ययविषये किञ्चित्

विस्तरेण ज्ञातव्यम् अस्माभिः ।

च्विप्रत्ययविधायकं सूत्रं - *'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' (५.४.५०)* इति । तस्य वृत्तिवाक्यं तु - *'विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानात् विकारशब्दात् स्वार्थे च्विर्वा स्यात्करोत्यादिभिः योगे ।'* इति । तस्य टिप्पण्यां लिख्यते - 'येन रूपेण प्रागभूतं तेन रूपेण तस्य भावः इति फलितोऽर्थः । एवं च यत्र प्रकृतिस्वरूपमेव विकाररूपताम् आपद्यमानं विवक्ष्यते तत्रायं प्रत्ययः' इति ।

एवं च सिद्धं यत् प्रकृतिविकृतिभावे सत्येव च्विप्रत्ययः क्रियते इति । सरलीकरोति, दीर्घीकरोति, स्पष्टीकरोति, विशदीकरोति इत्यादीनि अत्र उदाहरणानि । इदानीम् 'एकत्रीकरोति' इत्येतत् उदाहरणं परिशीलयाम तावत् ।

'एकत्रीकरोति' इत्यत्र एकस्मिन् स्थले स्थापनम् (आनयनं वा) विवक्ष्यते, न तु प्रकृतिविकृतिभावः । अतः च्विप्रत्ययः अस्थाने । प्रयोगोऽयं बहुत्र संस्कृतज्ञैः एव क्रियमाणः दृश्यते । तत् तु अनवधानात् इति भाति । प्रकृतिप्रत्ययविधायकसूत्रादिकम् अपरिशीलयद्भिः कैश्चित् तादृशः प्रयोगः क्रियेत । किन्तु तावता न तस्य साधुता ।

१६२. एतावत्पर्यन्तं यत् उक्तं तत् **क्रोढीकृत्य** वदामि ।

'क्रोडीकृत्य' इति, 'क्रोढीकृत्य' इति वा अपशब्दः एव । **'सङ्गृह्य'** इति प्रयोगः भवितुम् अर्हति । 'उक्तस्य अयं सारः' इति वाक्यान्तरं वा प्रयोक्तव्यम् ।

क्रोडपदस्य अङ्कवक्षोवराहादयः अर्थाः । कोषो यथा - 'क्रोडः शनौ सूकरे ना न पुमानङ्कवक्षसोः' (मेदिनी) इति । क्रोडीकरणं नाम आलिङ्गनम् । 'सङ्ग्रहणं' 'सम्मेलनम्' इत्यादयः अर्थाः न सन्ति तस्य । तस्मात् क्रोडीकृत्य इति प्रयोगः (सङ्ग्रहार्थे) अयुक्तः एव । 'क्रोढीकृत्य' इत्येतत् महाप्राणोपेतं (ढकारोपेतं) रूपं तु सर्वथा असाधु एव ।

१६३. बान्धवाः कुलमिच्छन्ति, **मृष्टान्न**मितरे जनाः ।

**'मिष्टान्नम्'** इति प्रयोक्तव्यम् ।

मिष्टं नाम मधुररससहितम् । (मिषु (सेचने) + क्तः) विवाहादिषु मिष्टम् एव इष्यते जनैः । शुद्ध्यर्थकात् मृज्धातोः क्तप्रत्यये 'मृष्टम्' इति रूपम् । तदा च अर्थः भवेत् - क्षालितं, शुद्धम् इत्यादिकम् । स च अर्थः अत्र न अभिप्रेतः । तस्मात् 'मिष्टम्' इति प्रयोक्तव्यं, न तु 'मृष्टम्' इति ।

१६४. **निधानेन** आगच्छति यानम् ।

**'मन्दम्'** इति प्रयोक्तव्यम् ।

'नि' इत्यनेन उपसर्गेण युक्तः धाञ्धातुः स्थापनादीन् अर्थान् अवगमयति । उपर्युक्ते वाक्ये तु 'मन्दगतिः' अपेक्ष्यते । तादृशस्य अर्थस्य अभिव्यञ्जने सामर्थ्यं नास्ति निधानशब्दस्य । अतः गतिमन्दतार्थे प्रयोगं नार्हति स च शब्दः ।

१६५. न्यायवादी अपराधं **साधारं** न्यरूपयत् ।

**'सप्रमाणम्'** इति वक्तव्यम् ।

आधार'पदस्य आश्रयसाहाय्यादयः अर्थाः कोषकारैः उपवर्णिताः । प्रमाणपर्यायत्वेन तस्य प्रयोगः न केनापि कोषकारेण सूचितः । अपराधनिरूपणावसरे प्रमाणम् एव अपेक्ष्यते । अतः 'सप्रमाणम्' इत्यस्य शब्दस्य प्रयोगः श्रेयसे ।

१६६. कार्यक्रमस्य अन्ते छात्रैः **मनरञ्जनकार्यक्रमाः** प्रदर्शिताः ।

**'मनोरञ्जनम्'** इति प्रयोक्तव्यम् । 'मनरञ्जनम्' इति अपशब्दः । 'मनः'शब्दः सकारान्तः । रञ्जनशब्दे परे सकारस्य रेफे उत्वे गुणे च 'मनोरञ्जनम्' इति रूपम् । विसर्गस्य लोपः तु नास्ति केनचिदपि सूत्रेण । मनश्शब्दः अकारान्तः अपि न । अतः मनरञ्जनम् इति रूपं न साधु ।

मनश्शब्दः इव अन्ये अपि केचन शब्दाः सकारान्ताः भवन्ति । तैः सह समाससमये विसर्गस्य विकारविषये अवधानवद्भिः भवितव्यम् । अन्यथा अशुद्धरूपाणां प्रयोगः भवितुम् अर्हति ।

कानिचन उदाहरणानि यथा -

| *अशुद्धम् (✗)* | *शुद्धम् (✓)* |
|---|---|
| मनोचिकित्सा | मनश्चिकित्सा |

| | |
|---|---|
| मनोप्रवृत्तिः | मनःप्रवृत्तिः |
| मनोस्थैर्यम् | मनःस्थैर्यम् |
| मनोप्रकृतिः | मनःप्रकृतिः |
| मनैक्यम् | मन ऐक्यम् |
| मनोपरिवर्तनम् | मनःपरिवर्तनम् |
| ओजोपूर्णम् | ओजःपूर्णम् |
| मनोल्लासः | मनउल्लासः |

यदि सकारान्तस्य मनश्शब्दस्य प्रयोगे क्लेशः तर्हि 'मानस'शब्दः प्रयुज्यताम् । मनोमानसयोः अर्थः समानः । मानसशब्दः अकारान्तः । तदा च 'मानसचिकित्सा' 'मानसोल्लासः' 'मानसप्रकृतिः' इत्यादीनि रूपाणि सिद्ध्यन्ति ।

१६७. बालः **परमालसी** अस्ति ।
**'अलसः'** इति प्रयोक्तव्यम् ।
न + लसति = अलसः । [लस् (श्लेषणे) + अच्] 'आलसी' इति रूपं तु प्रादेशिकभाषायां, न तु संस्कृते । अतः स च शब्दः परिहरणीयः एव ।

## ५. पञ्चमोऽध्यायः

# विभक्त्यादयः

०१. 'मम पुत्रः पण्डितः भवितव्यः' इति माता चिन्तयति ।

**'मम पुत्रेण पण्डितेन भवितव्यम्'** इति वाक्यरचना स्यात् ।

भवितव्यम् इत्यत्र भावे तव्यत्प्रत्ययः । भूधातुः अकर्मकः । भावे औत्सर्गिकम् एकवचनं क्लीबत्वं च । अतः 'भवितव्यम्' इति रूपम् । अत्र कर्ता केनापि प्रत्ययेन न उक्तः इत्यतः तस्मात् (पुत्रपदात्) तद्विशेषणात् (पण्डितपदात्) च तृतीया । अतः 'मम पुत्रेण पण्डितेन भवितव्यम्' इत्येव वाक्यविन्यासेन भवितव्यम् ।

०२. त्वया **रामः इव** पण्डितेन भवितव्यम् ।

**'रामेण इव'** इति प्रयोक्तव्यम् ।

पण्डितेन भवितव्यम् इति वाक्यविन्यासः साधुः । विवरणं तु पूर्ववाक्ये उक्तम् । अत्र रामस्य सादृश्यम् उच्यते । उपमानोपमेययोः समानविभक्तिः स्यात् । अतः उपमानात् रामपदादपि तृतीया एव स्यात्, न तु प्रथमा ।

०३. **अनुजः इव** अग्रजाय अपि क्षीरं देहि ।

**'अनुजाय इव'** इति प्रयोक्तव्यम् ।

'अग्रजाय' इति चतुर्थी अस्ति । अतः अनुजशब्दादपि चतुर्थी स्यात् । यथास्थितस्य अर्थः तु 'अनुजः इव यः अस्ति तस्मै अग्रजाय' इति भवितुम् अर्हति । स च अर्थः अत्र न इष्टः । अग्रजस्य यथा सम्प्रदानसंज्ञा तथैव अनुजस्य अपि सम्प्रदानसंज्ञा । अतः 'अनुज'-पदादपि चतुर्थी एव ।

०४. ये दुराचारं कुर्वन्ति तेषां **नाशः** अवश्यं **भाव्यः** ।

'नाशः भाव्यः' इति अशुद्धप्रयोगः । **'नाशेन भाव्यम्'** इति प्रयोगः उचितः ।

'भाव्यम्' इत्यत्र भावे अवश्यम्भावार्थे ण्यत्प्रत्ययः *'ओरावश्यके'* *(३.१.१२५)* इति सूत्रेण । भावे औत्सर्गिकम् एकवचनं क्लीबत्वं च । अतः 'भाव्यम्' इति रूपम् । केनापि प्रत्ययेन कर्तुः अनुक्तत्वात् तस्मात् तृतीया । अतः 'नाशेन भाव्यम्' इत्येव साधुः प्रयोगः ।

०५. भवन्तः सर्वे एवं कुर्वन्ति चेत् भवताम् **उन्नतिः** भवितुं न **शक्या** ।

'उन्नतिः भवितुं शक्या' इति वाक्यम् अशुद्धम् । **'उन्नत्या भवितुं न शक्यम्'** इति प्रयोक्तव्यम् ।

शक्लृधातोः अत्र भावे यत्प्रत्ययः *'शकिसहोश्च'* ( ३.१.९९ ) इति सूत्रेण । भावे यत्प्रत्ययस्य विधानात् एकवचनं नपुंसकता च । अतः 'शक्यम्' इति रूपम् । एतत् 'शक्य'पदं कर्तारं न बोधयति, भावे प्रत्ययस्य विधानात् । तुमुन्नन्तम् अपि कर्तारं न बोधयति, भूधातोः अकर्मकत्वात् । केनापि कर्तुः अनुक्तत्वात् न प्रथमा, अपि तु तृतीया एव । अतः 'उन्नत्या' इति तृतीयान्तं रूपं सिद्धम् । अतः 'उन्नत्या भवितुं शक्यम्' इति प्रयोगः एव साधुः ।

०६. शिशुना तेन दश **शब्दाः** वक्तुं **शक्यन्ते** ।

**'शब्दाः वक्तुं शक्यन्ते'** इति वाक्यं साधु एव ।

'शक्यते' इत्यत्र कर्मणि यक् । कर्मभूतस्य 'शब्दाः' इत्यस्य 'शक्यन्ते' इत्यत्र अन्वयः । कर्मणः बहुत्वे क्रियापदस्यापि बहुवचनान्तत्वम् । (शक्यन्ते इति) कर्मणिप्रयोगस्य नियमाः अत्र स्मरणीयाः । तिङा कर्मणः उक्तत्वात् कर्मणः प्रथमा ।

०७. अध्यापकेन दश **श्लोकान्** पाठयितुं **शक्यते** ।

**'श्लोकान्** पाठयितुं **शक्यते'** इत्यपि वाक्यं शुद्धम् एव । अत्र 'श्लोकान्' इत्यस्य 'पाठयितुम्' इत्यत्र अन्वयः । बहुवचनान्तेन स्थितस्य 'श्लोकान्' इत्यस्य 'शक्यते' इत्यत्र अनन्वयात् न तस्य बहुवचनान्तत्वेन श्रवणम् । प्रकृतवाक्ये 'शक्यते' इत्यत्र भावे यक् । शक्यते इत्येषः अत्र अकर्मकः ।

षष्ठस्य सप्तमस्य च वाक्यस्य श्रवणात् कदाचित् प्रश्नः भवेत् - 'शक्यते इत्यत्र यक् भावे उत कर्मणि ?' इति । यतः षष्ठे वाक्ये कर्मणि यक् दृश्यते । सप्तमे च भावे यक् । एवं तर्हि शक्लृधातोः यक् भावे उत कर्मणि ?

माधवीयधातुवृत्तौ एवं लिख्यते -

> *''विभाषा भावादिकर्मणोः इत्यत्र हरदत्तः - 'यद्यपि शकिः केवलः अकर्मकः । तथापि तुमुन्नन्तवाच्यक्रियाविषयत्वे सकर्मकोऽपि भवति । तथा च कर्मणि लादयोऽपि दृश्यन्ते - अयं योगश्शक्यः अवक्तुम् इति ।''*

वामनः अपि वदति -

*''शक्यम् इति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात्''* (५.२.२३) इति ।

अतः शक्लृधातुः कर्मणि भावे च यकं प्राप्तुम् अर्हति । 'श्लोकान् पाठयितुं शक्यते' इत्यत्र श्लोकपदस्य तुमुन्नन्तपदे अन्वयः । अतः शक्यते इत्यत्र भावे यक् । 'शब्दाः वक्तुं शक्यन्ते' इत्यत्र कर्मणः (शब्दाः इत्यस्य) शक्लृधातौ अन्वयः । अतः कर्मणि यक् । एवम् उभयथा अपि प्रयोगः । अतः 'प्रयत्नः कर्तुं शक्यः' 'प्रयत्नं कर्तुं शक्यम्' इति उभयथा अपि प्रयोगः साधुः एव ।

०८. **कतिचित् दिनेषु** अतीतेषु वर्षाकालः सम्प्राप्तः ।

'कतिचित् दिनेषु' इति प्रयोगः अशुद्धः । **'कतिषुचित् दिनेषु'** इति वक्तव्यम् । **'कतिपयेषु दिनेषु'** इति तु रमणीयम् ।

'दिनेषु' इति सप्तम्यन्तं पदम् । तच्च विशेष्यम् । तस्य विशेषणभूतं 'कति' इत्येतत् पदं प्रथमान्तम् अस्ति । तस्मादपि सप्तमीविभक्तिः स्यादेव । अतः **'कतिषुचित्'** इति सप्तम्यन्तं रूपम् एव अत्र सङ्गच्छते । कतिचित् इत्यत्र पदद्वयम् - कतिशब्दः चित् चेति । कतिशब्दः बहुवचनान्तः, सप्तसु विभक्तिषु रूपभेदं प्राप्नोति च । चित् तु अव्ययम् । कतिशब्देन तस्य अनुप्रयोगः । अनुप्रयोगमात्रेण चित् इत्यस्य इव कतिशब्दस्य अपि न अव्ययत्वम् ।

०९. **कतिचनदिनानन्तरं** सः उद्योगं प्राप्तवान् ।

'कतिचनदिनानन्तरम्' इति समासः दुष्टः । **'कतीनाञ्चन दिनानाम् अनन्तरम्'** इति प्रयोगः करणीयः ।

चनशब्दः क्वापि समासम् अनुप्रविशन् न दृष्टः । चिच्चनौ सर्वत्र पृथक्पदे भवतः । अतः अत्र कृतः समासः अनुचितः । व्यस्तप्रयोगः करणीयः । कतिशब्दात् दिनशब्दात् च षष्ठीविभक्तिः योजनीया । **'कतिपयदिनानन्तरम्'** इति प्रयोगः पूर्वोक्ते स्थले युज्यतेतराम् ।

१०. **केषाञ्चित् दिनानन्तरं** सः नगरात् प्रत्यागतः ।

'केषाञ्चित् दिनानन्तरम्' इति प्रयोगः अनुचितः । **'केषाञ्चित् दिनानाम् अनन्तरम्'** इति प्रयोगः कर्तव्यः ।

दिनानन्तरयोः अत्र समासः कृतः । स च तत्पुरुषः । 'केषाञ्चित्'

इत्येतस्य अन्वयः दिनपदेन इष्यते । तस्य समासे एकदेशभूतत्वात् तत्र अन्वयः न सम्भवति । तस्मात् व्यस्तप्रयोगः एव - 'केषाञ्चित् दिनानाम् अनन्तरम्' इति ।

११. लोकहितं **मम** करणीयम् ।

**'मम करणीयम्'** इति प्रयोगः न अशास्त्रीयः ।

'तव्यत्'प्रत्ययः कृत्येषु अन्यतमः । *'कृत्यानां कर्तरि वा' (२.३.७१)* इति सूत्रेण कर्तुः षष्ठी विहिता विकल्पेन । अतः 'मम करणीयम्' इति वाक्यम् । षष्ठ्यभावे तु तृतीया स्यात् एव । अतः **'मया करणीयम्' 'मम करणीयम्'** इति उभयम् अपि शुद्धम् एव ।

१२. आचार्य ! **आशीः** प्रार्थये ।

'आशीः प्रार्थये' इति वाक्यं दोषाय । **'आशिषं प्रार्थये'** इति प्रयोक्तव्यम् ।

'आशिस्'शब्दः सकारान्तः स्त्रीलिङ्गः । एतस्मात् द्वितीयैकवचने कृते 'आशिषम्' इति, बहुवचने कृते 'आशिषः' इति च रूपम् । ईकारान्तभ्रमेण, 'आशीःकामयिता' इत्यादौ समासे 'आशीः' इति दर्शनात् च 'आशीः' इति द्विवचनान्तः इति भ्रान्त्या प्रयोगः क्रियते कैश्चित् ।

१३. अहम् अद्य **मित्रं** गृहम् **आहूतवान्** अस्मि ।

'मित्रं गृहम् आहूतवान्' इति वाक्यं दोषाय । **'मित्रं गृहं प्रति आहूतवान्'** इति प्रयोगः वरम् ।

आह्वयतिः न हि द्विकर्मकः । एतस्मिन् वाक्ये तु मित्रं गृहं चेति कर्मद्वयं प्रयुक्तम् अस्ति । अतः दोषः । 'प्रति'शब्दस्य निवेशात् तु प्रतियोगे द्वितीया भवति इति गृहशब्दात् द्वितीया साधुः भवति ।

आह्वयतेः स्थाने निमन्त्रयतेः उपयोगः अपि वरं स्यात् ।

१४. सः मित्रं **नगरं प्रेषयित्वा** आगतवान् ।

**'नगरं प्रति प्रेषयित्वा'** इति प्रयोक्तव्यम् ।

'प्रेषृ'धातुः सकर्मकमात्रं, न तु द्विकर्मकः । अत्र वाक्ये तु मित्रशब्दः नगरशब्दः च कर्मत्वेन प्रयुक्तः । सकर्मकमात्रस्य कर्मद्वयं भवितुं न अर्हति अण्यन्तावस्थायाम् । अतः नगरशब्दोत्तरं 'प्रति'शब्दः प्रयोक्तव्यः । 'प्रति'योगे द्वितीया । अतः नगरशब्दोत्तरं श्रूयमाणा

द्वितीया उपपन्ना भवति । अन्यथा सकर्मकमात्रस्य धातोः द्विकर्मकत्वेन प्रयोगः अनुपपन्नः एव स्यात् ।

१५. माता **शिशवे** क्षीरं पाययति ।

'शिशवे पाययति' इति प्रयोगः दोषाय । **'शिशुं क्षीरं पाययति'** इति प्रयोक्तव्यम् ।

*'गतिबुद्धि....' (१.४.५२)* इति सूत्रेण अण्यन्तस्य कर्तुः कर्मसंज्ञा विहिता । अतः 'शिशुम्' इति द्वितीयान्तं प्रयोक्तव्यम् ।

शिशुः क्षीरं पिबति । पिबति इति अण्यन्तोपेतं क्रियापदम् । पानक्रियायाः कर्ता तु शिशुः । अतः एतस्य 'अण्यन्तकर्ता' इति व्यवहारः । 'माता शिशुं क्षीरं पाययति' इत्यत्र पाययति इत्येतत् ण्यन्तोपेतं क्रियापदम् । ण्यन्तस्य प्रयोगे अण्यन्तस्य कर्तुः (शिशोः) कर्मसंज्ञा । अतः 'शिशुं क्षीरं पाययति' इति प्रयोगः ।

एवमेव गत्यर्थकानां, बुद्ध्यर्थकानां, प्रत्यवसानार्थकानां, शब्दकर्मणाम्, अकर्मकाणां च धातूनां विषये व्यवस्था ज्ञेया । (प्रत्यवसानं नाम भक्षणम्) एकैकम्[1] उदाहरणं यथा -

१. गत्यर्थकम् - पिता पुत्रं विद्यालयं गमयति ।
२. बुद्ध्यर्थकम् - अध्यापकः शिष्यं व्याकरणं बोधयति ।
३. प्रत्यवसानार्थकम् - माता शिशुं क्षीरं पाययति ।
४. शब्दकर्मकम् - अध्यापिका शिष्यां गीतं गापयति ।
५. अकर्मकम् - माता शिशुं शाययति ।

१६. गुरुः **शिष्याय** व्याकरणं बोधयति ।

गुरुः **शिष्याय** वेदं पाठयति ।

'शिष्याय व्याकरणं बोधयति' 'शिष्याय वेदं पाठयति' इति वाक्यद्वयम् अपि असाधु । **'शिष्यं** व्याकरणं बोधयति' **'शिष्यं** वेदं पाठयति' इति प्रयोक्तव्यम् ।

प्रथमवाक्ये बुद्ध्यर्थकधातोः, द्वितीयवाक्ये शब्दकर्मकधातोः च सद्भावात् *'गतिबुद्धि...'* इति सूत्रेण अण्यन्तकर्तुः (शिष्यस्य) कर्मसंज्ञा । तस्मात् 'शिष्यम्' इति द्वितीयान्तं प्रयोक्तव्यम् ।

---

१. णिजन्तसम्बद्धानां सर्वेषां नियमानां ज्ञानाय 'णत्वणिजन्त'पुस्तकं द्रष्टव्यम् । 'कारक'नामके पुस्तके तु विषयमेतम् अधिकृत्य शास्त्रीयं विवरणं प्रदत्तम् अस्ति ।

१७. कलाकारः **प्रेक्षकेभ्यः** चित्रं **दर्शयति** ।

**'प्रेक्षकेभ्यः दर्शयति'** इति प्रयोगः न दोषाय ।

*'दृशेश्च'* इति वार्तिकेन दर्शयतेः प्रयोगे कर्मसंज्ञा विहिता । कौमुद्याः उदाहरणं तु - 'गुरुः भक्तान् हरिं दर्शयति' इति ।

किन्तु लोके अण्यन्तकर्तुः चतुर्थी अपि दृश्यते । शिष्टप्रयोगाः अपि चतुर्थ्यन्तपदयुक्ताः बहुधा दृश्यन्ते । अतः अण्यन्तकर्तुः चतुर्थी न दुष्यति ।

शिष्टप्रयोगाः यथा -

☛ तत्तद्भूमिपतिः **पत्न्यै** दर्शयन् प्रियदर्शनः ।

- रघुवंशे - १.४७

☛ धनुर्दर्शय **रामाय** इति होवाच पार्थिवम् ।

- रामायणे - १.६७.१

☛ दर्शयामास **पार्थाय** परमं रूपमैश्वरम् ।

- भगवद्गीतासु - ११.९

१८. वत्से ! **बालाय** अन्नं **खादय** ।

'बालाय अन्नं खादय' इति वाक्यम् अशुद्धम् । **'बालेन अन्नं खादय'** इति वक्तव्यम् ।

ण्यन्ते *'गतिबुद्धि....'* इत्यादिना अण्यन्तकर्तुः यत् कर्मत्वं प्राप्तं तत् निषिद्धम् *'आदिखाद्योः न'* इति वार्तिकेन । अतः 'बालम् अन्नं खादय' इत्यपि न भवति । बालात् चतुर्थी तु कुत्रापि न दृष्टपूर्वा । अतः सा हेया एव । 'बालेन' इति तृतीया एव प्रयोक्तव्या ।

१९. भवान् **माम्** एतं विषयं श्वः **स्मारयतु** कृपया ।

**'मां स्मारयतु'** इति प्रयोगः न दोषाय ।

*'गतिबुद्धि.....'* इति सूत्रेण बुद्ध्यर्थकानां प्रयोगे अण्यन्तकर्तुः कर्मसंज्ञा विहिता । (ततः द्वितीया) कौमुद्याः पङ्क्तिरस्ति - ''सूत्रे ज्ञान-सामान्यार्थानामेव ग्रहणं, न तु तद्विशेषार्थानाम् इत्यनेन ( *'दृशेश्च'* इति वार्तिकस्य कथनात्) ज्ञाप्यते । तेन स्मारयतिजिघ्रत्यादीनां न । स्मारयति घ्रापयति वा देवदत्तेन'' इति ।

एतस्य पठनात् स्मारयतेः प्रयोगे अण्यन्तकर्तुः तृतीया एव इति भासते । एतद्विषये तत्त्वबोधिनीकारः लिखति - ''आध्यानार्थकस्यैव स्मरतेः,

न चिन्तार्थकस्य । 'स्मारयत्येनं वनगुल्म' इत्यत्र तु 'णेरणौ....' इति सूत्रे भाष्ये प्रयोगादेव कर्मत्वं बोध्यम्'' इति ।

इदं तु तात्पर्यम् - 'स्मृ'धातुद्वयम् अस्ति । एकः आध्यानार्थकः । (आध्यानं नाम उत्कण्ठापूर्वकं स्मरणम् ।) अपरः चिन्तार्थकः । तत्र आध्यानार्थकस्य स्मृधातोः प्रयोगे अण्यन्तकर्तुः तृतीया । चिन्तार्थकस्य स्मृधातोः प्रयोगे अण्यन्तकर्तुः द्वितीया, कर्मसंज्ञायाः सद्भावात् ।

देवदत्तः प्रियां स्मरति । अत्र आध्यानार्थकता अस्ति । (प्रिया खलु सा ! अतः उत्कण्ठापूर्वकं स्मरणम्) अतः 'यज्ञदत्तः देवदत्तेन प्रियां स्मारयति' इति अण्यन्तकर्तुः देवदत्तात् तृतीया । रामः विषयं स्मरति । अत्र न आध्यानम् । स्मरणमात्रम् अस्ति अत्र । अतः 'पिता रामं विषयं स्मारयति' इति अण्यन्तकर्तुः कर्मता, ततः द्वितीया च ।

२०. तेन ग्रामे कानिचन दिनानि **उषितानि** ।

'उषितानि' इति बहुवचनप्रयोगः असाधुः । **'उषितम्'** इति एकवचन-प्रयोगः स्यात् ।

वसधातुः अकर्मकः । अतः तस्य क्तप्रत्ययः भावे । भावार्थे क्तप्रत्यये कृते औत्सर्गिकम् एकवचनं नपुंसकता च प्राप्यते । बहुवचनस्य कथमपि न प्रसक्तिः । अतः 'तेन उषितम्' इति प्रयोगः एव शुद्धः ।

'कानिचन दिनानि' इत्यस्य बहुवचनान्ततां दृष्ट्वा प्रयोक्त्रा 'उषितानि' इति बहुवचनान्तप्रयोगः कृतः स्यात् । किन्तु कालवाचिनः द्वितीयान्त-पदस्य क्रियापदस्य च न कोऽपि वचनसम्बन्धः । (कर्मणिप्रयोगे तु फलाश्रयस्य कर्मणः क्रियापदगतायाः संख्यायाः च सम्बन्धः भवति ।) अतः अत्यन्तसंयोगद्योतकं कालवाचि द्वितीयान्तं पदं बहुवचनान्तं चेदपि क्रियापदम् एकवचनान्तम् एव भवति भावेप्रयोगे ।

२१. यदि सन्देहः तर्हि **मां प्रष्टव्यम् आसीत्** ।

'मां प्रष्टव्यम् आसीत्' इति वाक्यरचना दोषयुक्ता । **'अहं प्रष्टव्यः आसम्'** इति प्रयोगः उचितः ।

ज्ञीप्सार्थकः प्रच्छधातुः सकर्मकः । तस्मात् तव्यत्प्रत्ययः कर्मार्थे । सः कर्म अभिधत्ते । एवं तव्यता अभिधानात् कर्मणः प्रथमाविभक्तिः स्यात् । अस्मच्छब्दस्य प्रथमैकवचनान्तं रूपम् 'अहम्' इति । तस्य पुंस्त्वात् प्रष्टव्यशब्दस्यापि पुंस्त्वम् । (यदि स्त्री वक्त्री स्यात् तर्हि

'प्रष्टव्या' इति रूपम् ।) अस्मच्छब्दयोगे उत्तमपुरुषता स्यात् । अतः 'अहं प्रष्टव्यः आसम्' इति वाक्यं प्रयोक्तव्यम् । प्रादेशिकभाषायाः प्रभावस्य कारणतः केचन साधुत्वासाधुत्वादिकम् अविचिन्त्य 'मां प्रष्टव्यम् आसीत्' इति वदन्ति । पदपदार्थसम्बन्धादिकं प्रायः न चिन्तयन्ति ते ।

२२. इन्द्रः **वरम्** अनुगृह्णाति ।

'वरम् अनुगृह्णाति' इति दोषाय । **'वरेण अनुगृह्णाति'** इति प्रयोक्तव्यम् । भक्तः प्रार्थयते । इन्द्रः भक्तम् अनुगृह्णाति । अनुग्रहक्रियायाः कर्म भक्तः, न तु वरः । ग्रहधातोः द्विकर्मकत्वं तु नास्ति । अतः वरस्य न कर्मत्वम्, अपि तु करणत्वम् । करणे तृतीया । अतः 'वरेण अनुगृह्णाति' इति प्रयोक्तव्यम् ।

२३. एतानि वाक्यानि **संस्कृतभाषायाम्** अनुवदत ।

**'संस्कृतभाषया** अनुवदत' इति प्रयोक्तव्यम् ।

अनुवादकार्ये भाषायाः करणत्वम्, न तु अधिकरणत्वम् । अतः 'संस्कृतभाषया अनुवदत' इति वाक्यरचना एव साध्वी ।

२४. **लोकयाने** विद्यालयं गच्छामि, **त्रिचक्रिकायां** वा गच्छामि ।

**'लोकयानेन' 'त्रिचक्रिकया'** इति तृतीयान्तं पदं प्रयोक्तव्यम् । गमनक्रियायां यानं साधनं भवति । अतः यानात् तृतीया । शिष्टाः यानस्य अधिकरणत्वम् उक्तवन्तः न दृश्यन्ते कुत्रापि अस्मिन्नर्थे ।

२५. **मह्यं** महती शिरोवेदना ।

**'मम** महती शिरोवेदना' इति प्रयोक्तव्यम् ।

शिरोवेदना मत्सम्बन्धिनी । अत्र सम्प्रदानस्य निमित्तस्य वा न कोऽपि अवसरः, येन चतुर्थी प्रयुज्येत । अतः 'मम शिरोवेदना' इत्येव प्रयोक्तव्यम् । 'मम' इति षष्ठ्यन्तं पदं सम्बन्धं द्योतयति ।

एवमेव 'मम दुःखम्' 'मम सुखम्' 'मम सन्तोषः' इत्यादयः प्रयोगाः ।

**'शिरोवेदना मां बाधते'** इति भङ्ग्यन्तरेण अपि एतस्य वाक्यस्य आशयः प्रकटयितुं शक्यः ।

२६. एतत् चलचित्रं **मह्यं** नितरां प्रियम् ।

'मह्यं प्रियम्' इति प्रयोगः न युक्तः । **'मम प्रियम्'** इति प्रयोक्तव्यम् । प्रियशब्दः कप्रत्ययान्तः । *'इगुपधज्ञाप्रीकिरः कः'* (३.१.१३५)

इति सूत्रेण 'क'प्रत्ययः कर्त्रर्थे । कप्रत्ययः कृत् । अतः *'कर्तृकर्मणोः कृति'* (२.३.६५) इति सूत्रेण षष्ठी स्यात् । चतुर्थ्याः तु न अवसरः अत्र ।

२७. मम **मरणस्य भीतिः** सर्वथा नास्ति ।
**'मरणात् भीतिः'** इति प्रयोगः उचितः ।
*'भीत्रार्थानां भयहेतुः'* (१.४.२५) इति सूत्रेण भयहेतोः अपादानं विहितम् । मरणम् एव अत्र भयहेतुः । तस्मात्, 'मरण'शब्दात् पञ्चमी स्यात् । अतः मरणात् भीतिः इति प्रयोगः ।
'मरणसम्बन्धिनी भीतिः' इति व्याख्याय समाधानं तु अगतिकगत्या ।

२८. **सप्ताहत्रयात् प्रवृत्तः** प्रशिक्षणवर्गः अद्य समाप्यते ।
**'सप्ताहत्रयं प्रवृत्तः'** इति प्रयोक्तव्यम् ।
वर्गः अतीते सप्ताहत्रये प्रतिदिनम् अपि आसीत् एव । अतः सप्ताह-त्रयशब्दस्य *'कालाध्वनोरत्यन्तसंयोगे'* (२.३.५) इति सूत्रेण द्वितीया अत्यन्तसंयोगत्वात् ।

२९. **दशवादनात् अनन्तरं** सः गृहे न भवति ।
**'दशवादनात् अनन्तरम्'** इति प्रयोगः न दोषाय ।
अनन्तरशब्दयोगे पञ्चमी प्राचीनैः बहुधा प्रयुक्ता एव । तद्यथा -

- पुराणपत्रापगमात् अनन्तरम्
  - कालिदासः (रघु.३.७)
- अथातो धर्मजिज्ञासा वेदाध्ययनात् अनन्तरम् ।
  - आचार्याः
- नीलादनन्तरश्चैत्रः .......
  - भा० भीष्म० ५६.१३
- तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थे दृष्टः ।
  - शाबरभाष्ये प्रथमसूत्रे

३०. पितुः **उत्थानस्य अनन्तरं** पुत्रः उत्तिष्ठति ।
**'उत्थानस्य अनन्तरम्'** इति प्रयोगः अपि न दोषाय ।
अनन्तरशब्दयोगे षष्ठी अपि प्रयुज्यते बहुधा ।
सम्बन्धमात्रे षष्ठी । भाष्ये अपि प्रयोगः - 'तस्य अनन्तरम्' इति ।
अन्ये प्रयोगाः यथा -

- सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।

- भा० शां० २५.२३

- सर्गशेषप्रणयनात् विश्वयोनेरनन्तरम् ।

- कुमारसम्भवे ६.९

'दुर्जनं प्रथमं वन्दे सज्जनं **तदनन्तरम्'** इत्यादिप्रयोगदर्शनात् समासोऽपि भवति । अतः अनन्तरशब्दयोगे त्रिधा गतिः -

१. पञ्चमी - तस्मात् अनन्तरम्

२. षष्ठी - तस्य अनन्तरम्

३. समासः - तदनन्तरम्

**३१.** सः मां **मूर्खमिति** भावयति ।

'मूर्खमिति' इति प्रयोगः असाधुः । **'मूर्खः इति'** इति प्रयोक्तव्यम् । 'इति' इति कश्चन निपातः । सः कर्म अभिधत्ते । एवं निपातेन कर्मणः अभिधानात् 'मूर्ख'शब्दात् प्रथमा । *'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः'* इति वामनस्य उक्तिः अत्र प्रमाणम् । 'क्रमादमुं नारद इत्यबोधि सः' इति माघस्य प्रयोगोऽपि प्रसिद्धः ।

**३२.** १) **तं पण्डितं** भावयन्ति ते ।

२) **'सः पण्डितः'** इति भावयन्ति ते ।

३) **तं 'पण्डितः'** इति भावयन्ति ते ।

एतानि त्रिविधानि अपि वाक्यानि साधूनि एव । प्रथमे वाक्ये तच्छब्द-पण्डितशब्दाभ्यां परा द्वितीया, 'इति' शब्दः नास्ति । द्वितीये वाक्ये तच्छब्द-पण्डितशब्दाभ्यां परा प्रथमा, 'इति'शब्दप्रयोगश्च । तृतीये तच्छब्दात् द्वितीया, पण्डितशब्दात् प्रथमा, इतिशब्दप्रयोगश्च । प्रथमवाक्यस्य विषये नाधिकं किमपि वक्तव्यम् अस्ति । द्वितीये वाक्ये 'इति'शब्देन 'सः पण्डितः' इत्येतावान् भागः परामृष्टः । अतः उभयतः अपि प्रथमा । तृतीये वाक्ये 'पण्डित'शब्दमात्रं सङ्गृहीतम् 'इति'-शब्देन । अतः पण्डितशब्दात् प्रथमा । तच्छब्दात् तु द्वितीया एव ।

**३३.** यः मृतः इति **विभावितः** सः जीवति ।

**'विभावितम्'** इति प्रयोक्तव्यम् ।

भावितम् इत्यत्र यद्यपि कर्मणि क्तप्रत्ययः, तथापि कर्मभूतस्य 'इति'पदस्य अव्ययत्वात् 'भावित'पदस्य औत्सर्गिकम् एकवचनं नपुंसकत्वं च ।

प्रयोक्त्रा तु 'मृत'शब्दस्य 'भावित'शब्दस्य च सम्बन्धं कल्पयता पुंस्त्वं प्रयुक्तम् । किन्तु तयोः न विशेषणविशेष्यसम्बन्धः । अतः 'भावित'पदस्य नपुंसकत्वम् एव ।

एतादृशानि अन्यानि उदाहरणानि यथा -

| अशुद्धम् (✗) | शुद्धम् (✓) |
|---|---|
| 'सेवा करणीया' इति तेन उक्ता । | 'सेवा करणीया' इति तेन उक्तम् । |
| 'पाठः करणीयः' इति तेन स्मृतः । | 'पाठः करणीयः' इति तेन स्मृतम् । |
| 'वृक्षः कर्तनीयः' इति तेन चिन्तितः । | 'वृक्षः कर्तनीयः' इति तेन चिन्तितम् । |

**३४. छात्रान् अध्यापकान् इत्यादीन्** आह्वय ।

**'छात्राः अध्यापकाः इत्यादीन्** आह्वय' इति प्रयोक्तव्यम् ।

इत्यादिशब्देन ये गृह्यन्ते ते प्रथमाविभक्त्यन्तेन बोध्याः भवेयुः, न तु द्वितीयाद्यन्तेन । अपेक्षिता विभक्तिः तु इत्यादिशब्दोत्तरं योजनीया ।

अधोनिर्दिष्टानि वाक्यानि परिशीलयत -

| अशुद्धम् (✗) | शुद्धम् (✓) |
|---|---|
| रामं कृष्णम् *इत्यादीन् आह्वय । | रामः कृष्णः इत्यादीन् आह्वय । |
| रामेण कृष्णेन इत्यादिभिः कृतम् । | रामः कृष्णः इत्यादिभिः कृतम् । |
| रामाय कृष्णाय इत्यादिभ्यः देहि । | रामः कृष्णः इत्यादिभ्यः देहि । |
| रामात् कृष्णात् इत्यादिभ्यः आनय । | रामः कृष्णः इत्यादिभ्यः आनय । |
| तत् रामस्य कृष्णस्य इत्यादीनां गृहे अस्ति । | तत् रामः कृष्णः इत्यादीनां गृहे अस्ति । |
| रामे कृष्णे इत्यादिषु मम स्नेहः । | रामः कृष्णः इत्यादिषु मम स्नेहः । |

एतेषु वाक्येषु इत्यादिशब्दं परिहृत्य 'प्रभृति'शब्दप्रयोगपुरस्सरं समासेन

---

* इत्यादयः ये सन्ति तान् इत्यर्थः । 'इत्यादिभिः' इत्यत्र 'इत्यादयः ये सन्ति तैः' इत्यर्थः । एवमेव इतरत्रापि ।

'रामकृष्णप्रभृतीन्' 'रामकृष्णप्रभृतिभिः' इत्येवमादिरूपेण वाक्य-विन्यासः अपि कर्तुं शक्यः ।

**३५.** आरक्षकाः चोरस्य **हस्ते निगडं बद्धवन्तः ।**

**'चोरस्य हस्तं निगडेन बद्धवन्तः'** इति वाक्यप्रयोगः उचितः । आरक्षकाः बन्धनकर्तारः । चोरस्य हस्तः कर्म । अतः कर्मणः द्वितीया स्यात् । निगडः अत्र साधनम् । साधनात् तृतीया स्यात् । अतः **'हस्तं निगडेन बद्धवन्तः'** इति वाक्यं साधु ।

यदि चोरस्यैव कर्मत्वम् इष्यते (न तु हस्तस्य) तदा तु - **'आरक्षकाः चोरं हस्ते निगडेन बद्धवन्तः'** इति प्रयोगः स्यात् । बन्धनविषयीभूतस्य अङ्गस्य सप्तमी प्रयुज्यते शिष्टैः । यथा - केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् इति ।

'निगडं बद्धवन्तः' इति प्रयोगः न युक्तः । निगडस्य कर्मता वक्तुः न अभिप्रेता । प्रादेशिकभाषासु या आनुपूर्वी दृश्यते तद्बलात् एतादृशानि वाक्यानि प्रयुज्यन्ते कैश्चित् पदपदार्थसम्बन्धम् अचिन्तयद्भिः ।

**३६.** वटुः **शिखां बध्नाति ।**

अयं प्रयोगः साधुः एव । शिथिलाः केशाः बध्यन्ते तेन । अत्र बन्धनं नाम आरचनम् । पूर्ववाक्ये अपि बध्नातिः एव प्रयुक्तः, तथापि तत्र तस्य यः अर्थः स एव नार्थः अत्र ।

**३७.** सः मित्रस्य हस्ते **रक्षां बध्नाति ।**

अयम् अपि प्रयोगः साधुः एव । बन्धनक्रियायां रक्षायाः साधनत्वं (निगडेन हस्तं बध्नाति इत्येतस्मिन् वाक्ये इव) स्यात् खलु इति भ्रमः मास्तु । अत्र बध्नातेः धारणम् अर्थः । धारणक्रियायां रक्षायाः कर्मत्वम् एव ।

**३८.** कर्मकरः **ग्रन्थिं बध्नाति ।**

अयम् अपि प्रयोगः साधुः एव । 'ग्रन्थिं बध्नाति' इति प्रयोगः बहुधा श्रूयते लोके । अत्र बध्नातेः रचनम् अर्थः । रचनक्रियायां ग्रन्थेः कर्मत्वम् ।

**३९.** बालः स्तम्भे **रज्जुं बध्नाति ।**

अयम् अपि प्रयोगः साधुः । यद्यपि अत्र 'बन्ध'धातोः एव प्रयोगः

अस्ति, रज्जोः उपयोगः अपि अस्ति, तथापि रज्ज्वाः न तृतीया । तत्र कारणं तु धातोः अर्थः । अत्र बन्धनं नाम एकदेशे योजनम् । तस्यां क्रियायां रज्जोः एव कर्मत्वम् ।

एवं 'बन्ध'धातोः प्रयोगाः विविधेषु अर्थेषु सम्भवन्ति । अतः अर्थं विविच्य कस्य पदस्य कर्मत्वं, कस्य साधनत्वम् इत्यादयः अंशाः निर्णेतव्याः ।

४०. राजा **हस्ते** खड्गं गृहीतवान् ।

'हस्ते' इति सप्तमी अस्थाने । **'हस्तेन'** इति प्रयोक्तव्यम् ।

अत्र ग्रहणक्रिया उच्यते । ग्रहणकर्मीभूतः अस्ति खड्गः । अतः तस्मात् द्वितीया । ग्रहणक्रियायां हस्तः भवति साधनम् । तदेव करणम् । तस्मात् तृतीया भवेत् *'कर्तृकरणयोः तृतीया'* इति सूत्रेण । करणवाचकस्य अधिकरणत्वं न सिध्यति । तस्मात् सप्तमी अस्थाने ।

ग्रहणानन्तरं खड्गः हस्ते तिष्ठति इति तु सत्यम् । अतः खड्गस्य हस्ते स्थितिः यदा उच्येत तदा सप्तमी सूपपन्ना स्यात् । प्रकृतवाक्ये तु ग्रहणक्रिया कथनविषयः । तदवसरे हस्तस्य करणत्वम् एव । तस्मात् तृतीया एव युक्ता, न तु सप्तमी ।

४१. **अनुजः** तथा **पित्रा सह** सः गतवान् ।

**'अनुजेन पित्रा च सह'** सः गतवान् इति वक्तव्यम् ।

'सः' प्रधानकर्ता । अप्रधानकर्ता पिता । अतः अस्मात् तृतीया *'सहयुक्ते अप्रधाने' (२.३.१९)* इति सूत्रेण । अनुजः अपि अप्रधानकर्ता । अतः तस्मादपि तृतीया स्यादेव । उभयोः समुच्चयबोधनाय चकार-प्रयोगः एव वरम् ।

४२. अत्र अव्यवस्थायाः **लेशमात्रम्** अपि अवकाशः नास्ति ।

**'लेशमात्रेण'** इति प्रयोक्तव्यम् ।

'लेशमात्रम्' इति प्रथमान्तं पदम् । अवकाशः अपि प्रथमान्तम् । तयोः विशेषणविशेष्यभावः वक्तव्यः भवेत् । किन्तु स च तयोः न घटते । तन्नाम लेशमात्रम् इत्यस्य 'नास्ति' इत्यत्र अन्वयः । अतः लेशमात्रपदात् तृतीया स्यात् । अतः 'लेशमात्रेण अपि अवकाशः नास्ति' इति वाक्यस्य आनुपूर्वी स्यात् ।

४३. पुरुषाणां **कृते** अत्र प्रवेशः निषिद्धः ।
एतस्मिन् वाक्ये 'कृते' इति पदं परिहरणीयम् ।
निषिद्धः तु प्रवेशः । सः केषाम् इति जिज्ञासायां 'पुरुषाणाम्' इति उत्तरम् । उत्तरं षष्ठ्यन्तेन। एवं षष्ट्यन्तस्य 'पुरुषाणाम्' इत्यस्य 'प्रवेशः' इत्यत्र अन्वयः । तयोः मध्ये 'कृते' इत्यस्य निवेशस्य न आवश्यकता । 'कृते' इत्यस्य निमित्तार्थकता । निमित्तार्थस्य न कापि प्रसक्तिः अत्र । अतः तस्य परिहारः एव युज्यते ।
'पुरुषाणां प्रवेशः निषिद्धः' इत्येषा ('कृते'रहिता) आनुपूर्वी एव अपेक्षितम् अर्थं गमयितुं समर्था अस्ति ।

४४. सः **सुमहत्** उपकारं कृतवान् ।
'महत्' इति रूपम् अत्र असाधु । **'सुमहान्तम्'** इति प्रयोक्तव्यम् । उपकारः पुंसि । तद्विशेषणं महच्छब्दः अपि पुंसि एव स्यात् । उपकारशब्दस्य द्वितीयान्तत्वात् महच्छब्दः अपि द्वितीयान्ततया प्रयोक्तव्यः । तदा 'महान्तम्' इति रूपम् । उपकारशब्दः नपुंसके इति मत्वा भ्रान्त्या नपुंसकलिङ्गविशिष्टं विशेषणं प्रयुक्तं स्यादत्र ।

४५. एषः **महान्** सन्तोषस्य विषयः ।
**'महतः'** इति प्रयोक्तव्यम् ।
सन्तोषः अत्र षष्ट्यन्तत्वेन प्रयुक्तः । तद्विशेषणं महच्छब्दः अपि षष्ट्यन्तः एव खलु स्यात् ? अतः 'महतः' इति प्रयोगः साधुः । प्रथमान्तस्य 'महान्' इत्यस्य 'विषये' अन्वयः वक्तुं शक्यः । तदा 'महान् विषयः' इति वाक्यविन्यासः भवेत् । किन्तु वक्तुः आशयः तु महत्त्वं 'सन्तोषे' भवेत् इति, न 'विषये' । सन्तोषस्य आधिक्यं प्रतिपादयितुम् इच्छति सः । तस्मात् 'सन्तोषे' एव तस्य अन्वयः भवेत् । ततः षष्ट्यन्तता एव साधु ।

४६. **भूषणभ्रात** । अत्र आगच्छ ।
'भूषणभ्रात' इति सम्बोधनम् अयुक्तम् । **'भूषणभ्रातः !'** इति सम्बोधनीयम् ।
भूषणः इति भ्राता भूषणभ्राता । तस्य सम्बुद्ध्यन्तं रूपं 'भूषणभ्रातः' इति । ऋकारान्तस्य सम्बोधने विसर्गस्य श्रवणम् । 'भ्रातः', 'मातः', 'पितः' इत्यादीनि उदाहरणानि ।

वस्तुतः तु 'भ्रातः ! भूषण !' इति व्यस्तः प्रयोगः एव शोभते ।

४७. **अन्नदाता** सुखी भव ।

**'अन्नदातः'** इति प्रयोगः वरम् ।

अन्नदातारम् उद्दिश्य उच्यमानं वचनम् एतत् । अतः 'अन्नदातृ'शब्दस्य सम्बोधनम् अत्र प्रयोक्तव्यम् । अन्नदातृशब्दस्य सम्बोधनरूपम् 'अन्नदातः' इति । विसर्गः तत्र श्रूयते ।

लौकिकाः संस्कृतम् अजानानाः (संस्कृतं किञ्चित् जानन्तः अपि शब्दरूपाणि, प्रक्रियां वा अजानानाः ) एतादृशान् प्रयोगान् कुर्वन्ति । यदि 'अन्नदाता सुखी भव' इत्येतदपि समर्थनीयम् एव इति तीव्रेच्छा तर्हि - 'अन्नस्य दानकर्ता त्वं सुखी भव' व्याख्यानेन सन्तुष्यताम् ।

४८. शिवरामः **स्नातककक्ष्यायाम्** उत्तीर्णः ।

**'स्नातककक्ष्याम्'** इति प्रयोगः प्रशस्ततरः ।

'उत्तीर्णः' इत्यत्र उदुपसर्गपूर्वकात् तरणार्थकात् तॄधातोः क्तप्रत्ययः । उदुपसर्गपूर्वकः तरतिः सकर्मकः । तस्य कर्म भवति कक्ष्या* । अतः कक्ष्यायाः द्वितीया एव स्यात् । यदि सप्तमी प्रयुज्येत तर्हि कक्ष्यायाः अधिकरणता एव स्यात् । तदानीं कर्मत्वम् अन्यस्य स्यात् । वक्त्रा तु कक्ष्यायाः एव उत्तरणम् इष्यते । अतः 'कक्ष्याम्' इति द्वितीया एव साध्वी । यदि कक्ष्यायाः अधिकरणता एव इष्यते तर्हि **'स्नातक-कक्ष्यायाम् उत्तीर्णता प्राप्ता अस्ति'** इति उच्यताम् ।

अथवा **'शिवरामः स्नातकपदवीं प्राप्तवान् अस्ति'** इति वा उच्यताम् ।

४९. बालकः चित्रे **वर्णं** लिम्पति ।

'वर्णम्' इति द्वितीया अयुक्ता । **'वर्णेन'** इति तृतीयान्तं प्रयोक्तव्यम् । लिम्पतेः प्रयोगे कर्ता बालकः । चित्रम् एव कर्म । कर्मणः द्वितीया । अतः 'बालकः चित्रं लिम्पति' इति वाक्यम् । लेपनक्रियायां वर्णस्य साधनत्वम् । तस्मात् तृतीया । अतः 'वर्णेन' इति तृतीयान्तपदस्य प्रयोगः साधुः ।

---

* 'कक्षा' इति यकाररहितं रूपम् अपि साधु एव । कोषः यथा - 'कक्षा त्विभरज्जौ काञ्च्यां गेहप्रकोष्ठके' - हेम० । 'कक्ष्या ..... हर्म्यादीनां प्रकोष्ठेऽपि'

- मेदिनी ।

५०. महान् वृक्षः **पर्वतशिखरात् अधः** अपतत् ।
**'पर्वतशिखरस्य अधः'** इति प्रयोगः साधुः ।
'अधः' इत्येतत् अव्ययम् । अधश्शब्दात् अस्तात्यर्थे 'असि'प्रत्ययः, अधादेशश्च । *'षष्ठ्यतसर्थप्रत्ययेन' (२.३.३०)* इति सूत्रेण पञ्चम्याः अपवादत्वेन षष्ठी । अतः 'पर्वतशिखरस्य अधः' इति प्रयोगः साधुः ।
'अत्र पतनम् उच्यते, अतः वियोगे अवधिभूतात् पञ्चमी साधुः' इति यदि उच्यते तर्हि 'पर्वतशिखरात् अपतत्' इति प्रयुज्यताम् । अधश्शब्दः निवार्यताम् । अधश्शब्दः यदि प्रयुज्यते तर्हि षष्ठी प्रयोक्तव्या एव ।

५१. भवतः **आगमनात् पञ्चभ्यः दिनेभ्यः पूर्वम्** एषा घटना घटिता ।
**'आगमनस्य पञ्चभ्यः दिनेभ्यः पूर्वम्'** इति प्रयोक्तव्यम् ।
'आगमन'शब्दोत्तरं पञ्चमी अस्थाने । पूर्वशब्दस्य दिग्वाचकत्वात् *'अन्यारादितरर्त ...' (२.३.२९)* इति सूत्रेण पञ्चमी । (दिशि दृष्टः शब्दः दिक्शब्दः इति उक्तत्वात् कालवाचिनः अपि दिग्वाचकत्व-व्यपदेशः ।) तस्मात् 'पञ्चभ्यः दिनेभ्यः' इति पञ्चमी साध्वी । 'पूर्व'शब्दस्य 'आगमन'शब्देन योगः तु नास्ति । अतः सम्बन्धार्थे षष्ठी । 'आगमनस्य' इति प्रयोगः ।
यदि अत्र पूर्वशब्दस्य योगः आगमनशब्देन इष्यते तदा तु 'पञ्चभ्यः दिनेभ्यः' इत्येतत् अनन्वितं तिष्ठेत् । अतः आगमनशब्देन योगो नास्ति पूर्वशब्दस्य । अतः तस्मात् अपि पञ्चमी न ।

५२. विद्या **प्राप्तजन्मनः मनुष्यस्य** मोक्षमार्गम् उपदिशति ।
'प्राप्तजन्मनः मनुष्यस्य' इति षष्ठी अस्थाने । **'प्राप्तजन्मानं मनुष्यम्'** इति द्वितीयान्तं प्रयोक्तव्यम् ।
उपदिशतिः द्विकर्मकः । संस्कृते द्विकर्मकाः परिगणिताः - *'दुह्याच्पच्-दण्ड्....'* इति श्लोकेन । तेषु वदतिः (ब्रू) अपि अन्तर्भूतः । श्लोके उक्ताः, तदर्थकाः च धातवः द्विकर्मकाः । मोक्षमार्गः एकं कर्म । मनुष्यः अपरं कर्म । तस्मात् मनुष्यात् द्वितीया । 'प्राप्तजन्मा' इत्येतत् मनुष्यस्य विशेषणम् । अतः तस्मादपि द्वितीया । अतः 'प्राप्तजन्मानं मनुष्यम्' इति द्वितीयान्तः प्रयोगः शुद्धः ।

५३. तिरुमलाम्बा**प्रभृतिनीनां** प्रशंसा सर्वैः क्रियते ।
'प्रभृतिनीनाम्' इति अपशब्दः । **'प्रभृतीनाम्'** इति प्रयोक्तव्यम् ।

प्रभृतिशब्दः अनव्ययम् अव्ययं चेति द्विधा । अव्ययस्य 'आरभ्य' इत्यर्थः । 'अद्यप्रभृत्यवनताङ्गि तवास्मि दासः' इति कालिदासप्रयोगः अत्र उदाहरणम् । अनव्ययस्य तदादयः अर्थाः । तच्च विशेषणम् । षष्ठीबहुवचने तु पुंसि स्त्रियां नपुंसके च समानं रूपम् 'प्रभृतीनाम्' इति । [*'नामि' (६.४.३)* इति सूत्रेण दीर्घः] प्रभृतिशब्दः न इन्नन्तः । तस्मात् स्त्रियां प्रभृतिनी इति रूपं (प्रथमैकवचने) न । षष्ठ्यां 'प्रभृतिनीनाम्' इति रूपम् अपि न ।

५४. रामः पितुः आदेशं **मस्तके** वहन् अरण्यं गतवान् ।

'मस्तके' इति सप्तम्यन्तम् अयुक्तम् । **'मस्तकेन'** इति तृतीयान्तं साधु ।

यानस्य करणत्वं भवति संस्कृते ।

एतद्विषये चारुदेवशास्त्रिणः वदन्ति -

*''न केवलं मुख्यं यानम्, अपि तु उपचरितयानभावाः अपि भावाः करणत्वेन व्यवह्रियन्ते, न च व्यभिचारं सहन्ते । 'स्कन्धेन भारं वहति' इत्यत्र स्कन्धे यानत्वाध्यारोपेण करणत्वमेव अभिप्रयन्ति, न कदाचित् अधिकरणत्वम् । तेन 'स्कन्धे भारं वहति' इति अपप्रयोगः''* इति ।

प्राचीनप्रयोगाः यथा -

❖ वहेदमित्रं **स्कन्धेन**....।

– पञ्चतन्त्रम्

❖ ...... हारम**ुरसा** दधानम् ।

– हर्षचरितम्

❖ **मौलिना** पाण्डुरमुष्णीषमुद्वहता .....।

– हर्षचरितम्

❖ गामधास्यत्कथं नागः मृणाल**मृदुभिः फणैः** ।

– कुमार॰ ६. ६८

❖ **अङ्केना**दाय वैदेहीं पपात भुवि रावणः ।

– रामायणम् – ६.५१.१९

एतेषु उदाहरणेषु ये तृतीयान्ताः ते वस्तुतः अधिकरणभूताः एव । तथापि करणत्वविवक्षा, तस्मात् तृतीया च । विषयेऽस्मिन् चारुदेव-

शास्त्रिणां वाक्यम् इत्थम् -

*''अत्रोदाहरणेषु गतिर्वा प्रापणं वा नार्थः, येन करणस्य अवकाशः स्यात् । धारणमेव तु सर्वत्र अभिप्रेयते । तेन अधिकरणत्वं प्राप्नोति । करणं चेह नितान्तमसत् । अधिकरणं च परमार्थसत् । तथापि करणत्वमेव विवक्षन्ति शिष्टाः''* इति ।

तस्मात् 'मस्तकेन वहन्' इति तृतीयान्तम् एव युक्तम् ।

५५. सन्धिः समासः **इत्यादिनाम्** अर्थः अध्यापकेन बोधितः ।

'इत्यादिनाम्' इति अपशब्दः । **'इत्यादीनाम्'** इति प्रयोक्तव्यम् । इत्यादिशब्दः इकारान्तः । स्वरान्तानां षष्ठीबहुवचने *'नामि'* *(६.४.३.)* इति सूत्रेण दीर्घः एव । अतः 'इत्यादीनाम्' इति रूपम् । [दकारोत्तरं दीर्घः (ईकारः)] हलन्तशब्दानां तु षष्ठीबहुवचने दीर्घस्य प्रसक्तिः नास्ति ।

५६. मया अरण्ये व्याघ्रः **चक्षुभ्यां** दृष्टः ।

'चक्षुभ्याम्' इति अपशब्दः । **'चक्षुर्भ्याम्'** इति प्रयोक्तव्यम् । चक्षुश्शब्दः सकारान्तः । द्वितीयाद्विवचने चक्षुस् + भ्याम् इति स्थिते हश्परत्वात् सकारस्य रुत्वे 'चक्षुर्भ्याम्' इति रूपम् । रेफस्य लोपस्य प्रसक्तिः तु नास्ति, येन चक्षुभ्याम् इति रेफरहितं रूपं प्राप्येत ।

५७. शाकुन्तलम् इंग्लीष् जर्मन् **इत्यादिभाषया** अनूदितम् अस्ति ।

'इत्यादिभाषया' इति एकवचनान्तप्रयोगः दुष्यति । **'इत्यादिभिः भाषाभिः'** इति बहुवचनान्तप्रयोगः एव वरम् ।

इंग्लीष्प्रभृतयः भाषाः सन्ति बह्व्यः । इत्यादिशब्देन ताः सर्वाः सङ्गृह्यन्ते । तस्मात् इत्यादिशब्दोत्तरं 'भाषाभिः' इति तृतीया-बहुवचनान्तं युक्तम् । अतः 'इत्यादिभिः भाषाभिः' इति बहुवचनान्त-प्रयोगः एव साधुः ।

५८. **कर्णाटकाङ्ग्लसंस्कृतभाषया वा** उत्तरं लिखत ।

**'कर्णाटकभाषया, आङ्ग्लभाषया संस्कृतभाषया वा'** इति वक्तुम् इच्छति वक्ता । तेन समासः कृतः - 'कर्णाटकाङ्ग्लसंस्कृत-भाषया' इति । कर्णाटकं च आंग्लं च संस्कृतं च कर्णाटकांग्लसंस्कृतानि इति द्वन्द्वसमासः । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकम् अभिसम्बद्ध्यते । तस्मात् 'कर्णाटकभाषा, आङ्ग्लभाषा, संस्कृतभाषा च' इति

समुच्चयस्य भानं भवति । समस्तात् पदात् बहिः 'वा'शब्दं निवेश्य वक्ता इच्छति यत् तस्य अन्वयः समासगतेन एकैकेन अपि शब्देन भवतु इति । किन्तु 'वा'शब्दस्य तादृशं सामर्थ्यं नास्ति । तस्मात् अत्र समासः न उचितः ।

'कर्णाटकभाषया, आंग्लभाषया, संस्कृतभाषया वा' इति व्यस्तः एव प्रयोगः साधुः अत्र ।

(...भाषायाम् अनुवदत' इति सप्तम्यन्तप्रयोगः अनुचितः इति तु पूर्वम् उक्तम् एव ।)

५९. अध्यापकः **विद्यार्थिन्यः** आहूतवान् ।

'विद्यार्थिन्यः' इति प्रथमान्तम् अस्थाने । **'विद्यार्थिनीः'** इति द्वितीयान्तं रूपं प्रयोक्तव्यम् ।

विद्यार्थिनीशब्दः अत्र कर्म । कर्मणः द्वितीया । 'विद्यार्थिन्यः' इति तु प्रथमाबहुवचनान्तं रूपम् । 'विद्यार्थिनी'शब्दस्य द्वितीयाबहुवचनान्तं रूपं 'विद्यार्थिनीः' इति । तस्मात् तदेव रूपम् अत्र प्रयोक्तव्यम् । प्रथमाबहुवचनान्त-द्वितीयाबहुवचनान्तरूपयोः भेदस्य अज्ञानात् कदाचित् एतादृशाः प्रयोगाः क्रियन्ते ।

अन्यानि उदाहरणानि यथा -

| *अशुद्धम् (✗)* | *शुद्धम् (✓)* |
|---|---|
| • सः लेखन्यः क्रीतवान् । | सः लेखनीः क्रीतवान् । |
| • सा अङ्कन्यः दत्तवती । | सा अङ्कनीः दत्तवती । |
| • बालः भगिन्यः सूचितवान् । | बालः भगिनीः सूचितवान् । |
| • रामः मातरः नमस्कृतवान् । | रामः मातॄः नमस्कृतवान् । |
| • अध्यापकः चत्वारः बालिकाः बोधितवान् । | अध्यापकः चतस्रः बालिकाः बोधितवान् । |

६०. अहं **धर्मश्रीं** पठितवान् ।

**'धर्मश्रियम्'** इति प्रयोगः साधुः ।

'धर्मश्रीः' कश्चन कथाग्रन्थः । 'श्री'शब्दात् द्वितीयैकवचने 'श्रियम्' इति रूपम् । तस्मात् 'धर्मश्रियम्' इति प्रयोक्तव्यम् ।

'धर्मश्री' इति किञ्चन अव्युत्पन्नं नाम इति यदि प्रयोक्तुः आशयः तर्हि

'धर्मश्रीम्' इत्येतदपि समर्थनार्हं स्यात् । किन्तु 'धर्म'पदं, 'श्री'पदं च संस्कृतम् । समासवृत्त्या तयोः योगः । अतः 'धर्मश्री'पदस्य व्युत्पन्नत्वकथने एव औचित्यम् ।

संज्ञापदानां केषाञ्चित् अव्युत्पन्नत्वं क्वचित् अङ्गीक्रियते । यथा - 'सविता' । एतेन पदेन काचित् बालिका निर्दिश्यते । यदि अत्र प्रकृतिप्रत्ययादिकं चिन्त्येत तर्हि तस्य पदस्य ऋकारान्तता पुंस्त्वं च आपद्येत । तेन व्यवहारः दुंश्शकः स्यात् । तस्मात् अत्र 'सविता' इति आकारान्तः कश्चन अव्युत्पन्नः शब्दः इति उच्यते । अगतिकगत्या कथनम् एतत् ।

६१. **उदुपसर्गपूर्वकस्य तरणार्थकस्य तॄधातोः** क्तप्रत्यये तीर्णः इति रूपम् ।

**'उदुपसर्गपूर्वकात् तरणार्थकात् तॄधातोः'** इति पञ्चम्यन्तं रूपम् एव प्रयोक्तव्यम् ।

प्रत्ययः यस्मात् विधीयते तस्मात् पञ्चमी स्यात्, न तु षष्ठी । प्रत्ययः सदापि परः एव भवति । यदा षष्ठी प्रयुज्यते तदा षष्ठ्यन्तस्य 'स्थाने' इत्यर्थः सिद्ध्यति । तस्मात् धातोः स्थाने एव प्रत्ययः स्यात् । (तन्नाम धातुम् अपनीय प्रत्ययः तिष्ठेत्) स च आशयः अत्र न अभिप्रेतः । अतः षष्ट्यन्तस्य प्रयोगः अनुचितः । पञ्चम्यन्तानि पदानि एव प्रयोक्तव्यानि ।

अन्यानि उदाहरणानि यथा -

| *अशुद्धम् (✗)* | *शुद्धम् (✓)* |
|---|---|
| ❖ अतः तस्य द्वितीया । | अतः तस्मात् द्वितीया । |
| ❖ तस्य तव्यत्प्रत्ययः कर्मार्थे । | तस्मात् तव्यत्प्रत्ययः कर्मार्थे । |
| ❖ यत्प्रत्ययः अजन्तस्य विहितः । | यत्प्रत्ययः अजन्तात् विहितः । |
| ❖ तस्य चतुर्थी विहिता । | तस्मात् चतुर्थी विहिता । |

६२. 'अहं गन्तव्यम्' इत्यत्र 'मया' इति **तृतीया प्रयोक्तव्या** ।

'मया इति **तृतीयान्तं प्रयोक्तव्यम्**' इति आनुपूर्वी उचिता ।

अत्र 'मया' इत्येतत् एव विभक्तिरूपं न । 'टा' इति विभक्तिप्रत्ययः ।

'मया' इत्येतत् विभक्तिप्रत्ययान्तं रूपम् । अतः 'मया' इत्येतत् तृतीयान्तं भवति, न तु तृतीया । तस्मात् 'तृतीयान्तं प्रयोक्तव्यम्' इति कथनं युक्तं भवति ।

अन्यानि उदाहरणानि यथा –

| *अशुद्धम् (✗)* | *शुद्धम् (✓)* |
|---|---|
| ❖ 'तेन' इति तृतीया साध्वी । | 'तेन' इति तृतीयान्तं साधु । |
| ❖ एकवचनप्रयोगः न दोषाय । | एकवचनान्तः प्रयोगः न दोषाय । |
| ❖ द्वितीये वाक्ये एकवचनं प्रयुक्तम् । | द्वितीये वाक्ये एकवचनान्तं प्रयुक्तम् । |
| ❖ एकवचनप्रयोगः युज्यते । | एकवचनान्तः प्रयोगः युज्यते । |

६३. तस्मै क्षीरं **दीर्घचषके** ददातु ।

'दीर्घचषके' इति प्रयोगः अस्थाने । **'दीर्घचषकेण'** इति प्रयोक्तव्यम् । दानक्रियायां चषकः भवति साधनम् । अतः साधनार्थकस्य तृतीया स्यात् *'कर्तृकरणयोस्तृतीया'* इति सूत्रेण । सप्तमी तु अस्थाने । प्रादेशिकभाषायाम् एतादृशाः प्रयोगाः क्रियन्ते । तान् अनुकुर्वद्भिः कैश्चित् संस्कृते अपि तादृशः प्रयोगः क्रियते भ्रान्तिवशात् ।

६४. **सेनानिना शत्रवः धैर्येण सम्मुखीकृताः ।**

'सेनानिना' इति अपशब्दः **'सेनान्या'** इति प्रयोक्तव्यम् । 'सेनानीः' नाम सेनानायकः । 'सेनानी'शब्दः ईकारान्तः पुंलिङ्गः । सः इन्नन्तः इकारान्तः वा न । 'सेनान्या' इत्यत्र *'एरनेकाचोऽसंयोग-पूर्वस्य'* (६.४.८२) इति सूत्रेण यण् । घिसंज्ञाभावात् न 'ना'देशः । आपाततः दर्शनात् सेनानीशब्दः भ्रमं जनयति एव । अतः प्रथमाबहुवचनान्त-द्वितीयैकवचनान्तादीनां रूपाणां विषये (सेनान्यः सेनान्यम्, सेनान्ये, सेनान्याम् इत्यादीनां विषये) विशेषावधानं भवेत् । शब्दरूपावल्यादिषु तस्य रूपाणां दर्शनं वरम् । एवमेव ग्रामणी-शब्दविषयेऽपि ।

६५. वर्गाधिकारी **शिक्षार्थीन्** उद्बोधितवान् ।

'शिक्षार्थीन्' इति अपशब्दः । **'शिक्षार्थिनः'** इति प्रयोक्तव्यम् । शिक्षार्थिशब्दः नकारान्तः । अगन्तत्वाभावात् न पूर्वसवर्णदीर्घः

*'प्रथमयोः...' (६.१.१०२)* इति सूत्रेण । पूर्वसवर्णदीर्घाभावात् *'तस्माच्छसो नः पुंसि' (६.१.१०३)* इति सूत्रेण शसः सकारस्य नकारः अपि न ।

६६. **स्त्रियः** रूपं कस्य मनः न हरेत् ?

**'स्त्रियाः'** इति प्रयोक्तव्यम् । स्त्रीशब्दस्य षष्ठ्यन्तं (पञ्चम्यन्तं च) रूपं 'स्त्रियाः' इति ।

स्त्रीशब्दः ईकारान्तः । अतः सः नदीसंज्ञायुक्तः । तस्मात् *'आण्नद्याः' (७.३.११२) 'आटश्च' (६.१.९०)* इत्येताभ्यां सूत्राभ्याम् आडागमः वृद्धिश्च । तस्मात् 'स्त्रियाः' इति रूपम् ।

प्रथमाबहुवचने द्वितीयाबहुवचने च इयङादेशः भवति । तस्मात् 'स्त्रियः' इति रूपम् । अनयोः रूपयोः स्मरणं प्रायः भ्रमं जनयति षष्ठ्यैकवचने पञ्चम्यैकवचने च । अतः स्त्रीशब्दस्य रूपाणां विषये अवधानवद्भिः भवितव्यम् ।

६७. **वाराणसेः** नाम केन वा न श्रुतम् ?

**'वाराणस्याः'** इति प्रयोक्तव्यम् । 'वाराणसेः' इति अपशब्दः । 'वाराणसी'शब्दः ईकारान्तः, न तु इकारान्तः । अतः तस्य रूपाणि ईकारान्तशब्दस्य इव एव भवन्ति, न तु इकारान्तशब्दस्य इव । यदि सः इकारान्तः स्यात् तर्हि 'वाराणसेः' इत्यपि रूपं साधु अभविष्यत् । ईकारान्तात् नदीसंज्ञा नित्या । (इकारान्तस्य तु विकल्पेन । अतः तत्र रूपद्वयम्) नदीसंज्ञात्वात् आट् वृद्धिः च स्यादेव । तस्मात् 'वाराणस्याः' इत्येव रूपम् ।

६८. **भगवतः ध्यानं निःश्रेयसे** भवति ।

**'निःश्रेयसाय भवति'** इति प्रयोक्तव्यम् । 'निःश्रेयसे' इति असाधुः । 'श्रेयः' इत्येषः शब्दः सान्तः नपुंसकः च । 'श्रेयः, श्रेयसी, श्रेयांसि' इत्यादीनि तस्य रूपाणि । किन्तु 'निःश्रेयस'शब्दः अकारान्तः । *'अचतुर...' (५.४.७७)* इति सूत्रेण तस्य अजन्तत्वं निपातनात् । अतः सः शब्दः अकारान्तत्वेन एव प्रयोक्तव्यः । कोषो यथा - 'निःश्रेयसं तु कल्याणमोक्षयोः शङ्करे पुमान्' इति । एतदप्यत्र स्मर्तव्यं यत् 'निःश्रेयसम्' इत्यत्र इकारोत्तरं विसर्गस्य शकारस्य वा श्रवणं स्यात् एव । श्रेयश्शब्दगतः अपरः शकारः तु अस्ति एव । (निश्चितं

श्रेयः निःश्रेयसम् ।)

६९. **नामश्रवणमात्रेण** सः भीतः ।

**'नामश्रवणमात्रात्'** इति प्रयोगः वरम् ।

नाम्नः श्रवणं भीतेः हेतुः । भयहेतोः अपादानं विहितं - *'भीत्रार्थानां भयहेतुः' (१.४.२५)* इति सूत्रेण । तस्मात् 'नामश्रवणमात्र'पदात् पञ्चमी प्रयोक्तव्या । 'नामश्रवणमात्र'शब्दस्य हेतुत्वम् अस्ति, तस्मात् *'हेतौ' (२.३.२३)* इति सूत्रेण तृतीया भवतु इति यदि भवन्तः आगृह्णन्ति तर्हि न तत्र विवदामहे वयम् ।

७०. **बहुभ्यः दिनेभ्यः** एवमेव प्रचलति ।

**'आ बहुभ्यः दिनेभ्यः'** इति प्रयोक्तव्यम् ।

'बहुभ्यः दिनेभ्यः' इत्यत्र या पञ्चमी अस्ति सा अत्र अनन्विता अस्ति । वक्ता पञ्चानां दिनानां व्याप्तिम् इच्छति । तत्र 'आ' इत्यस्य प्रयोगात् इष्टं सिद्ध्येत् । 'आङ्' इत्यस्य अभिविधिः (व्याप्तिः) अर्थः । 'आ' इत्यस्य अप्रयोगे तु अपेक्षितस्य अर्थस्य प्रतीतिः न भवति ।

'बहुत दिनों से' इति हिन्दीभाषायां प्रयोगः । अन्यासु प्रादेशिकभाषासु अपि एतादृशी आनुपूर्वी एव दृश्यते । किन्तु सा न संस्कृतानुसारिणी । एतादृशानि अन्यानि वाक्यानि यथा -

- बहुभ्यः मासेभ्यः भवान् मम गृहं न आगतः ।
- बहुभ्यः वर्षेभ्यः संस्कृतस्य स्थितिः एतादृशी एव अस्ति ।
- बहुभ्यः वासरेभ्यः अहम् एतादृशम् एव प्रयोगं कुर्वन् आसम् ।
- बहुभ्यः वर्षेभ्यः एषा भूमिः ममैव आसीत् ।
- बहुभ्यः दिनेभ्यः भवतः व्यवहारम् अहं पश्यन् अस्मि ।
- बहुभ्यः दिवसेभ्यः विचारोऽयं मम मनसि आवर्तते ।
- बहुभ्यः दिनेभ्यः भवतः दर्शनम् एव नास्ति ।

७१. **आ बहुमासात्** एवमेव प्रचलति ।

**'आ बहुभ्यः मासेभ्यः'** इति प्रयोगः वरम् ।

'आ' इत्यस्य प्रयोगः तु अत्र कृतः अस्ति । अतः अभिव्याप्तिः तु सिद्धा । किन्तु मासशब्दात् या एकवचनता दृश्यते सा अयुक्ता ।

वाक्येऽस्मिन् बहुत्वम् इष्यते । बहुत्वं च परिमाणवाचकं सङ्ख्यावाचकं चेति द्विधा । तथा हि कोषः - *'बहु स्यात् त्र्यादिसङ्ख्यासु विपुलेऽप्यभिधेयवत्'* इति मेदिनी । प्रकृतवाक्ये तु संख्यागतं बहुत्वम् इष्यते । तदा च तस्य बहुवचनं स्यात् । मासशब्दात् अपि बहुवचनप्रत्ययः एव स्यात् । अतः 'आ बहुभ्यः मासेभ्यः' इत्येव प्रयोगः भवेत् ।
यदि बहुमासात् इति कथञ्चित् समर्थनीयं तर्हि मार्गः इत्थम् - पञ्चानां मासानां समाहारः पञ्चमासम् । अकारान्तत्वं तु पात्रादिगणे प्रवेशात् । पात्रादिः आकृतिगणः । 'पञ्चमास'पदस्य पञ्चम्यन्तं रूपं - 'पञ्चमासात्' इति ।

७२. **कार्यक्रमेऽस्मिन्** सहस्राधिकाः आगताः आसन् ।
**'कार्यक्रममेतम्'** इति प्रयोक्तव्यम् ।
अत्र 'आगताः' इति क्तान्तं प्रयुक्तम् । तद्गतः गम्धातुः सकर्मकः । गम्धातोः कर्म 'कार्यक्रमः' । अतः कार्यक्रमात् द्वितीया स्यात् ।
'कार्यक्रमे सहस्राधिकाः समुपस्थिताः आसन्' इति प्रयोगे कृते तु कार्यक्रमशब्दात् सप्तमी युज्यते एव । ('सम्मिलिताः आसन्' इति प्रयोगे कृते अपि सप्तमी साध्वी स्यात्) ष्ठाधातुः अकर्मकः । तस्मात् कार्यक्रमपदात् सप्तमी साध्वी । उपर्युक्ते वाक्ये 'समुपस्थिताः' इति न प्रयुक्तं, प्रत्युत 'आगताः' इति प्रयुक्तम् । प्रयुक्तस्य धातोः आनुगुण्येन विभक्तिप्रयोगः चिन्तनीयः । समुपस्थितार्थे आगतशब्दप्रयोगः न उचितः । समुपस्थितिः अन्या । आगमनम् अन्यत् ।

७३. सर्पः **बिलस्य अन्तः** प्राविशत् ।
**'बिलं प्राविशत्'** इति प्रयोक्तव्यम् ।
प्रवेशनार्थकः विशधातुः सकर्मकः । प्रकृतवाक्ये बिलम् एव कर्म । कर्मणः द्वितीया । तस्मात् 'बिलम्' इति द्वितीयान्तं प्रयोक्तव्यम् ।
प्रवेशनं नाम अन्तः गमनम् । अतः विशधातुः प्रयुक्तः चेत् पुनः 'अन्तः' इति पदं प्रयोक्तव्यं नास्ति । (अन्तः इत्यस्य प्रयोगस्य अभावे बिलशब्दात् षष्ठी अपि न) 'अन्तः' इत्यस्य प्रयोगे कृते तु 'गम'धातुः एव प्रयोक्तव्यः, न तु विशधातुः ।
एतदत्र अवधातव्यं यत् प्रवेशनान्तर्गमनयोः अर्थः तु समानः । किन्तु कर्मभेदः तु अस्ति तयोः । यत् क्रियापदं प्रयुक्तं तदनुगुणं कर्मादिप्रयोगः

चिन्तनीयः ।

यदि 'सकीचकैर्मारुतरन्ध्रपूर्णैः' इति प्रयोगः यथा तथैव अत्रापि 'विशिः गत्यर्थकः' इति भवन्तः कथयेयुः तर्हि तु सङ्गतिः भवेत् ।

७४. बालः **ज्वालाभिः** आत्मानं रक्षन् धावितवान् ।

**'ज्वालाभ्यः'** इति प्रयोक्तव्यम् ।

वाक्येऽस्मिन् रक्षणम् इष्यते । यतः रक्षणम् इष्यते तस्मात् पदात् पञ्चमी *'भीत्रार्थानां भयहेतुः' (१.४.२५)* इति सूत्रेण । यद्यपि हेतोः तृतीया विहिता, तथापि भयहेतोः पञ्चम्याः विशेषतः विधानात् पञ्चमी एव, न तु तृतीया ।

७५. **विद्वान्** महादेववर्यस्य भाषणम् अस्ति अद्य ।

**'विदुषः'** इति प्रयोक्तव्यम् ।

महादेववर्यशब्दोत्तरं षष्ठी श्रूयते । विद्वच्छब्दः तस्य विशेषणम् । विशेष्यस्य या विभक्तिः सा एव विभक्तिः स्यात् खलु विशेषणस्यापि । अतः 'विदुषः' इति षष्ठ्यन्तं पदं प्रयोक्तव्यम् ।

एतादृशाः एव अनवधानकृताः प्रयोगाः केचन यथा -

- **श्रीमान्** द्विवेदिमहोदयेन इदानीं भाषणं क्रियते ।
- **स्वामी** दयानन्दवर्याः अत्र उपस्थिताः सन्ति ।
- **श्रीमती** रमावर्यया धन्यवादाः समर्प्यन्ते इदानीम् ।
- **चिरञ्जीवी** भास्कराय प्रथमं पारितोषिकं दीयते ।
- **विदुषी** सहनादेवीवर्यां वेदिकां प्रति निमन्त्रयामि ।

(एतेषु स्थूलाक्षरैः निर्दिष्टानि पदानि परिष्कारम् अर्हन्ति इति भवन्तः जानन्ति एव ।)

एवमेव 'विद्वान् द्विवेदिमहोदया' इत्यादयोऽपि ।

७६. मधुमक्षिकाः **छात्रेभ्यः** दष्टवत्यः ।

**'छात्रान्'** इति प्रयोक्तव्यम् ।

दंशधातुः सकर्मकः । तस्य कर्म अस्ति छात्रपदम् । कर्मणः द्वितीया कर्तरिप्रयोगे । अतः 'छात्रान्' इति प्रयोगः समुचितः । 'छात्रेभ्यः' इति चतुर्थ्यन्तः प्रयोगः तु प्रादेशिकभाषाप्रभावकारणतः ।

७७. ज्येष्ठः **सर्वान्** बहुमूल्यं मार्गदर्शनं कृतवान् ।

'ज्येष्ठः **सर्वेषां** मार्गदर्शनं कृतवान्' इति, 'ज्येष्ठः **सर्वान्** मार्गम्

उपादिशत्' इति वा प्रयोक्तव्यम् ।
मार्गस्य दर्शनं (प्रदर्शनम्) मार्गदर्शनम् । दर्शनम् इत्यत्र ल्युट्प्रत्ययः । स च कृत् । *'कर्तृकर्मणोः कृति'* (२.३.६५) इति सूत्रेण कृद्योगे कर्मणः षष्ठी । (*'न लोकाव्यय...'* इति षष्ठीनिषेधसूत्रं तु अत्र न प्रवर्तते, अवसराभावात् ।) अतः सर्वशब्दात् षष्ठी स्यात् । तस्मात् सर्वेषाम् इति रूपम् ।
अथवा 'सर्वान् मार्गम् उपादिशत्' इति प्रयुज्यताम् । तदा सर्वशब्दात् मार्गशब्दाच्च द्वितीया । उपदिशतेः द्विकर्मकत्वात् ।

७८. सः **नाममात्रं** कार्यदर्शी अस्ति ।
**'नाममात्रेण'** इति प्रयोक्तव्यम् ।
*'प्रकृत्यादिभ्यः उपसङ्ख्यानम्'* इति वार्तिकेन (*'कर्तृकरणयोः तृतीया'* इति सूत्रे) तृतीया । कौमुद्याः तत्त्वबोधिनीव्याख्याने लिख्यते - *'आकृतिगणोऽयम् । तेन 'नाम्ना सुतीक्ष्णः, चरितेन दान्तः' इत्यादि सिद्धम्'* इति । 'नाममात्रम्' इति प्रथमान्तः प्रयोगः यः कृतः स च अनन्वितः तिष्ठति । अतः तृतीया एव साध्वी ।

७९. बालस्य **लेशमात्रम्** अपि भयं नास्ति ।
**'भयस्य लेशमात्रम्'** इति प्रयोक्तव्यम् ।
अत्र भयस्य विशेषणत्वेन प्रयुक्तः अस्ति लेशशब्दः । लेशः तु एकदेशवाची । स च षष्ठ्यन्तेन अन्वयं प्राप्नोति, न तु अभेदेन । अतः 'भयस्य लेशः' इति प्रयोगः स्यात् । लेशः एव लेशमात्रम् । तस्मात् 'भयस्य लेशमात्रम् अपि नास्ति' इति प्रयोगः साधुः ।

८०. रमेशः स्वागतं, सुरेशः धन्यवादान् च **समर्पितवन्तौ** ।
**'स्वागतं व्याहृतवान्' 'धन्यवादान् समर्पितवान्'** इति वक्तव्यम् ।
वाक्येऽस्मिन् 'समर्पितवान्' इति एकमेव क्रियापदं प्रयुक्तम् । तस्मात् सिद्ध्यति यत् 'रमेशः स्वागतं समर्पितवान्', 'सुरेशः धन्यवादान् समर्पितवान्' इति । वस्तुतः तु स्वागतं वचनविषयः, धन्यवादः च समर्पणविषयः । अतः 'स्वागतं व्याहृतम्' 'स्वागतवचनानि उक्तानि' इत्यादयः आनुपूर्व्यः प्रयोक्तव्याः । 'स्वागतं समर्पितवान्' इति तु न प्रशस्ता शैली ।

८१. **तस्मिन् उक्ते सति** मया कार्यं स्मृतम् ।

**'तेन उक्ते सति'** इति प्रयोक्तव्यम् ।

भावलक्षणसप्तमीसम्बद्धम् उदाहरणम् एतत् । क्रियया क्रियान्तरं यत्र लक्ष्यते तत्र क्रियाश्रयपदात् सप्तमी विधीयते *'यस्य च भावेन भावलक्षणम्' (२.३.३७)* इति सूत्रेण ।

उपरितने वाक्ये कथनं स्मरणं चेति द्वे क्रिये ।' कदा स्मृतम् ?' इति प्रश्ने कृते 'तेन उक्ते सति' इति उत्तरम् । अत्र कथनं ज्ञातम् । तस्य कालः अपि ज्ञातः । किन्तु स्मरणं ज्ञातं, तस्य कालः न ज्ञातः । अतः कथनक्रियायाः कालः निर्ज्ञातः । स्मरणक्रियायाः कालः अनिर्ज्ञातः । अतः निर्ज्ञातकालकथनक्रिया ज्ञापिका । अनिर्ज्ञातकालस्मरणक्रिया ज्ञाप्या । निर्ज्ञातक्रियाश्रयः वाक्यादिकम् । (तदत्र न उपात्तम् ।) तस्मात्, तद्विशेषणात् च सप्तमी । तच्छब्दात् तु तृतीया *'कर्तृकरणयोः तृतीया' (२.३.१८)* इति सूत्रेण ।

८२. स्वामिनि **गृहे प्रविष्टवति** चोराः धावितवन्तः ।

**'स्वामिनि गृहं प्रविष्टवति'** इति प्रयोक्तव्यम् ।

अत्र प्रवेशक्रिया ज्ञापिका । तदाश्रयः स्वामी । अतः क्रियाश्रयात् स्वामिपदात् तद्विशेषणात् क्तवतुप्रत्ययान्तात् च सप्तमी - *'यस्य च भावेन..'* इति सूत्रेण । कर्मभूतः गृहशब्दः न क्रियाश्रयः । अतः तस्मात् द्वितीया *'कर्मणि द्वितीया' (२.३.२)* इति सूत्रेण । गृहपदात् सप्तमी तु अयुक्ता एव ।

ज्ञापकक्रियाश्रयाः भवितुम् अर्हन्ति क्तवत्वन्तेन, क्त्वान्तेन, शत्रन्तेन, तव्यदनीयरन्तेन, शानजन्तेन वा बोध्यमानाः । अतः भावलक्षणसप्तमी-प्रयोगे तेषां सर्वविधानाम् अपि उपयोगः भवितुम् अर्हति ।

| कर्तरि | कर्मणि |
|---|---|
| क्तवतु - गतवान् | क्त - पठितः |
| क्त - गतः | तव्यत् - गन्तव्यम् |
| शतृ - गच्छन् | अनीयर् - गमनीयम् |
| शानच् - वन्दमानः | शानच् - गम्यमानः |

◆ यदा कर्त्रर्थे विहितेन प्रत्ययेन युक्तेन पदेन ज्ञापकक्रियाश्रयः ज्ञाप्यते

तदा कर्तुः तद्विशेषणात् प्रत्ययान्तपदात् च सप्तमी ।

◆ यदा कर्मार्थे विहितेन प्रत्ययेन युक्तेन पदेन ज्ञापकक्रियाश्रयः ज्ञाप्यते तदा कर्मणः तद्विशेषणात् प्रत्ययान्तपदात् च सप्तमी ।

एतान् अंशान् मनसि निधाय वाक्यानि प्रयोक्तव्यानि । अवगमन-साहाय्याय कानिचन अशुद्धानि शुद्धानि च वाक्यानि अधः दत्तानि सन्ति ।

| *अशुद्धम् (✗)* | *शुद्धम् (✓)* |
|---|---|
| • भक्तेन देवे वन्दमाने.... | • भक्ते देवं वन्दमाने.... |
| • भक्ते वन्द्यमाने.... | • भक्तेन (देवे) वन्द्यमाने.... |
| • बाले पुस्तके पठिते... | • बालेन पुस्तके पठिते... |
| • शिशौ स्वप्ने दृश्यमाने... | • शिशुना स्वप्ने दृश्यमाने... |
| • बाले स्नानं क्रियमाणे... | • बालेन स्नाने क्रियमाणे... |
| • रामे सीतां दृष्टे... | • रामेण सीतायां दृष्टायाम्.. |

८३. **सम्मेलनं** कथं भवितव्यम् इति सम्यक् चिन्त्यताम् ।

**'सम्मेलनेन'** इति प्रयोगः स्यात् ।

'भवितव्यम्' इत्यत्र भावे तव्यत्, यतः भूधातुः अकर्मकः । तस्मात् एतस्मिन् वाक्ये सम्मेलनशब्दात् प्रथमा भवितुं न अर्हति । क्रियया अनुक्तत्वात् *'कर्तृकरणयोः तृतीया'* (२.३.१८) इति सूत्रेण तृतीया एव । प्रादेशिकभाषासु या आनुपूर्वी दृश्यते सा संस्कृते क्वचित् न सङ्गच्छते इत्येतत् सदा स्मर्तव्यम् ।

८४. **गोलिकाः प्रहृत्य** सैनिकेन दश जनाः मारिताः ।

**'गोलिकाभिः प्रहृत्य'** इति, **'गोलिकाः प्रयुज्य'** इति वा वक्तव्यम् ।

यदा प्रहरणक्रिया भवति तदा गोलिकानां करणत्वं स्यात् । अतः 'गोलिकाभिः प्रहृत्य' इति वाक्यविन्यासः करणीयः । 'गोलिकाः' इत्यस्यैव यदि कर्मत्वम् इष्यते तदा धात्वन्तरं (प्रयुज्य इत्यादयः) प्रयोक्तव्यम् ।

'गोलिकाः प्रहृत्य' इति वाक्यविन्यासः अस्ति चेत् 'सैनिकः गोलिकाः एव प्रहरति' इत्यस्य अर्थस्य प्रतीतिः भवति । सैनिकः तु शत्रून् प्रहर्तुम् इच्छति । तस्यां शत्रुप्रहरणक्रियायां गोलिकानां करणत्वम् एव युज्यते । अतः 'गोलिकाभिः प्रहृत्य' इति वाक्य-विन्यासः औचित्यम् आवहति ।

८५. भीमसमानाः **केऽपि न सन्ति** ।

**'कोऽपि नास्ति'** इति प्रयोगः समुचितः । 'केऽपि न सन्ति' इत्यत्र सत्तायाः बहुत्वं निषिध्यते । बहुत्वस्य निषेधेन द्वित्वस्य एकत्वस्य वा निषेधः भवेत् एव इति नास्ति । अर्थतः क्वचित् 'कोऽपि नास्ति' इति बोधः कैश्चित् प्राप्येत । वक्ता तु 'एकोऽपि नास्ति' इत्येव वक्तुम् इच्छति । अतः 'कोऽपि नास्ति' इत्यस्याः आनुपूर्व्याः एव आश्रयणं वरम् ।

८६. माता **बालाय** वस्त्रं धारयति ।

**'बालेन'** इति प्रयोक्तव्यम् । 'बालाय' इत्यत्र चतुर्थी अस्थाने । 'बालः वस्त्रं धरति' इत्येतत् अण्यन्तं वाक्यम् । अत्र बालः कर्ता । ण्यन्तावस्थायां सः भवति प्रयोज्यकर्ता । *'गतिबुद्धिप्रत्यवसानार्थ....'* इत्यादिभिः सूत्रैः धृधातुयोगे कर्मसंज्ञा तु न विहिता । अतः प्रयोज्यकर्तुः तृतीया एव साध्वी ।

## ६. षष्ठः अध्यायः

# क्रियापदानि

## (तिङन्तरूपाणि कृदन्तरूपाणि च)

०१. एषा लेखनी आपणे **मिलति** ।
'मिलति' इति अस्थाने । **प्राप्यते** इति वक्तव्यम् ।
मिलधातोः सङ्गमनम् अर्थः । स च अत्र न अपेक्षितः । प्राप्तिः अत्र इष्यते । अतः तदर्थकः धातुः प्रयोक्तव्यः ।
एतदत्र स्मर्तव्यं यत् 'प्राप्यते' 'लभ्यते' इत्यादयः संस्कृतभाषायां कर्मणिप्रयोगाः । तृतीयान्तं कर्तृपदम् अत्र अध्याहार्यम् । यदि कर्तरिप्रयोगः एव इष्यते तर्हि 'एतां लेखनीं भवान् आपणे लभते / लब्धुम् अर्हति' इति वाक्यं प्रयोक्तव्यं स्यात् ।

०२. ह्यः भवत्याः सखी **मां** मिलितवती ।
**'मया'** इति प्रयोक्तव्यम् ।
मिलतिः अकर्मकत्वेन एव प्रयुक्तः दृश्यते लोके । प्रयोगो यथा - 'गङ्गा यमुनया मिलति' इति । (सङ्गता भवति इत्यर्थः ।) तस्य अकर्मकत्वात् एव कर्तरि क्तः । तथा हि 'मिलितेषु मिथो योद्धुं दन्तिषु ...' (कुमा. - १६. ३१) इति । सकर्मकत्वे तु कर्तरि क्तः सुदुर्लभः । जगन्नाथस्य प्रयोगो यथा - ..... मिलति तव तोयैर्मृगमदः । (गङ्गालहर्याम्)
'सः मां मिलति' इति सकर्मकप्रयोगः शिष्टैः प्रयुक्तः यदि दृष्टः स्यात् तर्हि सङ्गमनस्य अङ्गभूतां प्राप्त्यर्थकतां मनसि निधाय सकर्मकत्वं समर्थनीयं भवेत् ।

०३. अहं श्वः **मिलिष्यामि** । रमेशः सप्ताहानन्तरं पत्रं **लिखिष्यति** ।
**'मेलिष्यामि' 'लेखिष्यति'** इति च साधु ।
मिलधातोः लिखधातोः च लट्, लोट्, लङ्, विधिलिङ्, शतृ इत्येतान् विहाय इतरत्र सर्वत्र गुणः स्यात् एव *'पुगन्तलघूपधस्य च'* (७.३.८६) इति सूत्रेण । अतः मिलिष्यति लिखिष्यति इति रूपे असाधुनी एव । मिलति लिखति इत्यत्र न गुणः । एतौ धातू षष्ठे गणे स्तः । षष्ठगणस्य विकरणप्रत्ययः शः । शितः ङिद्वद्भावः गुणनिषेधश्च विहितः ।

अतः शिति प्रत्यये परे गुणो न, अन्यत्र गुणः इति ज्ञेयम् ।

कौमुदीव्याख्याने तत्त्वबोधिन्यां लिख्यते -

> *''लिखितुं, लिखिष्यति इति प्रयोगः प्रामादिकः । यत्तु कैश्चित् कुटस्यादिः कुटादिः ..... इत्येवमादिक्रमेण 'लिखितुम्' इति समर्थितं तदसत् । लेखिता लेखिष्यति इत्यादौ गुणनिषेधापत्तेः । न च इष्टापत्तिः । ..'शकुनिष्वालेखने' इति सौत्रप्रयोगोऽपि विरुध्यते''* इति ।

तस्मात् गुणनिषेधः कैश्चित् समर्थितं यत् तत् असत् इति सिद्धम् ।

०४. आवयोः पुनः **मिलनं** कदा भवेत् ?

**'मेलनम्'** इति प्रयोगः वरम् ।

ल्युटि अनादेशे *'पुगन्त....'* इति सूत्रेण गुणे 'मेलनम्' इति रूपम् । किन्तु क्वाचित्कतया 'मिलनम्' इति प्रयोगाः अपि दृश्यन्ते । यथा -

- परि**मिलन**मप्राप्य हरितम् ।
- मुक्तांशुजाल**मिलनाद्** रुचिरैः प्रवालैः .....

*- पादुकासहस्रे - ५५२*

तत्तद्व्याख्यासु 'संज्ञापूर्वको विधिरनित्यः' इति गुणनिषेधः इति प्रतिपादितम् । बोपदेवव्याकरणे मुग्धबोधे तु मिलधातोः कुटादित्वम् अङ्गीकृत्य *'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (१.२.१)* इति ङिद्वद्भावेन गुणनिषेधः साधितः ।

यद्यपि मिलनम् इत्यस्य साधुत्वं मार्गान्तरेण प्रतिपादितं, तथापि स च प्रयोगः क्वाचित्कः इति न विस्मर्तव्यम् । अतः 'मेलनम्' इति प्रयोगः एव वरम् ।

०५. ततः आरभ्य किम् **अन्विषति** भवान् ?

'अन्विषति' इति अपशब्दः । **'अन्विष्यति'** इति प्रयोक्तव्यम् ।

अनु-उपसर्गपूर्वकः गत्यर्थकः इषधातुः चतुर्थगणीयः । चतुर्थगणीयानां विकरणप्रत्ययः श्यन् । अतः लटि यकारः श्रूयते एव । यदि सः षष्ठे गणे स्यात् तर्हि 'अन्विषति' इति यकाररहितं रूपं स्यात् । किन्तु तथा तु नास्ति । अतः 'अन्विष्यति' इत्येव साधु ।

०६. अपघातवार्तां श्रुत्वा को वा न **खिद्यति** ?

'खिद्यति' इति अशुद्धम् । **'खिद्यते'** इति प्रयोक्तव्यम् ।

दैन्यार्थकः चतुर्थगणीयः खिदधातुः आत्मनेपदी । अतः 'खिद्यते' इत्येव प्रयोक्तव्यम् ।

०७. तौ सहोदरौ वैरिणौ इव **युध्यतः** ।

'युध्यतः' इति अपशब्दः । **'युध्येते'** इति प्रयोक्तव्यम् ।

सम्प्रहारार्थकः चतुर्थगणीयः युधधातुः आत्मनेपदी । अतः 'युध्येते' इत्येव साधु । यद्यपि युद्धम् इच्छतीति युध्यति इति क्यचं विधाय कौमुद्यां निष्पत्तिः दर्शिता तथापि आत्मनेपदिनः प्रयोगः एव वरम् । ('युध्येते' इत्येषः द्विवचनान्तप्रयोगः ।)

०८. पिता दण्डेन बालान् **भापयति** ।

'भापयति' इति अशुद्धम् । **'भाययति'** इति प्रयोक्तव्यम् ।

भयार्थकात् 'भी'धातोः णिच् इष्यते अत्र । प्रयोजकात् भयं चेदेव आकारः पुक् च । तदा आत्मनेपदित्वम् अपि ।

प्रयोगो यथा - मुण्डो भापयते ।

अत्रैव भीषयते इत्यपि प्रयोक्तुं शक्यम् । प्रयोजकेतरस्मात् यदा भयं तदा आकारः पुक् च न, नित्यात्मनेपदित्वम् अपि न । उभयपदित्वं तदा ।

०९. छात्राः अध्यापकस्य वाक्यम् **उच्चरन्ति** ।

**'उच्चारयति'** इति प्रयोक्तव्यम् ।

उत्पूर्वकः गत्यर्थकः चरधातुः अकर्मकः । सकर्मकत्वे तु आत्मनेपदित्वम् *'उदश्चरः सकर्मकात्' (१.३.५३)* इति । सकर्मकत्वे तु 'उल्लङ्घ्य गच्छति' इत्यर्थः । अकर्मकत्वे तु उद्गच्छति / निर्गच्छति इति अर्थः । अतः - शब्दः उच्चरति । तम् अन्यः उच्चारयति ।

भाष्ये अपि णिजन्तप्रयोगः एव प्रयुक्तः दृश्यते - ''**येनोच्चारितेन** सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः'' इति ।

तत्त्वबोधिन्यां लिख्यते - ''ण्यन्त**स्तूच्चारण**वृत्तिः सकर्मकः । उच्चारयति - निस्सारयति इत्यर्थः'' इति ।

रामायणे प्रयोगो यथा -

**उच्चारयति** कल्याणीं वाचं हृदयहारिणीम् । - *किष्किन्धा. ३.३२*

१०. माता अन्नं **परिवेषयति** ।

'परिवेषयति' इत्यत्र स्वार्थे णिच् आश्रितः । वस्तुतः पर्युपसर्गपूर्वकः

व्याप्त्यर्थकः विष्लृधातुः जुहोत्यादिः । तस्य रूपाणि नितरां कठिनानि । यथा -

| | | |
|---|---|---|
| वेवेष्टि | वेविष्टः | वेविषति |
| वेवेक्षि | वेविष्टः | वेविष्ट |
| वेवेष्मि | वेविष्वः | वेविष्मः इत्यादीनि । |

अधीतशास्त्राः अपि एतेषां प्रयोगे प्रमाद्येयुः एव । किमुत लौकिकाः ? परिवेषणक्रिया तु दैनन्दिनव्यवहारे अस्ति । तदर्थं कश्चन धातुः, तिङन्तरूपं वा आवश्यकम् एव । अतः व्याकरणपरिधौ एव स्थितः मार्गः अत्र आश्रितः । तन्नाम स्वार्थे णिच् कृतः । अत्र प्रमाणं तु - *'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते'* इति प्राचीनानां वचनम् । 'क्वचित् प्रेरणार्थकणिच्प्रत्यये कृते अपि प्रेरणार्थकप्रतीतिः नास्ति' इति एतस्य वचनस्य तात्पर्यम् ।

परिवेषयतेः वाक्ये प्रयोगे किञ्चित् ज्ञातव्यम् अस्ति । 'परिवेषणं नाम व्याप्तिः । भोजना तु आर्थिकी । तस्मात् 'ब्राह्मणान् अन्नेन परिवेषयति' इति प्रयोगः एव शिष्टजुष्टः' इति वदन्ति केचन । चारुदेवशास्त्रिणः तु एतम् एव प्रयोगं समर्थयन्तः 'अतिथिपतिः अतिथीन् परिविष्य' (शौनकसंहिता - १.३.५३) इत्यादीन् प्रयोगान् दर्शयन्ति । तेषां दृष्ट्या भोक्तुः एव कर्मत्वं, न अन्नस्य । अतः 'माता अन्नं परिवेषयति' इत्येतस्मिन् प्रयोगे विप्रतिपत्तिः तेषाम् ।

प्राचीनेषु प्रयोगेषु बहुत्र भोक्तुः कर्मत्वम्, अन्नस्य करणत्वं च दृश्यते इति तु सत्यमेव । तथापि अन्नस्य कर्मत्वं सर्वथा निषिद्धं तु न । सिद्धान्तकौमुद्याः बालमनोरमाव्याख्यायां लिख्यते - *'भोजनपात्रे ओदनापूपादिभोज्यद्रव्याणां स्थापनं परिवेषणम्'* इति । (यमोऽपरिवेषणे इत्यस्य धातोः व्याख्यानावसरे) तस्मात् अन्नस्यापि कर्मत्वं शास्त्रीयम् एव इति सिद्धम् । अतः 'माता अन्नं परिवेषयति' इति प्रयोगः न दोषाय । लोके तु अयमेव प्रयोगः आधिक्येन दृश्यते । सः प्रयोगः शास्त्रसम्मतः एव इत्यतः तस्य प्रयोगे न कोऽपि दोषः इति विभावयितुं शक्यम् ।

११. भक्तः भगवन्तं **प्रार्थयति** ।

यद्यपि उपयाच्ञार्थकस्य 'अर्थ'धातोः आगर्वीयत्वेन आत्मनेपदित्वम्,

'अर्थयते' इति च रूपं, तथापि 'प्रार्थयति' इति तु न असाधुः । कौमुद्याम् एव तस्य साधुत्वं साधितम् ।

'प्रार्थयन्ति शयनोत्थितं प्रियाः' (रघु. - १९.२९) इति कालिदासस्य प्रयोगः* । परस्मैपदित्वलाभाय स्वार्थे णिच् क्रियते । 'निवृत्त-प्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' इति भाष्योक्तिः (*'णेरणौ...' इति सूत्रे*) अत्र प्रमाणम् । 'व्यापारहीनात् धातोः णिचि कृते शुद्धेन तुल्यः अर्थः प्रतीयते' इति तस्य वचनस्य तात्पर्यम् । अतः 'प्रार्थयति' इति परस्मैपदिप्रयोगः न दोषाय । 'प्रार्थयते' इति आत्मनेपदिप्रयोगस्तु प्रशस्ततरः ।

१२. मन्दहासपूर्वकम् **आशीर्वदति** गुरुः ।

'आशीर्वदति' इति तिङन्तरूपं नास्ति । **'आशिषं वदति'** इति प्रयोगः एव साधुः ।

'आशीर्वाद'शब्दं श्रुत्वा भ्रान्त्या केचन 'आशीर्वदति' इति रूपं प्रयुञ्जते । आशीर्वादः इत्यत्र तु 'आशिषः वादः' इति षष्टीतत्पुरुष-समासः । तत्र आशीर्वादयोः योगं दृष्ट्वा कैश्चित् भ्रान्त्या लटि अपि तयोः योगः क्रियते । न हि आशीश्शब्दस्य गतिसंज्ञा अस्ति, येन च सः क्रियापदेन सह पूर्वप्रयोगं प्राप्नुयात् । आशीश्शब्दस्य तु कर्मत्वम् एव । आशीश्शब्दः सकारान्तः स्त्रीलिङ्गः ।

१३. यदि आतङ्कवादविषये प्रतीकारः न चिन्त्यते तर्हि जनाः प्रतिदिनं

---

* 'प्रार्थयन्ति...' इति माघस्य प्रयोगः इति कौमुद्याः व्याख्यायां तत्त्वबोधिन्यां, बालमनोरमायां च लिखितम् । तत् तु प्रामादिकम् एव । माघकाव्ये तादृशः प्रयोगः क्वापि न दृश्यते ।

''रघुवंशपुस्तकेषु 'प्रार्थयन्ति....' इति पाठः क्वापि न दृश्यते । सर्वत्रापि 'प्रार्थयन्त...' इति पाठः एव दृश्यते । 'प्रार्थयन्त'.. इत्येतत् तु लङन्तम् । तत् तु आत्मनेपदिरूपम् एव । अतः तत्र 'निवृत्तप्रेषणात् धातोः....' इत्यादियुक्तिम् अवलम्ब्य समाधानकथनस्य न कापि आवश्यकता । अतः कौमुदीकारेण अस्थाने एव समर्थनप्रयासः कृतः इति भाति'' इति वदन्ति केचन ।

एतद्विषये एवम् ऊह्यते - ''कौमुदीकारेण प्रायः 'प्रार्थयन्ति....' इति पाठः एव दृष्टः । (तेन तद्वाक्यं कुत्रत्यम् इति तु न उक्तम् इति स्मर्तव्यम् ।) अतः सः तस्य समर्थनाय युक्तिं दर्शितवान् । इदानीम् रघुवंशे उपलभ्यमानेषु पाठेषु 'प्रार्थयन्त....' इति आत्मनेपदिप्रयोगः एव अस्ति'' इति ।

**मरिष्यन्ति** ।

**'मरिष्यन्ति'** इति साधु एव ।

प्राणत्यागार्थकः मृङ्धातुः आत्मनेपदी । किन्तु *'म्रियतेर्लुङ्लिङोश्च' (१.३.६१)* इति सूत्रेण लुङ्लिङोः शिति च आत्मनेपदित्वं विहितम् । 'मरिष्यति' इत्यत्र 'स्य'प्रत्ययः न शित् । अतः तस्य न आत्मनेपदित्वं प्राप्तम् । तस्मात् 'मरिष्यति' इति रूपम् । एवं च आत्मनेपदिनः अपि मृङ्धातोः भविष्यद्रूपं परस्मैपदिनः इव भवति । (तिबादयः भवन्ति, न तु तङादयः)

१४. आपणिकः वस्तूनि **विक्रीणाति** ।

'विक्रीणाति' इति अपशब्दः । **विक्रीणीते'** इति आत्मनेपदिरूपं प्रयोक्तव्यम् ।

यद्यपि क्रीञ्धातुः उभयपदी, तथापि 'वि' इत्यस्य उपसर्गस्य योगे तु नित्यम् आत्मनेपदी । *'परिव्यवेभ्यः क्रियः' (१.३.१८)* इति सूत्रेण आत्मनेपदित्वं विहितम् । तच्च नित्यम् । अतः 'विक्रीणीते' इत्येव रूपम् । व्यवाद्युपसर्गरहितः तु क्रीञ् उभयपदी । अतः क्रीणाति / क्रीणीते इति रूपद्वयम् अपि साधु ।

१५. श्रमः एव **जयते** ।

'जयते' इति अपशब्दः । **'जयति'** इति प्रयोक्तव्यम् ।

जयार्थकः जिधातु परस्मैपदी एव । अतः जयति इत्येव शुद्धम् । 'सत्यम् एव जयते' इत्यत्र जिधातोः आत्मनेपदित्वं दृष्ट्वा अत्रापि 'जयते' इति प्रयोगः कृतः । 'सत्यमेव...' इति तु छान्दसं वाक्यम् । 'श्रमः एव...' इति तु लौकिकं वाक्यम् । लोके तु जयतिः परस्मैपदी एव । विपराभ्यां योगे तस्य आत्मनेपदित्वं विहितम् इति तु अन्यदेतत् । तस्मात् विधानात् 'विजयते' 'पराजयते' इत्यनयोः आत्मनेपदिरूपयोः सिद्धिः ।

१६. वयं श्वः **प्रस्थास्यामः** ।

'प्रस्थास्यामः' इति अपशब्दः । **'प्रस्थास्यामहे'** इति प्रयोक्तव्यम् ।

गतिनिवृत्त्यर्थकः स्थाधातुः केवलः परस्मैपदी । (तिष्ठति इति रूपम्) सः एव 'सम्-अव-प्र-वि' इत्येतैः उपसर्गैः युक्तः आत्मनेपदित्वं प्राप्नोति । *'समवप्रविभ्यः स्थः' (१.३.२२)* इति सूत्रम् । अतः

'प्रतिष्ठते' इति लटि रूपम् । प्रस्थास्यते इति तु लृटि ।

१७. मया न कदापि असत्यपक्षः **आश्रियते** ।
'आश्रियते' इति अशुद्धम् । **'आश्रीयते'** इति प्रयोक्तव्यम् ।
सेवार्थकस्य श्रिञ्धातोः कर्मणि यकि *'अकृत्सार्वधातुकयोः दीर्घः'* *(७.४.२५)* इति सूत्रेण दीर्घः विधीयते । अतः 'आश्रीयते' इति रूपं भवति ।

१८. अहो, अत्र मशकाः **दंशन्ति** माम् ।
**'दंशति 'दशति'** इति उभयथा अपि प्रयोगः शक्यः ।
'दंश-दशने' इति प्रथमगणे पठितम् । तस्य *'दंशसञ्जस्वञ्जां शपि'* *(६.४.२५)* इति सूत्रेण *उपधा-नकारकस्य (अनुस्वारस्य) लोपे 'दशति' इति रूपम् ।
'दशि दंशने' इति दशमगणे अपि पाठः कृतः । सः आकुस्मीयः । आकुस्मीयत्वात् आत्मनेपदित्वम् । दंशयते इति रूपम् । आकुस्मीयम् आत्मनेपदं णिचः योगे एव । णिचः विकल्पात् णिज्रहितस्य रूपस्य सिद्धिः । धातोः इदित्त्वात् नुम् । तस्मात् 'दंशति' इति रूपम् । एतद्विषये कौमुदीपङ्क्तिः -

> *''आकुस्मीयम् आत्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः । इदित्वाण्णिजभावे दंशति । नलोपे सञ्जिसाहचर्यात् श्नादेरेव ग्रहणम्''* इति ।

एवं च 'दंश दशने' इत्यस्य **'दशति'** इति रूपम् । 'दशि दंशने' इत्यस्य णिजभावे इदित्वान्नुमि **'दंशति'** इति रूपम् । अतः दशति, दंशति इति उभयोः अपि सिद्धिः । धातुभेदस्तु अस्ति । अर्थभेदः नास्ति ।

१९. अहो, मशकानां **दंशनं/दशनं** सोढुं न शक्यम् ।
**दंशनं दशनं** चेति उभयम् अपि साधु ।
'दंश दशने' इति धातुपाठे 'दशने' इति निर्देशात् नकारलोपे **'दशनम्'** इति रूपम् । 'दंशेः करणे ल्युटि नलोपो वाच्यः इति नलोपः' इति धातुकाव्यव्याख्याने (२.४०) दृश्यते । दशिधातोः इदित्वात् नुमि

---

* 'उपधा' इति काचित् संज्ञा । अन्तिमात् वर्णात् पूर्वं स्थितः वर्णः 'उपधा'संज्ञायुक्तः इति उच्यते ।

**'दंशनम्'** इत्यपि रूपम् । दंशधातोः लटि इव करणार्थके ल्युटि रूपद्वयस्यापि सिद्धिः, धातुभेदात् ।

२०. पाचकः पाकाय अग्निं **प्रज्वालयति** ।

**'प्रज्वालयति'** इति रूपं न असाधु ।

ज्वलधातोः *'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' (ग.सू. १८९)* इति गणसूत्रेण विकल्पेन मित्वात् अनुपसर्गे रूपद्वयं - ज्वलयति, ज्वालयति चेति । उपसर्गे तु नित्यं मित्वम् । *'मितां ह्रस्वः'* इति ह्रस्वः । **प्रज्वलयति** इति रूपम् । 'प्रज्वालयति' इति रूपं न सिध्यति अत्र । प्रज्वालयति इति रूपं तु लोके दृश्यते । अतः कौमुद्याम् उच्यते -

*''कथं तर्हि प्रज्वालयति इति ? घञन्तात् 'तत्करोति' इति णौ''* इति । एतस्य अयम् अर्थः - प्रज्वलनं प्रज्वालः । भावे घञ् । 'प्रज्वलनं करोति' इत्यर्थे 'तत्करोति तदाचष्टे' इति णिच् । प्रज्वालि इति णिजन्तरूपम् । अत्र मित्त्वप्रयुक्तह्रस्वस्य न प्रसक्तिः । ततः शबादिषु कृतेषु **'प्रज्वालयति'** इति रूपम् ।

सिद्धान्तकौमुद्याम् एव समर्थितम् इत्यतः 'प्रज्वालयति' इत्यस्य प्रयोगः अपि न दोषाय इति सिद्धम् ।

२१. सः सर्वदा विना कारणं मां **तर्जयति** ।

**'तर्जयति'** इति प्रयोगः न असाधुः ।

तर्जधातुः आत्मनेपदी । अतः तर्जयते इति रूपम् । 'तर्जयन् इव केतुभिः' इत्यादिप्रयोगदर्शनात् कौमुद्याः तत्त्वबोधिनीटीकायां (माधवीयधातुवृत्तौ च) उच्यते - *'णिजन्तादस्मात् भौवादिकात् तर्जतेर्वा हेतुमण्णिचि बोध्यः'* इति । तन्नाम 'परिवेषयति'प्रभृतिषु यथा उक्तं (क्रि.प. - १०) तथा 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' इत्येतत् वचनम् अवलम्ब्य स्वार्थे णिच् करणीयः । तस्मात् **'तर्जयति'** इत्यपि सिद्धम् ।

एवम् एव **'भर्त्सयति'** इत्यपि । कृदन्तरूपमालायाम् उच्यते - *''क्षीरस्वामी तु 'लक्ष्ये भर्त्सयति... इति दृश्यते' इत्याह । तेनास्य धातोः परस्मैपदमपि भवतीति ज्ञेयम्''* इति । तस्मात् भर्त्सयति इति रूपं साधितं भवति । भर्त्सयते इति आत्मनेपदित्वेन प्रयोगः तु अस्ति एव ।

**२२.** मित्र ! पुनर्मिलामः । **आपृच्छामि** भवन्तम् ।
'आपृच्छामि' इति अपशब्दः । **'आपृच्छे'** इति प्रयोक्तव्यम् । प्रच्छधातुः आङुपसर्गयोगे आत्मनेपदित्वं प्राप्नोति । *'आङि नुप्रच्छ्योः'* इति वार्तिकम् । तस्मात् लटि प्रथमपुरुषैकवचने 'आपृच्छते' इति रूपम् ।
प्राचीनप्रयोगो यथा -
❖ **'आपृच्छस्व** प्रियसखममुम्.....'
- मेघदूतम्
❖ यावन्मातरमा**पृच्छे** ।
- रामायणम् - २.१९.२५

**२३.** अद्य मम गुरोः **आपृच्छनसमारम्भः** अस्ति ।
'आपृच्छनम्' इति अपशब्दः । **'आप्रच्छनम्'** इति प्रयोक्तव्यम् । धातुः 'प्रच्छ' इति, न तु 'पृच्छ' इति । ल्युटि सम्प्रसारणस्य न कोऽपि अवकाशः । सम्प्रसारणे सत्येव रेफस्य ऋकारः ।(प्र' इत्यस्य स्थाने 'पृ') लटि तु सम्प्रसारणम् अस्ति । अतः पृच्छति इति रूपम् ।

**२४.** यदि भवान् अपि आगमिष्यत् तर्हि **अलभिष्यत** ।
**'अलप्स्यत'** इति वक्तव्यम् । 'अलभिष्यत' इति अपशब्दः । प्राप्त्यर्थकः लभधातुः अनिट् । अतः इटः प्राप्तिः न । तस्मात् 'अलप्स्यत' इत्येव रूपम् ।

**२५.** एतां **गोष्ठीम्** अध्यक्षवर्यः **स्वीकरोति** ।
**'गोष्ठीं निर्वहति'** इति प्रयोगः उचितः स्यात् ।
स्वीकरणं नाम आदानम् । प्रकृतवाक्ये आदानं न अपेक्ष्यते । आदानेन न कोऽपि अर्थः अत्र । गोष्ठी तु निरुह्यते, न तु स्वीक्रियते । अतः 'गोष्ठीं निर्वहति' इति प्रयोगः एव औचित्यम् आवहति । प्रादेशिकभाषायां निर्वहणार्थे स्वीकारस्य प्रयोगः दृश्यते । तदनुकुर्वन्तः एतादृशानि वाक्यानि प्रयुञ्जते केचन ।

**२६.** सः प्रथमं स्थानं प्राप्तुं बहुधा **प्रयतितवान्** ।
'प्रयतितवान्' इति असाधु । **'प्रयत्तवान्'** इति प्रयोक्तव्यम् । प्रयत्नार्थकः यतीधातुः ईदित् । तस्य निष्ठासंज्ञके क्तवतुप्रत्यये परे

*'श्वीदितो निष्ठायाम्' (७.२.१४)* इति सूत्रेण इण्निषेधः । अतः 'प्रयत्तवान्' इत्येव रूपम् ।
यद्याग्रहः प्रयतितवान् इति विषये तर्हि यतीधातोः णिचि क्तवतुवति रूपमिदं स्वीक्रियताम् । *'निवृत्तप्रेषणाद्धातोः ...'* इति आश्रीयताम् ।

२७. पृष्ठतः स्थितः बालकः अग्रे स्थितं **नोदितवान्** ।
**'नुन्नवान्'** इति प्रयोगः वरम् ।
प्रेरणार्थकस्य णुदधातोः क्तवतुप्रत्यये न इट्, यतः णुदधातुः अनिट् । अतः नुन्नवान् इति रूपम् । (नुत्तवान् इत्यपि) नोदितवान् इति रूपं तु ण्यन्ते स्यात् । ण्यन्तरूपः अर्थः अत्र न विवक्षितः ।

२८. सः जलेन सस्यानि **सिञ्चितवान्** ।
**'सिक्तवान्'** इति प्रयोक्तव्यम् ।
क्षरणार्थकः षिचधातुः अनिट् । अतः क्तवतुप्रत्यये इटः सद्भावः न । णिचि तु सेचितवान् इति स्यात् । अतः 'सिञ्चितवान्' इति रूपम् असाधु एव ।
'सिञ्चति' इत्यत्र *'शे मुचादीनाम्' (८.१.५९)* इति सूत्रेण नुम् । 'श'प्रत्यये एव एषः नुम्, न अन्यत्र ।

२९. कृषिकः कूपं **खनितवान्** ।
**'खातवान्'** इति प्रयोक्तव्यम् । 'खनितवान्' इति अपशब्दः ।
अवदारणार्थकः खनुधातुः उदित् । उदित्त्वात् क्त्वायाम् इड्विकल्पः । तस्मात् *'यस्य विभाषा'* इति सूत्रेण निष्ठायाम् इटः निषेधः । *'जनसनखनां सञ्झलोः' (६.४.४२)* इति सूत्रेण आत्वम् । अतः खातवान् इति रूपम् ।

३०. बालकः रज्जुम् **आकर्षितवान्** ।
**'आकृष्टवान्'** इति प्रयोगः वरम् ।
कृषधातुः अनिट् । अनिट्त्वात् क्तवतुप्रत्ययस्य न इट् । तस्मात् कृष्टवान् इति रूपम् । ण्यन्ते तु कर्षितवान् इति रूपम् । ण्यन्तार्थः अत्र न अभिप्रेतः । अतः आकृष्टवान् इति प्रयोगः एव वरम् ।

३१. सर्पः मूषकं **गिलितवान्** ।
**'गीर्णवान्'** इति वक्तव्यम् । 'गिलितवान्' इति अपशब्दः ।
*'गृ'*धातोः *'ऋत इद्धातोः' (७.१.१००)* इति सूत्रेण इकारे *'हलि*

च' (८.२.७७) इति सूत्रेण इकारस्य दीर्घे गीर्णवान् इति रूपम् । वस्तुतः अयं सेट् । *'लिङ्सिचोरात्मनेपदेषु'* इति तङि इड्विकल्पः । *'समः प्रतिज्ञाने'* इति सूत्रेण समुमसर्गयोगे प्रतिज्ञार्थे आत्मनेपदित्वम् । तङि इटः विकल्पेन विधानात् *'यस्य विभाषा'* इत्यनेन निष्ठायाम् इटः निषेधः । अतः गीर्णवान् इति इड्रहितं रूपम् ।

'गॄ निगरणे' इत्येतस्य धातोः अन्यानि अपि कानिचन रूपाणि विशिष्टानि भवन्ति । तानि कानिचन यथा –

❖ लृट् - गरिष्यति / गरीष्यति
गलिष्यति / गलीष्यति

❖ तव्यत् - गलितव्यम् / गलीतव्यम्
गरितव्यम् / गरीतव्यम्

❖ अनीयर् - गलनीयम् / गरणीयम्

❖ तुमुन् - गलितुम् / गलीतुम्, गरितुम् / गरीतुम्

❖ ल्युट् - गरणम्

लटि गकारोत्तरम् इकारः यः श्रूयते सः उपरि दर्शितेषु रूपेषु नास्ति इत्येतम् अंशं मनसि स्थापयन्तु ।

३२. जनाः शर्मवर्यं नायकत्वेन **चयितवन्तः** ।
**'चितवन्तः'** इति प्रयोक्तव्यम् । 'चयितवन्तः' इति असाधु । चयनार्थकः 'चिञ्'धातुः अनिट् । क्तवतुप्रत्यये 'चितवत्' इति प्रादिपदिकरूपम् । पुंसि चितवान् इति ।

३३. मध्यरात्रे सः **जागृतः** जातः ।
'जागृतः' इति अपशब्दः । **'जागरितः'** इति प्रयोक्तव्यम् । निद्राक्षयार्थकः जागृधातुः सेट् । तस्मात् क्तप्रत्यये इडागमे 'जागरितः' इति रूपम् ।

३४. अयि सुहृदः, उत्तिष्ठत, **जाग्रत**, कार्याय गच्छत ।
**'जागृत'** इति प्रयोक्तव्यम् । 'जाग्रत' इति रूपम् असाधु । लोटः मध्यमपुरुषबहुवचनम् अत्र विवक्ष्यते । जागृधातोः लोटि मध्यमपुरुषबहुवचने 'जागृत'* इति रूपम् । रेफविशिष्टं रूपं तु

---

* उत्तिष्ठत, जाग्रत, प्राप्य वरान् निबोधत' इत्यस्मिन् वाक्ये 'जाग्रत' इति रेफविशिष्टं रूपं दृश्यते । तच्च कठोपनिषदः वाक्यम् । छान्दसत्वात् तस्य तत्र साधुता । लौकिकप्रयोगः तु 'जागृत' इत्येव ।

भ्रान्त्या प्रयुज्यते ।

३५. सः **अपक्तं** शाकम् एव खादति ।
'अपक्तम्' इति असाधु । **'अपक्वम्'** इति प्रयोक्तव्यम् ।
पाकार्थकस्य पचधातोः क्तप्रत्यये *'पचो वः' (८.२.५२)* इति सूत्रेण निष्ठातकारस्य वकारः । वकारप्राप्तिः न विकल्पेन । अतः पक्तः इति रूपं न भवति । 'पक्वः' इत्येव प्रयोक्तव्यम् ।

३६. स्पर्धायाम् अहं (प्रतिस्पर्धिनं) **जितः** ।
**'जितवान्'** इति प्रयोक्तव्यम् ।
अत्र अहं जयं प्राप्तवान् इत्यर्थः अपेक्षितः । स च अर्थः 'जितः' इत्यनेन न प्राप्यते । प्रत्युत 'पराजयं प्राप्तवान्' इत्यर्थः प्राप्यते । जिधातुद्वयम् अस्ति । एकः जयार्थकः । अपरः अभिभवार्थकः । जयः नाम सर्वोत्कर्षेण स्थितिः । जयार्थकः जिधातुः अकर्मकः । सः कर्तरि क्तप्रत्ययम् अर्हति । तदा जितः नाम सर्वोत्कर्षेण स्थितवान् इति अर्थः भवति । स च अर्थः अत्र न अभिप्रेतः । अतः एव प्रतिस्पर्धिनम् इति कर्मणः निर्देशः कृतः आवरणे । अभिभवार्थकः जिधातुः सकर्मकः । सः कर्तरि क्तप्रत्ययं न प्राप्नोति, अपि तु कर्मणि एव । कर्तरि क्तवतुप्रत्ययः प्रयोक्तव्यः । अतः 'अहं प्रतिस्पर्धिनं जितवान्' इति वाक्यविन्यासः उचितः ।
अहं जितः इत्यत्र कर्मणि क्तप्रत्ययः इत्यतः तस्य वाक्यस्य कर्ता स्यात् 'अन्येन' इति पदेन बोध्यः । तदा च 'अन्येन अहं जितः', तन्नाम 'अहं पराजयं प्राप्तवान्' इत्यर्थस्य प्रतीतिः स्यात् ।

३७. सः मित्रगृहे द्वित्राणि दिनानि **उषितुम्** इष्टवान् ।
'उषितुम्' इति अपशब्दः । **'वस्तुम्'** इति प्रयोक्तव्यम् ।
निवासार्थकस्य वसधातोः अकिति न सम्प्रसारणम् । 'तुमुन्' तु न कित् । सम्प्रसारणविधायकं सूत्रं तु - *'वचिस्वपियजादीनां किति' (६.१.१५)* इति । यजादयः नव धातवः । ते च -

*'यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ इत्यपि ।*
*ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव'* इति ।

उषितुम् इति प्रयोगः 'उषित्वा' इत्यादीन् अनुकुर्वद्भिः क्रियते प्रायः । उषित्वा इत्यत्र तु कित्त्वात् सम्प्रसारणम् । तुमुनि तु अकित्त्वात्

सम्प्रसारणाभावः ।

३८. शर्मवर्यः **उपन्यस्तुं** नगरान्तरं गतवान् ।

'उपन्यस्तुम्' इति अपशब्दः । **'उपन्यसितुम्'** इति प्रयोक्तव्यम् । उपन्यस्यति इत्यत्र उप + नि इत्येताभ्याम् उपसर्गाभ्यां युक्तः क्षेपणार्थकः असुधातुः । स च सेट् । अतः तुमुनि इट् स्यादेव । निष्ठायाम् इडभावयुक्तं रूपं दृष्ट्वा तत्सादृश्यात् भ्रान्त्या तुमुनि अपि इडभावोपेतं रूपं प्रयुञ्जते केचन ।

३९. शैत्यकाले अपि **तर्तुं** मम इच्छा भवति एव ।

'तर्तुम्' इति अपशब्दः । **तरितुम्/तरीतुम्** इति प्रयोक्तव्यम् । तॄधातुः सेट् । तुमुनि *'वॄतो वा' (७.२.३७)* इति सूत्रेण इटः विकल्पेन दीर्घः। दीर्घे प्राप्ते 'तरीतुम्' इति, दीर्घस्य अभावे 'तरितुम्' इति च रूपम् । धातोः सेट्कत्वात् इड्रहितं तुमुन्नन्तरूपं तु नास्ति । *'आर्धधातुकस्य इड्वलादेः' (७.२.३५)* इति सूत्रेण इडागमः ।

४०. दुष्टः शुनकः स्वामिना **बद्धव्यः** ।

'बद्धव्यः' इति असाधु । **'बन्धव्यः'** इति प्रयोक्तव्यम् ।

'बन्ध' इति नकारसहितो धातुः । तस्य तव्यति नकारस्य लोपस्य न काऽपि प्रसक्तिः । अतः 'बन्धव्यम्' इति रूपम् ।

बद्धव्यम् इति यः असाधुप्रयोगः क्रियते तस्य मूलं तु 'तव्यदन्तरूपं क्तप्रत्ययान्तसदृशम्' इति भ्रान्तिः । क्तप्रत्यये त *'अनिदिताम्...' (६.४.२४)* इति सूत्रेण नकारलोपः । अतः 'बद्धः' इति रूपम् । तव्यति न नकारलोपः । अतः नकारसहिततया (बन्धव्यम् इति) प्रयोक्तव्यम् ।

४१. कार्यक्रमार्थं के **आह्वयितव्याः** इति चिन्तनीयम् ।

'आह्वयितव्याः' इति अपशब्दः । **'आह्वातव्याः'** इति प्रयोक्तव्यम् ।

स्पर्धार्थकः ह्वेञ्धातुः एजन्तः । अतः *'आदेच उपदेशे अशिति' (६.१.४५)* इति सूत्रेण धातोः आत्वं तव्यति परे । तस्मात् 'आह्वातव्यम्' इति रूपस्य सिद्धिः । एतस्य धातोः अनिट्कत्वात् न इडागमः ।

४२. 'भगवतः नाम सहस्रवारं **जप्तव्यम्**' इति गुरुः उक्तवान् ।

'जप्तव्यम्' इति रूपम् असाधु । **'जपितव्यम्'** इति प्रयोगः करणीयः ।
जपधातुः सेट् । तव्यति *'आर्धधातुकस्य इड्वलादेः' (७.२.३५)* इत्यनेन इडागमः । इड्रहितं रूपं कथमपि न सिध्यति ।

४३. एवं त्वया न **इच्छितव्यम्** आसीत् ।
'इच्छितव्यम्' इति अपशब्दः । **'एष्टव्यम्'** इति प्रयोक्तव्यम् ।
इच्छार्थकस्य इषधातोः तव्यति गुणे 'एष्टव्यम्' इति रूपम् । लटि तु *'इषुगमियमां छः' (७.३.७७)* इति सूत्रेण शे परे छकारस्य आदेशः । अतः इच्छति इति रूपम् । तव्यति तु छकारस्य न प्रसक्तिः ।

४४. भिक्षुकाय वस्त्रं **ददन्** धनिकः सन्तुष्टः ।
'ददन्' इति अपशब्दः । **'ददत्'** इति वक्तव्यम् ।
शत्रन्तात् पुंसि प्रथमैकवचने *'उगिदचां सर्वनामस्थाने अधातोः' (७.१.७०)* इति सूत्रेण नुमागमः । तस्मात् गच्छन्, पठन्, लिखन् इत्यादीनि रूपाणि सिध्यन्ति । अतः प्रथमैकवचने नकारश्रवणम् । दाधातुः तृतीयगणीयः । तृतीयगणीयाः धातवः शतरि 'अभ्यस्त'[1]-संज्ञां प्राप्य द्वित्वं प्राप्नुवन्ति । *'नाभ्यस्ताच्छतुः' (७.१.७८)* इति सूत्रेण नुमः निषेधः । तस्मात् प्रथमैकवचने नकारः न श्रूयते, अपि तु तकारः एव । तृतीयगणीयानां सर्वेषाम् अपि शत्रन्तानाम् एषा एव स्थितिः ।

४५. बालिका कार्यं **कुर्वन्ती** सम्भाषणं करोति ।
'कुर्वन्ती' इति अपशब्दः । **'कुर्वती'** इति प्रयोक्तव्यम् ।
पठन्ती, लिखन्ती इत्यादिषु नुम् दृश्यते । अदन्ताङ्गत्वे सत्येव शतरि स्त्रियां नुम्। कृञ्धातुः अष्टमगणीयः । तस्य शतरि न अदन्ताङ्गत्वम् । अतः न नुम् । तस्मात् कुर्वती इत्येव रूपम्, न तु कुर्वन्ती इति । एवमेव २, ३, ५, ७,९ गणीयानाम् अपि न नुम् । द्वितीयगणीयानां 'याति'प्रभृतीनां १४ धातूनां विकल्पेन नुम् । अन्येषां न[2] ।

---

१. 'अभ्यस्तम्' इति काचित् संज्ञा । यत्र (षाष्ठद्वित्वप्रकरणे) धातोः द्वित्वं तत्र तयोः उभयोः समुदायस्य 'अभ्यस्त'संज्ञा भवति । *(उभे अभ्यस्तम् - ६.१.५)*

२. विस्तरस्तु 'शतृशानजन्तमञ्जरी'पुस्तकस्य परिशिष्टे द्रष्टव्यः ।

४६. कार्यं **क्रियमाणः** सः वेतनं लभते ।
**कुर्वन्/कुर्वाणः** इति प्रयोक्तव्यम् ।
'क्रियमाणः' इति पदम् अस्थाने । क्रियमाणः इत्यत्र कर्मणि शानच् । उपरि निर्दिष्टे वाक्ये कर्त्रर्थे प्रत्ययः (शतृप्रत्ययः शानच् वा) अपेक्षितः ।
एतस्य विवरणम् एवम् अस्ति -
- 'नमति' इत्यत्र कर्त्रर्थे तिप् । नमधातुः परस्मैपदी । अतः शतृ-प्रत्ययः । शतृप्रत्ययान्तं नमन् इति रूपं कर्तुः विशेषणम् ।
  यथा - देवं **नमन्** रामः...
- 'वन्दते' इत्यत्र कर्त्रर्थे तङ् । वदि(वन्द)धातुः आत्मनेपदी । अतः शानच्प्रत्ययः । शानच्प्रत्ययान्तं 'वन्दमानः' इति रूपं कर्तुः विशेषणम् ।
  यथा - देवं **वन्दमानः** रामः....
  एवं पूर्वोक्तौ उभौ अपि शतृशानचौ कर्त्रर्थे स्तः । अतः तदन्तं रूपं कर्तुः विशेषणं भवति ।
- रामेण पाठः पठ्यते - इत्यत्र पठ्धातोः कर्मणि तङ् । अतः शानच्प्रत्ययः । तदन्तं रूपं कर्मणः विशेषणम् ।
  यथा - रामेण **पठ्यमानः** पाठः.....

एतस्मात् स्पष्टं यत् कर्त्रर्थे शतृशानचौ चेत् तदन्तं रूपं कर्तुः विशेषणं भवति । कर्मार्थे शानच् चेत् तदन्तं रूपं कर्मणः विशेषणं भवति इति । तस्मात् 'क्रियमाणः सः' 'पठ्यमानः रामः' इत्यादयः प्रयोगाः न सम्भवन्ति पूर्वोक्ते अर्थे ।

४७. '**उष्यमाणं** गृहम्', '**गम्यमानः** मार्गः', ....
एतौ उभौ अपि प्रयोगौ दुष्टौ । पूर्ववाक्ये दृष्टं यत् कर्मणि शानच् यदा क्रियते तदा तदन्तं रूपं कर्मणः एव विशेषणं भवति इति । उष्यमाणः गम्यमानः इत्यादिषु कर्मणि शानच् कृतम् । तदन्तरूपस्य विशेष्यभूतौ गृहमार्गौ न हि कर्मभूतौ । अतः एतादृशी आनुपूर्वी सर्वथा न सम्भवति ।
**'यत्र उष्यते तत् गृहम्' 'येन गम्यते सः मार्गः'** इति यत्तच्छब्दयोः साहाय्येन अपेक्षितः अर्थः अवगमनीयः भवति । केनचिदपि

प्रत्ययान्तेन पदेन अयं भावः प्रकाशयितुं न शक्यः ।

प्रादेशिकभाषासु अधिकरणादीनाम् अपि विशेषणत्वेन क्रिया प्रयुज्यते । अतः तादृशानां विषये अवधानं स्यात् ।

तादृशानि अन्यानि कानिचन यथा -

| अशुद्धम् (✗) | शुद्धम् (✓) |
|---|---|
| ◆ क्रीयमाणः आपणः | यत्र वस्तूनि क्रीयन्ते सः आपणः |
| ◆ शय्यमानः प्रकोष्ठः | यत्र शय्यते सः प्रकोष्ठः |
| ◆ गम्यमानं लोकयानम् | येन जनाः गच्छन्ति तत् लोकयानम् |
| ◆ सुप्यमाना शय्या | यत्र सुप्यते सा शय्या[१] |
| ◆ लिख्यमानं कागदम् | यत्र लिख्यते तत् कागदम् |
| ◆ उपविश्यमानः आसन्दः | यस्मिन् उपविश्यते सः आसन्दः |
| ◆ स्नायमाना नदी | यस्यां स्नायते सा नदी |

४८. सः ग्रन्थं **पठितः** ।

'पठितः' इति अस्थाने । **'पठितवान्'** इति प्रयोक्तव्यम् ।

अत्र कर्त्रर्थे प्रत्ययः इष्यते । सकर्मकधातुभ्यः (गत्यर्थकात् अकर्मकात् च अन्येभ्यः) कर्मणि एव क्तप्रत्ययः, न तु कर्तरि । अतः 'पठितः' इत्यत्र कर्मणि क्तः । पूर्वदर्शितं वाक्यं कर्तरि अस्ति । कर्तरि क्तवतुप्रत्ययः । अतः 'पठितवान्' इत्येव प्रयोक्तव्यम् ।

क्तप्रत्यसङ्ग्रहः इत्थम् -

- सर्वे सकर्मकाः धातवः कर्मणि क्तप्रत्ययं प्राप्नुवन्ति ।
  यथा - तेन ग्रन्थः **पठितः** ।
- अकर्मकाः सर्वे भावार्थे क्तप्रत्ययं प्राप्नुवन्ति ।
  यथा - पुष्पेण **विकसितम्** ।
- अकर्मकाः सर्वे कर्त्रर्थे अपि क्तप्रत्ययं प्राप्तुवन्ति ।
  यथा - **उत्थितः/उत्थितवान्** सः .....
  एवं कर्मार्थे भावार्थे अकर्मकेभ्यः कर्तरि च क्तप्रत्ययः स्यात् ।
- सकर्मकेषु कर्तरि गत्यर्थकाः (श्लिषादयः केचन च) एव क्तप्रत्ययं

---

१. एतस्मिन् अर्थे 'शयनीयं शय्या' इत्येषः प्रयोगः भवितुम् अर्हति इति वदति दुर्घटवृत्तिकारः शरणदेवः । *'कृत्यल्युटो बहुलम्'* (३.३.११३) इति सूत्रेण अधिकरणार्थे तव्यत् इति वदति सः ।

प्राप्नुवन्ति, न अन्ये । सूत्रं - *'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च'* (३.४.७२)

यथा - ग्रामं **गतः** सः .....

फलितोर्थः -




४९. अरण्ये व्याघ्राः हरिणान् निश्शङ्कं **निहन्ति** ।

**'निघ्नन्ति'** इति प्रयोक्तव्यम् ।

'निहन्ति' इति तु एकवचनान्तम् । अपेक्षा तु बहुवचनान्तस्य । पठन्ति, वदन्ति इत्यादौ बहुवचनान्ते अन्तेः दर्शनात् 'निहन्ति' इत्यत्रापि बहुवचनान्तस्य भ्रमः । 'हन्ति' इत्यत्र यः नकारः श्रूयते सः धातोः, न तु 'झि'प्रत्ययसम्बन्धिनः ।

५०. इदानीं किं करणीयम् इति **योचयन्** आसीत् गणेशः ।

'योचयन्' इति असाधु । **'आलोचयन्'** इति **'आलोचमानः'** इति, **'चिन्तयन्'** इति वा प्रयोक्तव्यम् ।

'योचयति' इति क्रियापदं संस्कृते नास्ति, येन योचयन् इति रूपं सिध्येत् ।

५१. भवन्तः पुनः अपि मम गृहम् **आगमिष्यन्तु** ।

'आगमिष्यन्तु' इति अपशब्दः । **'आगच्छन्तु'** इत्येव भाव्यम् ।

लोटः कालवाचकत्वं नास्ति । भविष्यतः प्रतीतिः तु क्वचित् भवितुम् अर्हति । सर्वेभ्यः धातुभ्यः लृटि (भविष्यत्काले) 'स्य'कारस्य श्रवणात्, प्रार्थनादौ लोटि 'तु' इत्यस्य श्रवणात् च भ्रान्त्या एतदुभयम् अपि योजयित्वा आगमिष्यन्तु, दास्यन्तु इत्यादीन् प्रयोगान् कुर्वन्ति केचन ।

५२. परश्वः प्रातः एव अहम् **आगच्छामि** ।

'परश्वः आगच्छामि' इति प्रयोगः दुष्टः । 'परश्वः **आगमिष्यामि**' इति प्रयोक्तव्यम् ।

प्रादेशिकभाषायाः प्रभावतः प्रायः दाक्षिणात्याः लृटि प्रयोक्तव्ये लटं प्रयुञ्जते । संस्कृते तु 'वर्तमाने लट्, भविष्यति लृट्' इति विवेकः ।

५३. यदि भवान् **वदति स्म** तर्हि अहं **करोमि स्म** ।

एषा वाक्यरचना दोषयुक्ता । **'यदि भवान् अवदिष्यत्/वदेत् तर्हि अहम् अकरिष्यम्/कुर्याम्'** इति प्रयोक्तव्यम् ।

अत्र लटा सह 'स्म'प्रयोगः कृतः । एतस्मात् वाक्यात् भूतकालस्य (निर्वृत्तक्रियायाः) प्रतीतिः भवति । अतः 'यदि भवान् अवदत् तर्हि अहम् अकरवम्' इत्यर्थः अवबुध्यते । तादृशः अर्थः न अन्वितः, न वा अभिप्रेतः । क्रियायाः अनिष्पत्तिः, कार्यकारणभावः च अभिप्रेतः वक्त्रा । तादृशम् अर्थम् अभिव्यञ्जयितुं लृङ्लकारः प्रयोक्तव्यः । अतः **'यदि भवान् अवदिष्यत् तर्हि अहम् अकरिष्यम्'** इति वाक्यं प्रयोक्तव्यम् ।

एतस्मिन् एव अर्थे लिङ् अपि प्रयोक्तुं शक्यः । तस्मात् **'यदि भवान् वदेत् तर्हि अहं कुर्याम्'** इत्येतत् वाक्यम् अपि विवक्षितस्य अर्थस्य द्योतने समर्थः एव । लटा सह 'स्म'प्रयोगः तु एतस्मिन् अर्थे परिहरणीयः एव ।

५४. व्याघ्रं दृष्ट्वा सः **कम्पितुम् आरब्धवान्** ।

'कम्पितुम् आरब्धवान्' इति वाक्यं दोषाय । 'व्याघ्रं दृष्ट्वा सः **कम्पितः जातः**' इति प्रयोगः उचितः ।

व्याघ्रदर्शनात् तस्मिन् कम्पनक्रिया स्वयम् उत्पन्ना । तां क्रियां सः यत्नेन न आरभते । अतः 'कम्पितः जातः' इति प्रयोगः उचितः । **'व्याघ्रं दृष्टवति तस्मिन् कम्पनम् उत्पन्नम्'** इति भङ्ग्यन्तरेण अपि एषः अभिप्रायः आविष्कर्तुं शक्यः ।

५५. सः किमपि वक्तुं **प्रस्थितः** ।

'वक्तुं प्रस्थितः' इति न प्रशस्तः प्रयोगः । **'वक्तुम् उद्युक्तः'** इति प्रयोक्तव्यम् ।

अत्र प्रस्थानस्य न कोऽपि अवसरः । वक्ता उद्यमं करोति । अतः

'वक्तुम् उद्युक्तः' इति प्रयोक्तव्यम् । लोकभाषायाः प्रभावतः 'वक्तुं प्रस्थितः' इत्यादयः प्रयोगाः क्रियन्ते । एतादृशाः यत्नतः परिहरणीयाः ।

५६. रामः रावणम् **असंहरत्** ।

'असंहरत्' इति अपशब्दः । **'समहरत्'** इति प्रयोक्तव्यम् ।

'संहरति' इत्यत्र 'सम्' इति उपसर्गः 'हरति' इति लडन्तम् ।

भूतकाले लङि अडागमः भवति धातोः । स च अडागमः धातोः पूर्वं भवति, न तु उपसर्गात् पूर्वम् । अतः सम् + अहरत् ⟶ समहरत् इतिरूपम् । वाक्यप्रयोक्त्रा तु अडागमः उपसर्गात् पूर्वं कृतः । स च दोषाय ।

५७. एवम् उक्त्वा देवः **अन्तर्धानः** जातः ।

**'अन्तर्हितः** जातः' इति, **'अन्तर्धानं गतः'** इति वा प्रयोक्तव्यम् ।

'अन्तर्धानः जातः' इति अयुक्तम् ।

'धाञ्'धातोः ल्युट्प्रत्यये 'धानम्' इति रूपम् । 'क्त'प्रत्यये तु 'हितम्' इति रूपम् । *'दधातेर्हिः'(७.४.४२)* इति सूत्रेण तादौ किति हिः । अतः 'हितम्' इति रूपम् । प्रकृते वाक्ये क्तान्तं रूपम् एव इष्टम् । अतः 'अन्तर्हितः' इति प्रयोगः करणीयः ।

यदि 'अन्तर्धानशब्दप्रयोगे एव प्रीतिः तर्हि 'अन्तर्धानं गतः' इति प्रयोगः भवतु । तदा अपि न कोऽपि दोषः ।

५८. सः राजनीतिकक्षेत्रे पदं **निधत्तवान्** ।

'निधत्तवान्' इति अपशब्दः । **'निहितवान्'** इति प्रयोक्तव्यम् ।

'धाञ्'धातोः क्तवतुप्रत्यये *'दधातेर्हिः'* इति हिः भवति । तदानीं '(नि)हितवान्' इति रूपम् । धत्तवान् इति रूपं तु असाधु एव ।

५९. सचिवः योजनां **क्रियान्वेतुं** प्रयत्नं कृतवान् ।

'क्रियान्वेतुम्' इति अपशब्दः । **'क्रियान्वितां कर्तुम्'** इति, **'व्यवहारपथम् आनेतुम्'** इति वा प्रयोक्तव्यम् ।

'क्रिया'शब्दः न उपसर्गः । तस्मात् उपसर्गस्य इव धातौ अन्वयः नास्ति तस्य । अतः क्रियान्वेतुम् इति अपशब्दः । क्रियान्वितः क्रियान्वयः इत्यादिषु क्रियाशब्देन समासः दृश्यते । तस्मात् भ्रान्त्या

'क्रियान्वेति' इति क्रियापदरूपस्य सत्तां चिन्तयन्ति केचन ।

६०. रामः राक्षससंहाराय **ब्रह्मास्त्रं त्यक्तवान्** ।

**'ब्रह्मास्त्रं प्रयुक्तवान्'** इति प्रयोगः उचितः ।

योद्धा धनुः गृहीत्वा बाणं प्रवर्तयति । एतदुच्यते - 'बाणप्रयोगः' इति । त्यागः एतस्मात् अन्यः । महाभारतयुद्धे स्वजनान् दृष्ट्वा विषादं प्राप्य 'न योक्ष्ये' इति उक्त्वा अर्जुनः धनुर्बाणादीन् भूमौ स्थापितवान् । सः उच्यते - 'त्यागः' इति । एवं प्रयोग-त्यागयोः अस्ति महान् अर्थभेदः । प्रकृतं तु रामः बाणं प्रयुक्तवान्, न तु त्यक्तवान् । अतः **'बाणं त्यक्तवान्' इति प्रयोगः औचित्यं न आवहति** । 'बाणं मुञ्चति' इत्यपि बहुधा प्रयोगः कृतः दृश्यते प्राचीनैः ।

६१. सः गोष्ठ्यां सस्य प्रबन्धं **मण्डितवान्** ।

'मण्डितवान्' इति अस्थाने । **'उपस्थापितवान्'** इति प्रयोक्तव्यम् । 'मण्डितवान्' इत्यत्र भूषणार्थकः 'मडि'धातुः । अलङ्करणं मण्डनम् इति उच्यते । तथा हि कोषः - 'मण्डनं स्यादलङ्कारेऽलङ्करिष्णुनि वाच्यवत्' ( विश्व० ) इति । गोष्ठ्यां प्रबन्धस्य भूषणं न क्रियते । प्रबन्धगतः विषयः श्राव्यते । अतः प्रबन्धः उपस्थाप्यते प्रस्तूयते वा । तस्मात् तदनुगुणः एव शब्दप्रयोगः वरम् ।

६२. इतोऽपि किञ्चित् **अन्नं नयतु** भोः !

**'अन्नं स्वीकरोतु'** इति प्रयोगः शोभते ।

भोजनावसरे प्रयुक्तम् इदं वाक्यम् । परिवेष्टा भोक्तुः अन्नस्वीकारम् अभिलषति । स्वीकारार्थे नयतेः प्रयोगं करोति सः । किन्तु नयतिः न स्वीकारार्थकः । अतः स्वीकारार्थे तस्य प्रयोगः न युज्यते । एतस्यापि प्रयोगस्य कारणं प्रादेशिकभाषाप्रभावः एव ।

६३. सः नगरे निवसन् कष्टेन **भोजनादिव्ययं सम्पादयति** स्म ।

'भोजनादिव्ययं सम्पादयति' इति प्रयोगः न युक्तः ।

सम्पादयति नाम अर्जयति इत्यर्थः । न कोऽपि व्ययम् अर्जयति । व्ययाय धनं तु अर्जयितुम् अर्हति । सम्पादयतेः कर्म धनादिकं भवितुम् अर्हति, न तु व्ययादिकम् । अतः **'भोजनादिव्ययाय (व्ययार्थं वा) धनं सम्पादयति स्म'** इति, **'धनं सम्पाद्य**

**भोजनादिव्ययं निर्वहति स्म'** इति वा प्रयोक्तव्यम् । तदा एव अपेक्षितस्य अर्थस्य अभिव्यञ्जनं भवितुम् अर्हति ।

६४. भवता एतद्विषये चिन्ता **विहितव्या** नास्ति ।

'विहितव्या' इति अपशब्दः । **'विधातव्या'** इति प्रयोक्तव्यम् ।

दधातेः तादौ किति प्रत्यये परे एव 'हिः' इति आदेशः *'दधातेर्हिः' (७.४.४२)* इति सूत्रेण । तस्मात् हितादीनि रूपाणि सिद्धानि भवन्ति । तव्यत्प्रत्ययः यद्यपि तादिः तथापि कित् न । (यद्यपि आदौ तकारः अस्ति तथापि इत्संज्ञायुक्तः ककारः एतस्य नास्ति ।) तस्मात् 'हिः' इत्यस्य प्रसक्तिः अत्र न । अतः '(वि)हितव्या' इति रूपम् असाधु एव ।

६५. बालकः दशवादने **निद्रितवान्** ।

'निद्रितवान्' इति असाधु । **'निद्राणवान्'** इति प्रयोक्तव्यं, **'निद्रितः'** इति वा । **'सुप्तः'** इति तु वरम् ।

'नि' इति उपसर्गात् 'द्रा'धातोः क्तवतुप्रत्यये *'संयोगादेरातो धातोर्यण्वतः' (८.२.४३)* इति सूत्रेण क्तवतुप्रत्ययावयवस्य तकारस्य (निष्ठातकरस्य) नकारः । ततः णत्वे 'निद्राणवान्' इति रूपम् । 'निद्रितवान्' इति रूपं तु न भवति क्तवतुप्रत्यये परे ।

'निद्रितः' इत्यत्र तारकादिभ्यः इतच् । 'निद्रायुक्तः' इति तात्पर्यं भवति ।

'निद्रितवान्' इति प्रयोगः तु क्रियते भ्रान्त्या एव ।

६६. अद्यत्वे अध्यापकाः परीक्षायाम् उत्तराणि **लेखापयन्ति** ।

'लेखापयन्ति' इति अपशब्दः । **'लेखयन्ति'** इति प्रयोक्तव्यम् ।

लिखधातोः णिचि लेखयति इति रूपम् । णिचि परे आत्वस्य अभावात् *'अर्तिह्री..(७.३.३६)* इति सूत्रेण न पुक् । अतः 'लेखापयति' इति रूपं न भवति ।

यदि पुक् इष्यते एव तर्हि 'लिखापयति' इति रूपं कथञ्चित् समर्थनीयम् (गुणरहितम्) । मनोरमायाम् इत्थं समर्थ्यते - ''अयनम् आयः प्राप्तिः । लिखस्य आयः लिखायः । तं करोति इति लिखापयति'' इति ।

स्थितस्य गतेः चिन्ततार्थम् अत्र अयं क्रमः आश्रितः दृश्यते । अतः

तस्य परिहारः एव वरम् । 'लेखयति' इत्येव प्रयोगः शोभते ।

६७. एतं विषयं वयं श्वः **चर्चिष्यामः** ।

**'चर्चयिष्यामः'** इति प्रयोगः वरम् ।

अध्ययनार्थकः चर्चधातुः दशमगणीयः । चर्चयति इति लटि प्रथम-पुरुषैकवचनान्तं रूपम् । लृटि 'चर्चयिष्यति' इति रूपम् । धातुरयं सेट् इत्यतः *'णेरनिटि'* इति सूत्रेण णेर्लोपो न । अतः चर्चय् + इ + स्यति = चर्चयिष्यति इति रूपम् ।

*'सर्वोऽपि चुरादिणिच् पाक्षिकः'* इति पक्षे तु चर्चति इति रूपं स्यात् । तस्य भविष्यति 'चर्चिष्यति' इति रूपं भवेत् । किन्तु चर्चधातुः चुरादिः णिजन्तः एव प्रयुज्यते सर्वत्र । (भ्वादौ तुदादौ च स्थितयोः चर्चधात्वोः परिभाषणादयः अर्थाः । परिभाषणं नाम सनिन्दोपा-लम्भः । स च अत्र न अभिप्रेतः । तस्मात् तयोः प्रयोगः भवितुं न अर्हति अत्र ।)

६८. सः केनापि सह **सम्भाषयितुं** न इच्छति ।

'सम्भाषयितुम्' इति प्रयोगः अस्थाने । **'सम्भाषितुम्'** इति प्रयोक्तव्यम् ।

'सम्भाषते' इत्यस्य तुमुन्नन्तरूपं 'सम्भाषितुम्' इति । सम्भाषयतेः (ण्यन्तस्य) तुमुन्नन्तरूपं 'सम्भाषयितुम्' इति । प्रकृतवाक्ये सः स्वयं सम्भाषणं कर्तुम् इच्छति । अन्येन कारयितुं न इच्छति । अतः ण्यन्तस्य प्रयोगः न उचितः ।

६९. विना कारणं बालाः न **ताडितव्याः** ।

'ताडितव्यः' इति रूपम् असाधु । **'ताडयितव्यः'** इति प्रयोक्तव्यम् ।

आघातार्थकः 'तड'धातुः दशमगणीयः । वर्तमाने प्रथमैकवचने 'ताडयति' इति रूपम् । तस्य सेट्त्वात् तव्यति इडागमे गुणे अयादेशे 'ताडयितव्यम्' इति रूपम् । 'ताडितव्यम्' इति रूपं तु असाधु ।

७०. अद्य सभायां पारितोषिकानि **वितरितानि** ।

'वितरितानि' इति अपशब्दः । **'वितीर्णानि'** इति प्रयोक्तव्यम् ।

तरणार्थकात् 'तॄ'धातोः सनि विकल्पितेट्कत्वात् निष्ठायां (क्तप्रत्यये) *'यस्य विभाषा' (७.२.१५)* इति इटः निषेधः । इत्वे रपरत्वे दीर्घे *'रदाभ्यां निष्ठातो नः .....' (८.२.४२)* इति सूत्रेण निष्ठातकारस्य नकारः । *'रषाभ्यां ....' (८.४.१)* इति सूत्रेण नकारस्य णकारः ।

तस्मात् 'तीर्णः' इति रूपम् । क्तप्रत्यये इट् तु नास्ति । अतः 'तरितम्' इति रूपम् असाधु ।

७१. ❖ व्याघ्राय **वृक्षारोहणं न आगच्छति** ।
❖ मम **संस्कृतं न आगच्छति** ।
❖ भवते **संस्कृतम् आगच्छति** किम् ?

एतेषु वाक्येषु ज्ञानार्थे गम्धातुः प्रयुक्तः । एतादृशः प्रयोगः शिष्टैः क्वापि न कृतः । प्रादेशिकभाषायाः साक्षात् अनुवादः अयम् । अतः एतादृशाः प्रयोगाः सर्वथा परिहरणीयाः ।

**'व्याघ्रः वृक्षम् आरोढुं न शक्नोति', 'मया संस्कृतं न ज्ञायते/ अहं संस्कृतं न जानामि', 'भवान् संस्कृतं जानाति किम् ?'** इत्येवमादिरूपेण वाक्यविन्यासः करणीयः ।

७२. यदि अहं रात्रौ गृहं न गच्छेयं तर्हि गृहजनाः **चिन्तिताः भवन्ति** ।
**'चिन्ताग्रस्ताः भवन्ति'** इति प्रयोक्तव्यम् ।

संज्ञानार्थकस्य 'चिती'धातोः लटि प्रथमैकवचने 'चिन्तयति' इति रूपम् । स च सकर्मकः । सकर्मकधातुभ्यः (गत्यर्थकभिन्नेभ्यः) क्तप्रत्ययः कर्मार्थे एव । अतः 'चिन्तितः' इत्यस्य कर्तृपदं तृतीयान्तं भवेत् । प्रकृतवाक्ये 'गृहजनाः' इति प्रथमान्तं पदम् । अतः अयुक्तता ।

'गृहजनैः' इति प्रयोगादपि न इष्टसिद्धिः इति तु विषयान्तरम् तत् । अन्यच्च चिन्तयतेः न प्रसक्तिः अत्र । चिन्ताग्रस्तता वक्तुम् इष्टा । अतः 'चिन्ताग्रस्ताः / चिन्तायुक्ताः / चिन्ताकुलाः भवन्ति' इति वाक्यविन्यासः एव शोभते ।

'चिन्ता अस्य अस्ति इति चिन्तितः' इति इतच्प्रत्ययान्तकथनं तु अगतिकगत्या ।

७३. तेन धनिकः **सम्पृक्तः / सम्पर्कितः** ।
**'सम्पृक्तः' 'सम्पर्कितः'** इति रूपद्वयम् अपि साधु ।

'पृची सम्पर्के' इत्येषः सेट्कः धातुः । तथापि क्तप्रत्यये न इट् - *'श्वीदितो निष्ठायाम्'* (७.२.१४) इति सूत्रेण इटः निषेधात् । क्तप्रत्ययः निष्ठासंज्ञायुक्तः । *'चोः कुः'* (८.२.३०) इत्यनेन चकारस्य कुत्वम् । तस्मात् 'सम्पृक्तः' इत्यस्य रूपस्य सिद्धिः । 'सम्पर्कितः' इति रूपं तु 'सम्पर्कयति' इत्यस्य क्तान्तं रूपम् ।

सम्पर्कशब्दात् 'तत्करोति तदाचष्टे' इति णिच् । तस्मात् 'सम्पर्कयति' इति लडन्तं रूपम् । तस्य क्तप्रत्यये कृते इटि 'सम्पर्कितः' इति रूपम् । एवं 'सम्पृक्तः' इति रूपं पृचीधातोः क्तप्रत्यये कृते सिद्धम् । 'सम्पर्कितः' इति तु सम्पर्कयति इत्यस्य क्तप्रत्यये कृते सिद्धम् । अतः उभयथा अपि साधुता ।

७४. तेन बहवः **सम्पर्कितव्याः** सन्ति ।

**'सम्पर्चितव्याः'** इति, **'सम्पर्कयितव्याः'** इति, **'सम्पर्कणीयाः'** इति वा प्रयोक्तव्यम् ।

पृचीधातोः तव्यदन्तं रूपं प्रयोक्तुम् इच्छति प्रयोक्ता । पृच् + तव्य इति स्थिते इडागमे 'पर्चितव्यम्' इति रूपम् । तत्र चकारस्य कुत्वं (ककारः) दुर्लभम् ।

'सम्पर्कयति' इत्यस्मात् (सम्पर्कशब्दात् तत्करोति तदाचष्टे इति णिचि सम्पर्कयति इति रूपम्) तव्यति 'सम्पर्कयितव्यम्' इति रूपम् । अत्र ककारश्रवणं तु भवति । किन्तु णेः लोपस्य अभावात् 'सम्पर्कयितव्यम्' इतिं रूपम् । तन्नाम इकारश्रवणं ककारोत्तरं न, अपि तु यकारोत्तरम् । 'सम्पर्कयति' इत्यस्मात् अनीयरि 'सम्पर्कणीयम्' इति रूपम् । पृचीधातोः अनीयरि '(सं)पर्चनीयम्' इति रूपम् ।

**'पृची'**धातोः (पृणक्ति) कृद्रूपाणि, 'सम्पर्कयति' इत्यस्य कृद्रूपाणि च अधः दीयन्ते वैशद्याय ।

| *प्रत्ययः* | *पृचीधातोः* | *सम्पर्कयतेः* |
|---|---|---|
| तव्यत् | सम्पर्चितव्यम् | सम्पर्कयितव्यम् |
| अनीयर् | सम्पर्चनीयम् | सम्पर्कणीयम् |
| क्त्वा | सम्पृक्तः | सम्पर्कितः |
| शतृ (पुं) | सम्पृञ्चन् | सम्पर्कयन् |
| (स्त्री) | सम्पृञ्चती | सम्पर्कयन्ती |
| तुमुन् | सम्पर्चितुम् | सम्पर्कयितुम् |
| ल्यप् | सम्पृच्य | सम्पर्क्य |
| ल्युट् | सम्पर्चनम् | सम्पर्कणम् |

७५. अहं **त्वां प्रीणामि** ।

अनुरागवान् कश्चित्, अनुरागवती काचित् वा अनुरागपात्रम् उद्दिश्य एतत् वाक्यं वदति । अतः अत्र 'अहं **त्वयि अनुरक्तः / अनुरक्ता** अस्मि' इति कथनं युज्यते ।

'प्रीणाति' इत्यत्र प्रीञ्‌धातुः । सः नवमगणीयः । दशमगणीयः अपि कश्चन अस्ति । दशमगणीयस्य रूपं 'प्रीणयति' इति । उभयोः अपि अर्थः समानः - तर्पणं, सन्तोषजननं चेति । तस्मात् प्रीणाति / प्रीणयति = सन्तोषं जनयति / तर्पयति ।

सन्तोषजननादिकम् अनुरागस्य अनन्तरं भवति । अनुरागप्रकटन-दशायां न । अनुरागप्रकटनदशायाम् अपि सन्तोषः तु जायते, तथापि तत्र अनुरागस्यैव प्राधान्यम् । अतः तत्र 'अनुरक्तोऽस्मि' इति (अनुरक्तास्मि इति वा) प्रयोक्तव्यम् ।

यदि अखण्डक्रियापदस्य प्रयोगे इच्छा तर्हि अनुरज्ये / अनुरज्यामि / अनुरजे / अनुरजामि इत्यादीनि रूपाणि प्रयोक्तव्यानि । रागार्थकः रञ्जधातुः चतुर्थगणीयः प्रथमगणीयश्चापि । उभौ अपि तौ अकर्मकौ, उभयपदिनौ च । तस्मात् 'त्वयि' इति सप्तम्यन्तं प्रयोक्तव्यं, न तु 'त्वाम्' इति द्वितीयान्तम् । द्वितीयायां प्रयुक्तायां सकर्मकत्वं सिद्धं भवति ।

यत्र सन्तोषजननमात्रम् इष्यते तत्र 'प्रीणातेः' (प्रीणयतेः वा) प्रयोगः भवितुम् अर्हति । 'यः प्रीणयेत् सुचरितैः पितरं स पुत्रः' 'प्रीणयामो वासुदेवम्' इत्यादयः प्रयोगाः एतमेव अंशं समर्थयन्ति ।

७६. एवम् **आशासमानः** सः राजसमीपम् अगच्छत् ।

'आशासमानः' इति अपशब्दः । **'आशासानः'** इति प्रयोक्तव्यम् । इच्छार्थकः 'शास'धातुः अत्र । सः आत्मनेपदी । प्रायः अयं नित्यम् आङ्पूर्वः । वर्तमाने प्रथमैकवचने 'आशास्ते' इति रूपम् । (शासु अनुशिष्टौ इत्येषः धातुः तु परस्मैपदी । अनुशिष्टिः नाम नियोगः ।) शासुधातोः आत्मनेपदित्वात् शानचि 'आशासानः' इति रूपम् । धातोः अदन्ताङ्गत्वाभावात् मुक्विधायकस्य *'आने मुक्'* (७.२.८२) इति सूत्रस्य अत्र अप्रवृतिः । अतः मुगागमः न । 'तस्मात् आशासानः' इति रूपम् ।

'बृहद्धातुरूपावली'कारः इच्छार्थकः शासधातुः प्रथमगणीयः अपि अस्ति इति वदति । यदि तस्य प्रामाणिकत्वम् अङ्गीक्रियेत तर्हि 'आशासमानः' इति मुगागमसहितं रूपं साधु स्यात् । किन्तु कौमुद्यां कृदन्तरूपमालादिषु वा तादृशः धातुः न दर्शितः । तस्मात् तस्य धातोः प्रामाणिकता चिन्त्या एव ।

७७. विमर्शकः ग्रन्थान् **विमर्शयति** ।

'विमर्शयति' इत्येतत् णयन्तरूपम् अस्थाने । **'विमृशति'** इति अण्यन्तरूपं प्रयोक्तव्यम् ।

आमर्शनार्थकः मृशधातुः षष्ठगणीयः । तस्मात् 'विमृशति' इति रूपं सिद्धम् । एषः धातुः प्रेरणार्थकणिच्प्रत्ययरहितः । अतः अण्यन्तः धातुः इति उच्यते । प्रेरणार्थके णिचि 'विमर्शयति' इति रूपम् । एतत् णिच्सहितम् । अतः ण्यन्तम् । क्वचित् अयं णिच् स्वार्थे अपि क्रियते अगतिकगत्या । अत्र तु अण्यन्तरूपेणैव इष्टसिद्धिः । अतः ण्यन्तस्य न काऽपि आवश्यकता ।

ण्यन्तरूपप्रयोगविषये आधिक्येन भ्रान्तिः दृश्यते लोके । यत्र इच्छा भवति तत्र सर्वत्र स्वार्थे ण्यन्तस्य प्रयोगः भवितुं न अर्हति ।

किन्तु 'ण्यन्तमोहः' (ण्यन्तविषये अविवेकः वा) बहुत्र दृश्यते । कानिचन उदाहरणानि यथा -

| मास्तु (✗) | भवतु (✔) |
|---|---|
| **(ण्यन्तरूपाणि)** | **(अण्यन्तरूपाणि)** |
| ० सौचिकः वस्त्रं सीवयति । | सौचिकः वस्त्रं **सीव्यति** । |
| ० तरुणः वस्त्रं धारयति । | तरुणः वस्त्रं **धरति** । |
| ० बालः चित्रम् अवलोकयति* । | बालः चित्रम् **अवलोकते** । |
| ० बालकः रुचिम् आस्वादयति । | बालकः रुचिम् **आस्वदते** । |
| ० रक्षकः गृहं रक्षयति । | रक्षकः गृहं **रक्षति** । |
| ० लेपकारः लेपयति । | लेपकारः **लिम्पति** । |
| ० सः दुरभ्यासं विसर्जयति । | सः दुरभ्यासं **विसृजति** । |

* इदमत्र स्मर्तव्यम्, - लोकृ(भाषायाम्)धातुः स्वदधातुः च दशमगणीयोऽपि अस्ति । तथापि अण्यन्तस्य धातोः सद्भावात्, तस्य प्रयोगे क्लेशराहित्यात् तस्यैव प्रयोगः वरम् ।

० कर्मकरः जलं सेचयति । कर्मकरः जलं **सिञ्चति** ।
० चिन्तकः आलोचयति । चिन्तकः **आलोचते** ।
० प्रकाशकः लेखं प्रकटयति । प्रकाशकः लेखं **प्रकटति** ।

एतादृशेषु स्थलेषु ण्यन्तस्य प्रयोगः अपरिहार्यः तु न । अतः अण्यन्तस्यैव प्रयोगः ण्यन्तस्य परिहारश्च वरम् ।

**७८.** अयं 'ण्यन्तमोहः' वर्तमाने एव न, भूतकृदन्तप्रयोगस्थले अपि आधिक्येन दृश्यते । तन्नाम अण्यन्तेन एव इष्टसिद्धौ ण्यन्तप्रयोगः क्रियते । महता श्रमेण ण्यन्तस्य समर्थनं शक्येत । किन्तु किं व्यर्थपरिश्रमेण ? अण्यन्तस्यैव रूपस्य प्रयोगः वरम् । तद्यथा -

| *मास्तु (✗)* | *भवतु (✓)* |
|---|---|
| १. शिरोवेदना वर्धिता । | शिरोवेदना **प्रवृद्धा** । |
| २. क्षीरं दूषितम् । | क्षीरं **दुष्टम्** । |
| ३. सः चोरं बन्धितवान् । | सः चोरं **बद्धवान्** । |
| ४. अधिकारिणा एवं निर्देशितम् । | अधिकारिणा एवं **निर्दिष्टम्** । |
| ५. जनाः यानं नोदितवन्तः । | जनाः यानं **नुन्नवन्तः/ नुत्तवन्तः** । |
| ६. भक्ताः रथम् आकर्षितवन्तः । | भक्ताः रथम् **आकृष्टवन्तः** । |
| ७. शत्रवः नगरम् आक्रमितवन्तः । | शत्रवः नगरम् **आक्रान्तवन्तः** । |
| ८. कृषिकः वृक्षं छेदितवान् । | कृषिकः वृक्षं **छिन्नवान्** । |
| ९. गुरुः मन्त्रम् उपदेशितवान् । | गुरुः मन्त्रम् **उपदिष्टवान्** । |
| १०. शुनकः दंशितवान् । | शुनकः **दष्टवान्** । |
| ११. विमर्शकः विमर्शितवान् । | विमर्शकः **विमृष्टवान्** । |
| १२. सा लतां सिञ्चितवती । | सा लतां **सिक्तवती** । |
| १३. सभा विसर्जिता । | सभा **विसृष्टा** । |
| १४. अभिमन्युः व्यूहं भेदितवान् । | अभिमन्युः व्यूहं **भिन्नवान्** । |
| १५. सः सर्वत्र भ्रमितवान् । | सः सर्वत्र **भ्रान्तवान्** । |

यदि 'नुन्नवान्' 'छिन्नवान्' 'भिन्नवान्' इत्यादयः क्लेशाय इति भाव्यते तर्हि 'नोदनं कृतवान्' 'छेदनं कृतवान्' 'भेदनं कृतवान्' इत्येवं सरलः प्रयोगः क्रियताम् ।

७९. क्षणाभ्यन्तरे अहं भवतः गृहे **उपतिष्ठामि** ।

**'उपतिष्ठे'** इति, **'उपस्थितः भवामि'** इति वा प्रयोक्तव्यम् ।

'उप' इत्यस्मात् 'ष्ठा'धातोः योगे अकर्मकत्वे द्योत्ये आत्मनेपदित्वं नित्यम् *'अकर्मकाच्च' (१.३.२३)* इति सूत्रेण । एतस्मिन् वाक्ये अकर्मकत्वं स्फुटम् । अतः 'उपतिष्ठे' इति आत्मनेपदिप्रयोगः स्यात् । अथवा 'उपस्थितः भवामि' इति भङ्ग्यन्तरेण वा वक्तव्यम् । सकर्मकत्वे तु तस्य परस्मैपदित्वम् । यथा – कः तत्र द्वारम् उपतिष्ठति ?

८०. क्रीडाङ्गणे बालकाः **कूर्दन्ति** ।

'कूर्दन्ति' इति अपशब्दः । **'कूर्दन्ते'** इति प्रयोक्तव्यम् ।

अत्र धातुः 'कूर्द' (क्रीडायाम्) इति । *'उपधायां च' (८.२.७९)* इति सूत्रेण उकारस्य दीर्घः । अतः 'कूर्दते' इति रूपम् । अयं च धातुः आत्मनेपदी । परस्मैपदित्वं तु कथमपि नास्ति एतस्य । अतः 'कूर्दति' इति रूपम् असाधु एव ।

८१. दशरथपुत्रं 'दाशरथिः' इत्यपि **आह्वयन्ति** जनाः ।

'आह्वयन्ति' इति प्रयोगः अस्थाने । **'निर्दिशन्ति'** इति प्रयोगः वरम् । आह्वानं नाम अभिमुखीकरणम् । जनाः दाशरथिं नात्र अभिमुखीकर्तुम् इच्छन्ति । निर्देशः च अत्र इष्टः । अतः तदनुगुणः क्रियापदप्रयोगः उचितः ।

यदि च 'दाशरथे !' इति सम्बुद्धिरूपं प्रयुज्यते तर्हि तु आह्वयतेः प्रयोगः औचित्यम् आवहति । निर्देशार्थे आह्वयतेः प्रयोगः अस्थाने ।

८२. कार्यक्रमार्थम् अध्यक्षत्वेन कं **निमन्त्रयाम** ?

**'निमन्त्रयामहै'** इति प्रयोक्तव्यम् ।' निमन्त्रयाम' इति रूपम् अशुद्धम् । गुप्तभाषणार्थकः 'मत्रि'धातुः चुरादिः आकुस्मीयः । आकुस्मीयाः आत्मोपदिनः । अतः मत्रिधातोः लटि प्रथमपुरुषैकवचनान्तं रूपं '(नि)मन्त्रयते' इति । लोटि उत्तमपुरुषबहुवचनान्तं रूपं '(नि)मन्त्रयामहै' इति स्यात् ।

यद्यपि णिजन्तात् णिचं कृत्वा परस्मैपदित्वं ('निवृत्तप्रेषणात्....' इति

वचनस्य अनुगुणम्) समर्थयितुं शक्यं, तथापि तादृशस्य शिष्टप्रयोगस्य अभावात् तादृशं समर्थनं न युक्तम् ।

८३. दुर्जनाः जनान् बहुधा **वञ्चयन्ति** ।

**'वञ्चयन्ते'** इति प्रयोगः प्रशस्तः । 'वञ्चयन्ति' इति प्रयोगः न दोषाय । प्रलम्भनार्थकः 'वञ्चु'धातुः आकुस्मीयः । तस्मात् तस्य आत्मनेपदिरूपम् इति शास्त्रकारैः अङ्गीक्रियते ।

'निवृत्तप्रेषणात् धातोः ...' इति पक्षम् आश्रित्य णिजन्तात् णिचि कृते 'वञ्चयति' इति रूपं सिद्धं भवति । कौमुद्याः तत्त्वबोधिनीटीकायां, कृतन्तरूपमालायां च वञ्चयतेः सद्भावः उच्यते । अतः 'वञ्चयति' इति प्रयोगः अपि भवितुम् अर्हति ।

तथापि 'वञ्चयते' इति आत्मनेपदिप्रयोगः तु प्रशस्ततरः ।

८४. तस्य रूपम् **आकर्षणीयम्** अस्ति ।

**'आकर्षणार्हम्'** इत्यर्थः यद्यत्र अभिप्रेतः तर्हि प्रयोगोऽयं न दोषाय । (आ) कृषधातोः अनीयरि 'आकर्षणीयम्' इति रूपम् । अनीयर्प्रत्ययः कृत्, कृत्यश्चापि । कृत्यप्रत्ययाः अर्हाद्यर्थेषु अपि प्रयुज्यन्ते । अतः आकर्षणार्हार्थे आकर्षणीयपदस्य प्रयोगः न दोषाय । यदि कर्त्रर्थः एव अभिप्रेतः तर्हि 'आकर्षकम्' इति प्रयुज्यताम् ।

एतादृशाः अन्ये केचन प्रयोगाः यथा -

- परिगणनीयं कार्यम् (परिगणनार्हम् इत्यर्थः)
- दर्शनीयं रूपम् (दर्शनार्हम् इत्यर्थः)
- अभिनन्दनीयं कृत्यम् (अभिनन्दनार्हम् इत्यर्थः)
- मननीयं वचनम् (मननार्हम् इत्यर्थः)
- असहनीया वेदना (सोढुम् अशक्या वेदना इत्यर्थः)

८५. सभामण्डपः **शोभायमानः** अस्ति ।

**'शोभमानः'** इत्येतेन प्रयोगेण एव इष्टसिद्धिः ।

सभायाः शोभावत्त्वम् अत्र विवक्षितम् । शुभ(दीप्तौ)धातोः शानचि तस्य अर्थस्य प्रतीतिः भवति एव ।

'शोभायते' इत्येतं धातुं कष्टेन निर्माय शानचि कृते 'शोभायमानः' इति रूपं सिद्ध्येत् । किन्तु किं तेन व्यर्थप्रयासेन ? तृणसाध्ये कार्ये परशुं को वा प्रयुञ्जीत ?

८६. एषः सदा **निद्रितुम्** इच्छति ।
'निद्रितुम्' इति अपशब्दः । **'निद्रातुम्'** इति प्रयोक्तव्यम् ।
'नि' इति उपसर्गेण युक्तात् द्राधातोः तुमुनि 'द्रातुम्' इति रूपम् ।
अस्य धातोः अनिट्त्वात् तुमुनि न इट् । अतः इकारस्य श्रवणं नास्ति तत्र ।

८७. बालः **स्वपितुम्** इच्छन् मातरम् आह्वयति ।
'स्वपितुम्' इति अपशब्दः । **'स्वप्तुम्'** इति प्रयोक्तव्यम् ।
शयनार्थकः 'ष्वप्'धातुः अनिट् । तस्मात् तुमुनि तस्य इडागमो न ।
अतः 'स्वप्तुम्' इति रूपम् । अस्यैव धातोः लटि पकारोत्तरम् इकारः श्रूयते । स च इट् रुदादिभ्यः पञ्चभ्यः सार्वधातुकेभ्यः विहितः *'रुदादिभ्यः सार्वधातुके'* (७.२.७६) इति सूत्रेण । तत्सादृश्यात् सेट्कभ्रान्त्या वा कदाचित् 'स्वपितुम्' इति प्रयोगः क्रियेत कैश्चित् । किन्तु तत् रूपम् असाधु एव ।

८८. कथापुस्तकम् **अधीतुम्** अपि समयः नास्ति मम ।
'अधीतुम्' इति अपशब्दः । **'अध्येतुम्'** इति प्रयोक्तव्यम् ।
अध्ययनार्थकः इङ्धातुः अत्र । स च नित्यम् अधिपूर्वः । तुमुनि *'सार्वधातुकार्धधातुकयोः'* (८.३.८४) इति सूत्रेण गुणे कृते एतुम् इति रूपम् । अधि + एतुम् = अध्येतुम् । गुणाभावः सवर्णदीर्घः वा तत्र नास्ति, येन अधीतुम् इति रूपं स्यात् ।

८९. सुगन्धिपुष्पस्य **आघ्राणनं** सर्वे कुर्वन्ति ।
'आघ्राणनम्' इति अपशब्दः । **'आघ्राणम्'** इति प्रयोक्तव्यम् ।
आ + घ्राधातोः ल्युटि *'युवोरनाकौ'* (७.१.१) इति अनादेशे आघ्राणम् इति रूपम् । ल्युडन्तात् पुनः ल्युट् न । आवश्यकता नास्ति अपि ।
'घ्राण'शब्दः ल्युडन्तः न इति मत्वा केचन ल्युडन्तरूपम् इच्छन्तः 'आघ्राणनम्' इति रूपं प्रयुञ्जते । तत् रूपं तु असाधु एव ।

९०. कर्मकरः प्रतिदिनं जल**सिञ्चनं** करोति ।
'सिञ्चनम्' इति अपशब्दः । **'सेचनम्'** इति प्रयोक्तव्यम् ।
क्षरणार्थकात् 'षिच्'धातोः ल्युटि *'पुगन्तलघूपधस्य च'* (७.३.८६) इति सूत्रेण गुणः । अतः 'सेचनम्' इति रूपम् । गुणः नित्यः । अतः सिञ्चनम् इति रूपम् असाधु एव भवति ।

'सिञ्चति' इत्यादौ गुणाभावः दृश्यते । तत्सादृश्यात् केचन ल्युटि अपि गुणाभावं चिन्तयेयुः । तत् अयुक्तम् । 'सिञ्चति' इत्यत्र विकरणप्रत्ययः 'श' । तस्य अपित्त्वात् *'सार्वधातुकमपित्' (१.२.४)* इति ङित्त्वात् गुणस्य निषेधः ।

(*'शे मुचादीनाम्' (७.१.५९)* इति सूत्रेण 'श'प्रत्यये परे एव नुम् विहितम् । अतः सिञ्चति इत्यादिषु नुम्सहितं रूपं दृश्यते । ल्युटि तु 'श'परत्वाभावात् न नुम् ।)

११. एतादृशाः बहवः कार्यक्रमाः **प्रचलेरन्** ।

**'प्रचलेयुः'** इति प्रयोक्तव्यम् ।

कम्पनार्थकः 'चल'धातुः परस्मैपदी । तस्य लिङि प्रथमपुरुषबहुवचने 'प्रचलेयुः' इति रूपम् । यदि सः धातुः उभयपदी स्यात् तर्हि 'प्रचलेरन्' इति रूपं स्यात् । किन्तु तथा तु नास्ति । अतः 'प्रचलेरन्' इति अपशब्दः एव ।

१२. शुभम् **आंशसन्/आशंसमानः** सः एवम् अवदत् ।

**'आशंसन्' 'आशंसमानः'** इति रूपद्वयम् अपि साधु ।

'आशंसन्' इति तु 'शंसु - स्तुतौ' इत्यस्य धातोः शत्रन्तं रूपम् । स च धातुः (भ्वादिः) परस्मैपदी । तस्मात् 'आशंसन्' इति रूपं साधु एव ।

'आशंसमानः' इति तु 'शसि - इच्छायाम्' इत्यस्य धातोः शानजन्तं रूपम् । स च धातुः आत्मनेपदी । नित्यम् आङ्पूर्वः इति केचित् । तस्मात् 'आशंसमानः' इति रूपम् ।

शत्रन्तं रूपं स्तुत्यर्थकस्य 'शंसु'धातोः, शानजन्तं रूपं इच्छार्थकस्य 'शसि'धातोः । एवं धातुभेदः तु अस्ति तत्र ।

१३. बान्धवाः कति दिनानि **निवसिष्यन्ति** इति नाहं जाने ।

**'निवत्स्यन्ति'** इति प्रयोक्तव्यम् । 'निवसिष्यन्ति' इति अपशब्दः ।

निवासार्थकः 'वस'धातुः अनिट् । अतः भविष्यति लृटि तस्य इडागमो न । तस्मात् 'निवत्स्यति' इति रूपम् । तत्र तकारस्तु *'सः स्यार्धधातुके' (८.४.४९)* इति सूत्रेण ।

१४. मानवेन उत्तमं **जीवनं जीवनीयम्** ।

**'जीवनं करणीयम्'** इति, **'उत्तमतया जीवनीयम्'** इति वा

प्रयोक्तव्यम् ।

प्राणधारणार्थकः जीवधातुः अकर्मकः । बृहद्धातुरूपावलौ लिख्यते - *'कर्मणो धात्वर्थेनोपसङ्ग्रहात् अकर्मकः'* इति । अतः 'जीवन'पदस्य अत्र कर्मत्वम् अयुक्तं भवति * ।

१५. कष्टात् भीताः वयं न **रोदिमः** ।

'रोदिमः' इति अपशब्दः । **'रुदिमः'** इति प्रयोक्तव्यम् ।

अश्रुविमोचनार्थकात् 'रुद्'धातोः 'मस्'प्रत्यये पित्त्वाभावात् न गुणः *'पुगन्तलघूपधस्य' (७.३.८६)* इति सूत्रेण । *'रुदादिभ्यः सार्वधातुके' (७.२.७६)* इति सूत्रेण इट् तु भवति एव । अतः 'रुदिमः' इति रूपम् । 'रोदिति' इत्यत्र तु तिपः पित्त्वात् *'पुगन्त...'* इति सूत्रेण गुणो भवति ।

१६. कार्यक्रमः पञ्चवादने **आरभते** ।

**'आरभ्यते'** इति प्रयोक्तव्यम् ।

राभस्यार्थकः रभधातुः सकर्मकः । (राभस्यं नाम उपक्रमः) अतः तदनुगुणतया एव कर्तृकर्मादिपदयोजनं चिन्तनीयम् । 'आरभते' इत्यस्य 'कार्यक्रमः' एव कर्म । अतः 'कार्यक्रमम् आरभते' इति प्रयोक्तव्यम् । तदा तु 'व्यवस्थापकगणः' इत्यादयः कर्तृपदत्वम् आप्तुम् अर्हन्ति । यदि कार्यक्रमस्य प्रथमा एव इष्यते तर्हि 'आरभ्यते' इति कर्मणि रूपं प्रयोक्तव्यम् ।'जनैः' इत्यादि कर्तृपदं भवितुम् अर्हति ।

'कार्यक्रमः आरब्धः' इत्यादौ कार्यक्रमस्य कर्तृत्वं, क्रियायाः च अकर्मकत्वं स्यात् इति भ्रान्तिः भवितुम् अर्हति केषाञ्चित् । किन्तु तत्रापि सकर्मकत्वं तु अस्ति एव । अतः कार्यक्रमस्य कर्मत्वम् एव

---

* इदमत्र चिन्तनीयम् - तर्कशास्त्रे कश्चन न्यायः श्रूयते - 'विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवाधाने विशेषमात्रपरत्वम्' इति । 'सकीचकैः मारुतरन्ध्रपूर्णैः' इति कालिदासप्रयोगः । (रघु० - २.१२)। 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति कोषः । तस्मात् सिद्धं यत् कीचकः नाम मारुतपूर्णरन्ध्र-विशिष्टः इति । तथापि कालिदासः 'मारुतरन्ध्रपूर्णैः' इति प्रयुङ्क्ते । अतः अत्र कीचकपदस्य वेणुमात्रबोधकत्वम् अङ्गीक्रियते ।

एवमेव जीवनपदस्य कर्मत्वात् 'जीवनीयम्' इत्यस्य क्रियासामान्यवाचित्वम् अङ्गीकृत्य (तन्नाम जीवति इत्यस्य करोति इत्यर्थः इति अभ्युपगन्तव्यम्) साधुत्वं यदि केनचित् उच्येत तर्हि तस्य शिष्टसम्मतत्वं भवेन्नवेति चिन्तनीयं विज्ञैः ।

तत्रापि ।

१७. 'युद्धं भविष्यति' इति **विश्वसनीया** वार्ता ।

**'विश्वसनीया वार्ता'** इति प्रयोगे न कोऽपि दोषः ।

'विश्वसनीया' इत्यत्र तव्यत्प्रत्ययः । स च विधिमात्रे एव अस्ति इति न । सः कृत्यप्रत्ययगणे अपि अन्तर्भवति । कृत्यप्रत्ययाः अर्हाद्यर्थेषु अपि विहिताः । (*अर्हे कृत्यतृचश्च* - ३.३.१६९) तस्मात् तव्यदन्तस्य विध्याद्यर्थकत्वं यथा, तथैव अर्हार्थकत्वम् अपि अस्ति एव । अतः 'विश्वासार्हा' इत्यर्थे 'विश्वसनीया' इति प्रयोगः साधुः एव ।

एतादृशाः अन्ये केचन (अर्हशक्याद्यर्थे विद्यमानाः) प्रयोगाः यथा -

* गणनीया समस्या ।
* रमणीयं रूपम् ।

१८. आतपकारणात् हिमं **द्रवितं** भवति ।

**'द्रुतं'** भवति इति प्रयोक्तव्यम् ।

गत्यर्थकस्य द्रुधातोः क्तप्रत्यये न इडागमः । [शीङ्पूङ्भ्याम् अन्यस्य धातोः परस्य निष्ठाप्रत्ययस्य इट् न । विस्तरार्थम् 'इड्व्यवस्था (कृत्सु)' इति पुस्तकं द्रष्टव्यम् ।]

अतः 'द्रुतम्' इति रूपम् । द्रवशब्दस्मरणात् केचन 'द्रवितम्' इति प्रयोगं कुर्युः । तत् तु भ्रान्त्या ।

१९. **अतीयमानस्य** वर्षस्य कार्यक्रमाः अधोनिर्दिष्टाः सन्ति ।

**'अतियतः वर्षस्य' 'अतियातः वर्षस्य'** इत्यादयः प्रयोगाः अत्र भवितुम् अर्हन्ति । 'अतीयमानस्य वर्षस्य' इत्येषा आनुपूर्वी नात्र युज्यते ।

'अतीयमान'पदस्य स्वरूपम् आदौ अवगन्तव्यम् । अतिपूर्वकात् गत्यर्थकात् इण्धातोः कर्मणि यकि 'अतीयते' इति रूपम् । (कर्तरि तु 'अत्येति' इति रूपम्) तस्मात् शानचि 'अतीयमानम्' इत्यस्य रूपस्य सिद्धिः । कर्मणि शानचः विधानात् सिद्धं यत् 'अतीयमान'पदं कर्मणः विशेषणम् इति ।

उपर्युक्तस्य वाक्यस्य प्रयोक्ता तु वर्षस्य कर्तृत्वम् इच्छति । 'वर्षम् अतीतम्' 'कालः अत्येति' इत्यादयः प्रयोगाः तस्य इष्टाः । 'अतीयमान'पदं कर्तुः विशेषणं भवितुं नार्हति । अतः 'अतीयमानं

वर्षम्' इति प्रयोगः चिन्त्यः एव । वर्षस्य कर्तृत्वविवक्षायाम् 'अत्येति' 'अतियाति' इत्यादीनां धातूनां शत्रन्तं रूपं विशेषणत्वेन प्रयोक्तव्यम् । तदा तु अपेक्षितस्य अर्थस्य सिद्धिः ।

एतदत्र अवधेयम् । केचन कालजयिनः भवन्ति । ते तु वर्षम् अपि अतियन्ति । 'कालजयी वर्षम् अत्येति' इति यदि वाक्यप्रयोगः इष्टः स्यात् तर्हि (कालजयिना) 'अतीयमानम् वर्षम्' इत्येषा आनूपूर्वी अपि सिद्धा स्यात् । एतादृशे शिष्टप्रयोगे सत्येव साधुत्वकथनाय अयं पन्थाः आश्रयणीयः । अन्यथा तु 'अतीयमानं वर्षम्' इत्यस्याः आनुपूर्व्याः परित्यागः एव वरम् ।

यदि कदाचित् 'कालः अत्येति' इत्यादौ अकर्मकत्वम् इष्येत तर्हि 'अतीयमानम्' इति शानजन्त रूपं साधु स्यात् । (भावे शानच्) तदा अपि वर्षपदस्य विशेषणत्वं तु दुष्यति एव ।

१००. **उड्डीयमानः** पक्षी व्याधेन मारितः ।

**'उड्डयमानः'** इति प्रयोगः वरम् ।

आकाशगत्यर्थकस्य डीङ्धातोः (प्रथमगणीयस्य) कर्तरि रूपं 'डयते' इति । प्रायः अयमेव धातुः आधिक्येन प्रयुज्यते लोके । स च सकर्मकः । तस्य कर्मणि रूपं 'डीयते' इति । 'डीयमानः' इति रूपं कर्मणि शानजन्तम् । तत्तु कर्तृभूतस्य पक्षिणः विशेषणं भवितुं नार्हति ।

'डयते' इति कर्तरि । तस्मात् शानचि 'डयमानम्' इति रूपम् । तच्च पक्षिणः (कर्तृभूतस्य) विशेषणं भवितुम् अर्हति । अतः 'डयमानः पक्षी' इति प्रयोगः साधुः ।

डीङ्(विहायसा गतौ)धातुः चतुर्थगणीयः अपि अस्ति । तस्य कर्तरि रूपं 'डीयते' इति । चतुर्थगणीयात् कर्तरि शानचि कृते 'डीयमानम्' इति रूपं सिद्धं भवति । 'डीयमानः पक्षी' इत्यत्र चतुर्थगणीयः 'डीङ्' धातुः प्रयुक्तः, न तु प्रथमगणीयः इति यदि भवन्तः वदेयुः तर्हि न तत्र विवादं कर्तुम् इच्छामः वयम् ।

१०१. वाक्यमेतत् **अनूदितव्यं** भवता ।

'अनूदितव्यम्' इति अपशब्दः । **'अनुवदितव्यम्'** इति,

**'अनुवक्तव्यम्'** इति वा प्रयोक्तव्यम् ।
वद(व्यक्तायां वाचि)धातोः तव्यति 'वदितव्यम्' इति रूपम् । सम्प्रसारणे सत्येव 'उदितव्यम्' इति रूपं स्यात् । किन्तु सम्प्रसारणं किति प्रत्यते परे एव । [*वचिस्वपियजादीनां किति (६.१.१५)*] तव्यत्प्रत्ययः न कित् । अतः सम्प्रसारणम् अपि न ।
यदि परिभाषणार्थकः 'वच'धातुः इष्येत तर्हि ततः तव्यति 'वक्तव्यम्' इति रूपम् । अत्रापि तव्यतः कित्त्वाभावात् न सम्प्रसारणम् ।

१०२. **तदनुसृतं** मया एवं कृतम् ।
'तदनुसारम्' इति, **'तदनुसारेण'** इति वा प्रयोक्तव्यम् ।
'अनुसृतम्' इत्यत्र अनुपूर्वकस्य सृधातोः कर्मणि क्तः । अनुसरणरूपः भावार्थः अत्र अपेक्ष्यते । तस्मिन् अर्थे क्तान्तस्य प्रयोगः न सङ्गच्छते । 'अनुसार'शब्दः भावार्थकः घञन्तः । द्वितीयान्तेन क्रियायाम् अन्वये 'अनुसारम्' इति रूपम् । उभयथा अपि साधुता ।

१०३. जनैः **व्यवह्रियमाणा** भाषा कथं निर्जीवा स्यात् ?
**'यया व्यवह्रियते सा भाषा'** इति प्रयोक्तव्यम् ।
'व्यवह्रियमाणा' इत्यत्र शानच्प्रत्ययः । सः कर्त्रर्थे कर्मार्थे वा भवितुम् अर्हति । व्यवहारक्रियायां भाषायाः भवति करणत्वम् । अतः एव 'संस्कृतेन सम्भाषणं कुरु' इत्यादयः व्यवहाराः सङ्गच्छन्ते । करणार्थः शानच्प्रत्ययेन न अभिधीयते । अतः 'यया व्यवह्रियते सा भाषा' इति आनुपूर्वी एव आश्रयणीया भवति ।
'सः भाषां व्यवहरति' इति यदि प्रयोगः साधुः स्यात् तर्हि 'व्यवह्रियमाणा भाषा' इति प्रयोगः साधुः अभविष्यत् । किन्तु व्यवहारार्थकस्य क्रियापदस्य भाषा न कर्म । अतः 'व्यवह्रियमाणा भाषा' इति प्रयोगः दोषाय भवति ।

१०४. न **दृश्यतः** भवन्तौ एषु दिनेषु ।
**'न दृश्येते'** इति प्रयोक्तव्यम् ।
'दृश्यते' इति तु दृशधातोः कर्मणि रूपम् । तच्च आत्मनेपदि । तस्य प्रथमपुरुषद्विवचनान्तं रूपं 'दृश्येते' इति । कर्मपदं द्विवचने अस्तीत्यतः क्रियापदम् अपि द्विवचनान्तम् एव स्यात् ।

१०५. भवता अहं **स्मर्यते** किम् ?

**'स्मर्ये किम् ?'** इति प्रयोक्तव्यम् ।
कर्मणिप्रयोगीयं वाक्यम् एतत् । अत्र कर्मपदम् अस्ति अस्मच्छब्दः । स च एकवचनोपेतः । तस्मात् क्रियापदम् अपि उत्तमपुरुषीयम् एकवचनान्तं च स्यात् । तस्मात् 'स्मर्ये' इति प्रयोक्तव्यम् । एतदत्र स्मर्तव्यम् - कर्मणिप्रयोगे यदा कर्मपदं युष्मच्छब्दः अस्मच्छब्दः वा स्यात् तदा क्रियापदप्रयोगे विशेषावधानम् आवश्यकम् एव । तादृशानि वाक्यानि दैनन्दिनजीवने विरलतया एव प्रयुज्यन्ते । तादृशानां प्रयोगः यत्र क्रियते तत्र अधिकम् अवधानं तु आवश्यकम् एव ।
कानिचन उदाहरणानि यथा -

- भवता अहं ज्ञाये किम् ?
- भवता आवां तत्र तत्र दृश्यावहे एव ननु ?
- वयं कदा आहूयामहे भवता ?
- त्वं मया सर्वदा स्मर्यसे एव ।
- केनापि अहं स्मर्ये एषु दिनेषु ।

१०६. पाचकः तण्डुलं **पक्तवान्** ।
'पक्तवान्' इति अपशब्दः । **'पक्वान्'** इति प्रयोक्तव्यम् । पचधातोः निष्ठाप्रत्यये (क्तक्तवतू 'निष्ठा'शब्देन निर्दिश्येते) *'पचो वः' (८.२.५२)* इति सूत्रेण निष्ठातकास्य वकारः विहितः । अतः 'पक्वान्' इत्येव प्रयोगः साधुः ।
एवमेव 'पाचकेन तण्डुलः पक्वः' इत्येव प्रयोक्तव्यं, न तु 'पक्तः' इति ।

१०७. भवताम् आगमनतः अस्माकं गृहं **पवितं** जातम् ।
'पवितम्' इति रूपं साधु । **'पूतम्'** इत्यपि प्रयोक्तुं शक्यम् । पूङ्धातोः निष्ठाप्रत्यये *'पूङः च' (७.२.५१)* इति सूत्रेण विकल्पेन इटि 'पवितः' इति रूपम् । इडभावे तु 'पूतः' इति ।

१०८. अद्य बालिका कार्यक्रमे सम्यक् **नर्तितवती** ।
'नर्तितवती' इति अपशब्दः । **'नृत्तवती'** इति प्रयोक्तव्यम् । गात्रविक्षेपार्थकः 'नृती'धातुः यद्यपि सेट्, तथापि निष्ठाप्रत्यये परे *'श्वीदितो निष्ठायाम्' (७.२.१४)* इति सूत्रेण इटः निषेधः कृतः । अतः नृत्तः/नृत्तवान् इत्येव रूपम् ।

'नर्तितव्यम्' इत्यादिषु इटः श्रवणात् कैश्चित् भ्रान्त्या प्रयुज्येत 'नर्तितवान्' इति ।

१०९. बालः जलं **निपाय** निर्गतवान् ।

**'निपाय'** इति साधु एव रूपम् । **'निपीय'** इत्यपि भवितुम् अर्हति । वयं लोके आधिक्येन पिबतेः एव प्रयोगं कुर्मः पानार्थे । तस्य धातुः 'पा' । निपूर्वकस्य पाधातोः ल्यपि 'निपाय' इति रूपम् । 'पीत्वा' इत्यत्र *'घुमास्थागापाजहातिसां हलि' (६.४.६६)* इति सूत्रेण ईत्वं विहितम् । ल्यपि तु *'न ल्यपि' (६.४.६९)* इति सूत्रेण ईत्वस्य निषेधः विहितः । अतः 'निपाय' इत्येव रूपम् । एतस्य तात्पर्यं - निपीय इति रूपम् असाधु इति न । 'पीङ्-पाने' इत्यपि कश्चन धातुः अस्ति । तस्य ल्यबन्तं रूपं 'निपीय' इति । पिबादेशार्हस्य 'पा'धातोः ल्यबन्तं रूपं यदि इष्येत तर्हि 'निपाय' इत्येव प्रयोक्तव्यम् ।

११०. अध्यापकः बालकं बहुधा **प्रशंसितवान्** ।

'प्रशंसितवान्' इति अपशब्दः । **'प्रशस्तवान्'** इति प्रयोक्तव्यम् । यदि अनुस्वारघटितरूपस्य एव प्रयोगे प्रबलेच्छा तर्हि 'प्रशंसां कृतवान्' इति प्रयोक्तव्यम् ।

स्तुत्यर्थकात् 'शंसु'धातोः क्तवतुप्रत्यये *'यस्य विभाषा' (७.२.१५)* इति सूत्रेण इटः निषेधः विहितः । [*'उदितो वा' (७.२.५६)* इति सूत्रेण क्त्वायाम् इटः विकल्पात् 'यस्य विभाषा' इति सूत्रेण इटः निषेधः ।] अतः 'प्रशस्तवान्' इत्येव रूपम् । 'शंसु' इत्यत्र शकारोत्तरं यः अनुस्वारः श्रूयते तस्य लोपः *'अनिदितां हल उपधायाः क्ङिति (६.४.२४)* इति सूत्रेण । अतः क्तवतुप्रत्यये परे न अनुस्वारस्य श्रवणम् । 'प्रशंसा' 'प्रशंसति' इत्यादिषु अनुस्वारस्य श्रवणात् केषाञ्चित् भ्रान्तिः - 'प्रंशसितवान्' इति रूपं साधु स्यात् इति । एतस्यैव धातोः कर्मणि रूपं 'प्रशस्यते' इति न तु 'प्रशंस्यते' इति । 'प्रशस्यते' इत्यत्र यक्प्रत्ययः । सः कित् । तस्मात् अनुस्वारलोपः । यदि बहुधा प्रयोगः श्रूयेत तर्हि स्वार्थण्यन्तात् क्तवतुप्रत्यये कृते रूपमिदं कथञ्चित् साधनीयम् ।

१११. अस्माभिः नूतना योजना **आरभणीया** अस्ति ।

'आरभणीया' इति अपशब्दः । **'आरम्भणीया'** इति प्रयोक्तव्यम् । राभस्यार्थकात् रभधातोः अनीयरि *'रभेरशब्लिटोः' (७.१.६३)* इति सूत्रेण नुमागमः, अनीयरः अजादित्वात् । अतः 'आरम्भणीया' इति साधु रूपम् । तव्यति तु 'आरब्धव्यम्' इति नुमागमरहितं रूपं, तव्यतः अजादित्वाभावात् ।

**११२.** बालकः ससन्तोषं फलं **भुनक्ति** ।

**'भुङ्क्ते'** इति प्रयोक्तव्यम् ।

भुजधातुः पालने अभ्यवहारे च अस्ति । स च उभयपदी अपि । किन्तु *'भुजोऽनवने' (१.६.६६)* इति सूत्रेण तस्मात् धातोः पालनभिन्नार्थे आत्मनेपदं विहितम् । अतः 'भुङ्क्ते' इत्येव साधु ।

**११३.** अद्यत्वे सर्वेऽपि पुस्तकानि **मुद्रापयन्ति** ।

**'मुद्रयन्ति'** इति प्रयोक्तव्यम् ।

'मुद्रां करोति' इति मुद्रयति । *'तत्करोति तदाचष्टे'* इति वार्तिकेन णिच् । णिचि परे आत्वस्य अभावात् *'अर्तिह्री...'* इति सूत्रेण न पुक् । अतः 'मुद्रापयति' इति रूपम् असाधु एव ।

विषयेऽस्मिन् किञ्चित् चिन्तनीयम् अस्ति -

कौमुद्यां 'वण्टापयति' 'लञ्जापयति' इति रूपनिर्देशावसरे लिख्यते - *'अदन्तेषु पाठबलात् अदन्तत्वे वृद्धिः इत्यन्ये । शाकटायनस्तु कथादीनां सर्वेषां पुकमाह'* इति । अदन्तपाठः प्रयोजनहीनः न भवेत् इत्यतः अतो लोपं बाधित्वा *'अचो ञ्णिति'* इति वृद्धौ *'अर्तिह्री...'* इति पुक् । एषः पुक् कथादीनाम् एव । तत्रापि शाकटायनमते एव । एतमेव अंशम् आदाय केचन 'मुद्रापयति' इत्यादीनि रूपाणि प्रयुञ्जीरन् । तस्य साधुता तु चिन्त्या एव भवति ।

'मुद्रापयति' इति प्रयोगप्राचुर्यं दृश्यते इति यदि भवन्तः मन्यन्ते तर्हि संज्ञापूर्वकविधेरनित्यत्वात् लोपो न भवति आकारस्य इति कथञ्चित् समाधेयम् ।

**११४.** भोः बाल ! सम्यक् **अभ्यस्तव्यं** भवता ।

'अभ्यस्तव्यम्' इति अपशब्दः । **'अभ्यसितव्यम्'** इति प्रयोक्तव्यम् । अभिपूर्वकः क्षेपणार्थकः 'असु'धातुः सेट् । तव्यति इटः प्राप्त्या 'अभि + असितव्यम्' इति रूपम् । निष्ठायां तु इट् न *'यस्य*

*विभाषा'* इति सूत्रेण । (क्त्वायाम् *'उदितो वा'* इति इटः वैकल्पिकत्वात् *'यस्य विभाषा'* इत्यस्य प्रवृत्तिः ।) 'अभ्यस्तवान्' इत्यादिषु स्थितम् इडभावं मनसि निधाय केचन भ्रमवशात् तव्यति अपि इडभावयुक्तं रूपं प्रयुञ्जते । तत् असत् ।

तुमुनि अपि **'अभ्यसितुम्'** इति इट्सहितम् एव रूपं स्यात् ।

**११५.** तत् **दृष्ट्वानन्तरं** तेन निर्गतम् ।

**'तस्य दर्शनस्य अनन्तरम्'** इति प्रयोक्तव्यम् । अनन्तरशब्दः वा परिहरणीयः ।

'दृष्ट्वा' इत्यत्र यः क्त्वाप्रत्ययः अस्ति सः एव दर्शनक्रियायाः पूर्वकालिकतां ज्ञापयति । प्रत्ययबलात् एव अनन्तरक्रियायाः आनन्तर्यं सिद्धम् । अतः 'अनन्तर'शब्देन नार्थः । यदि 'अनन्तर'शब्दप्रयोगः एव इष्यते तर्हि 'दर्शनस्य' इति प्रयुज्यताम् । *'कर्तृकर्मणोः कृति'* इति षष्ठी । विशेषणात् तच्छब्दात् अपि षष्ठी स्यात् । तदा च 'तस्य दर्शनस्य अनन्तरम्' इति आनुपूर्वी ।

एतादृशाः परिहर्तव्याः अन्ये केचन प्रयोगाः यथा -

- भोः बाल ! स्नानं कृत्वा अनन्तरं पठ ।
- सा वस्तूनि परिशील्य अनन्तरं धनं दत्तवती ।
- सः किञ्चित् स्मृत्वा अनन्तरम् अवदत् ।
- भोजनं कृत्वा अनन्तरम् औषधं सेव्यताम् ।
- अध्यापकः श्लोकम् उक्त्वा अनन्तरम् अर्थविवरणं कृतवान् ।
- अहं प्रातः उत्थाय देवं प्रणम्य अनन्तरम् एव गृहकार्यं करोमि ।
- त्वं पुस्तकं मित्राय दत्त्वा अनन्तरं विद्यालयं गच्छ ।

**११६.** 'निश्चिनोति इत्यस्य भूतकालरूपं **'निसचिनोत्'** इति ।

'निसचिनोत्' इति अपशब्दः । **'निरचिनोत्'** इति प्रयोक्तव्यम् । निस् + अचिनोत् इति स्थिते 'ससजुषो रुः' इति रुत्वम् । रुत्वं तु पदान्तत्वमात्रम् अपेक्षते, न तु निमित्तान्तरम् । अतः 'निस्' इत्यस्य रुत्वं प्राप्यते एव । निर् + अचिनोत् = निरचिनोत् । तस्मात् 'निसचिनोत्' इति रूपम् असाधु एव ।

एवं तर्हि 'निश्चिनोति' इत्यत्र कुतो रुत्वं न इति प्रश्नः उदियात् । निस् + चिनोति इत्यत्रापि रुत्वं तु प्राप्यते एव । खरि परत्वात् रुत्वस्य

विसर्गः । ततः विसर्गस्य सकारः । ततश्च श्चुत्वम् । अतः 'निश्चिनोति' इति रूपम् ।

११७. गृहस्वामी **भृत्यं** कार्यं कारयति ।

**'भृत्यम्'** इति प्रयोगः साधुः एव । **'भृत्येन'** इत्यपि प्रयोगः सम्भवति ।

'भृत्यः कार्यं करोति' इति अण्यन्तावस्था । तत्र भृत्यः कर्ता । ण्यन्तावस्थायां सः 'प्रयोज्यकर्ता' इति उच्यते । कृधातुप्रयोगे प्रयोज्यकर्तुः विकल्पेन कर्मसंज्ञा - *'हृक्रोरन्यतरस्याम्'* (१.४.५३) इति सूत्रेण । अतः द्वितीयान्तः प्रयोगः साधुः एव । कर्मसंज्ञाभावे तु कर्तुः तृतीया - *'कर्तृकरणयोः तृतीया'* इति सूत्रेण । अतः 'भृत्येन' इति प्रयोगः अपि साधुः ।

११८. गृहस्वामिना **भृत्येन** कार्यं कार्यते ।

'भृत्येन' इति प्रयोगः अस्थाने । **'भृत्यः'** इति प्रथमान्तं प्रयोक्तव्यम् । 'कार्यते' इत्येतत् ण्यन्तस्य कर्मणि रूपम् । ण्यन्ते कर्मणि व्यवस्था तु - 'बुद्धिभक्ष्यार्थशब्दकर्मभिन्नानां धातूनां प्रयोगे प्रयोज्यकर्मणः प्रथमा' इति । तथा हि श्लोकः -

*बुद्धिभक्ष्यार्थयोः शब्दकर्मणां च निजेच्छया ।*
*प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ।।* इति ।

'कार्यते' इत्येतत् बुद्धिभक्ष्यार्थकात् शब्दकर्मणः च भिन्नम् । अतः तस्य प्रयोगे प्रयोज्यकर्तुः भृत्यपदात् प्रथमा एव स्यात्, न तु तृतीया । अतः 'भृत्यः' इत्येव प्रयोगः स्यात् अत्र ।

## ७. सप्तमोऽध्यायः

# क्त्वाप्रत्ययः

क्त्वाप्रत्ययविषये ज्ञातव्यम् अधिकम् अस्तीत्यतः तद्विषये पार्थक्येन किञ्चित् उच्यते अत्र ।

समानकर्तृकयोः उभयोः धात्वर्थयोः मध्ये पूर्वकालके धात्वर्थे विद्यमानात् धातोः क्त्वाप्रत्ययः भवति । *'समानकर्तृकयोः पूर्वकाले' (३.४.२१)* इति सूत्रम् । यदि धातुः उपसर्गयुक्तः भवति तदा क्त्वाप्रत्ययस्य ल्यबादेशः भवति । एतत्सर्वं सर्वैः प्रायः ज्ञायते एव ।

०१. अत्र **आगत्य** कति दिनानि अतीतानि ?

आगतः कश्चन डित्थादिषु अन्यतमः । अतीतानि तु दिनानि । एवम् आगमनस्य कर्ता डित्थादिषु अन्यतमः । अयनस्य कर्तृ दिनम् । एवं कर्तृभेदः स्फुटः । समानकर्तृकत्वस्य अभावे अस्मिन् वाक्ये 'आगत्य' इति प्रयोगः किं साधुः ?

एतादृशाः प्रयोगाः प्रयोगानर्हाः न इति वदति शिष्टलोकः । अतः एतत् वाक्यं न दुष्टम् ।

अत्र 'स्थितस्य' इति पदम् अध्याहार्थम् । तदा यः आगतः सः एव स्थितः अपि । अतः तयोः समानकर्तृकता । तस्मात् न कश्चित् दोषः । अयम् अध्याहारक्रमः मल्लिनाथेन प्रदर्श्यते । मल्लिनाथस्तु 'नामूलं लिख्यते किञ्चित्' इति प्रतिज्ञाय पञ्चानां महाकाव्यानां व्याख्यानाय उद्युक्तः । तेन सा प्रतिज्ञा आन्तं पालिता अपि ।

यत्र समर्थनानर्हता तत्र सः लिखति - 'महाकविप्रयोगात् साधुः' इति ।

तस्मात् तेन यत् समर्थितं तत् स्वीकारार्हम् एव इति सिद्धम् । अन्ये व्याख्याकारादयः अपि एतादृशान् प्रयोगान् अङ्गीकुर्वन्ति ।

केचन प्राचीनप्रयोगाः यथा -

- मत्प्रसूतिमनाराध्य प्रजा ते न भविष्यति ।

  - रघुवंशे

- भक्ष्याशया हि मञ्जूषां दष्ट्वाखुः तेन भक्षितः ।

  - चन्द्रालोके

◆ दृष्ट्वेमं स्वजनं कृष्ण ...... सीदन्ति मम गात्राणि ।

- भगवद्गीता

◆ केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् इति केशाकेशि

- सिद्धान्तकौमुदी

स्थितादिपदानाम् अध्याहारेण एव एतेषु उदाहरणेषु क्त्वाप्रयोगः समर्थनीयः । तस्मात् स्पष्टं यत् एतादृशााः प्रयोगाः शिष्टासम्मताः न इति । तथापि **'आगतस्य भवतः कति दिनानि अतीतानि'** इत्येवमादिक्रमेण वाक्ययोजनम् एव प्रशस्ततरम् । क्त-क्तवत्वादीनां प्रत्ययानां प्रयोगेण अत्र निर्वाहः शक्यः । तथैव प्रयोगः वरम् ।

०२. सः वस्त्रं **प्रक्षालयित्वा** पठितुम् उद्युक्तः ।

**'प्रक्षाल्य'** इति प्रयोक्तव्यम् । 'प्रक्षालयित्वा' इति अपशब्दः । क्षलधातुः अत्र प्र-उपसर्गपूर्वकः इत्यतः क्त्वाप्रत्ययस्य ल्यबादेशः *'समासे अनञ्पूर्वे क्त्वो ल्यप्' (७.१.३७)* इति सूत्रेण । अतः धातोः उपसर्गपूर्वकत्वे ल्यप् स्यादेव । तस्मात् 'प्रक्षाल्य' इति रूपम् । ल्यपः स्थाने क्त्वाप्रयोगः अन्येषु अपि केषुचित् स्थलेषु बहुभिः क्रियमाणः दृश्यते । तद्यथा -

| *अशुद्धम् (✗)* | *शुद्धम् (✓)* |
|---|---|
| परिवर्तयित्वा | परिवर्त्य |
| समापयित्वा | समाप्य |
| परिवेषयित्वा | परिवेष्य |
| प्रकटयित्वा | प्रकटय्य |
| उत्पादयित्वा | उत्पाद्य |
| प्रदर्शयित्वा | प्रदर्श्य |
| सङ्घटयित्वा | सङ्घटय्य |
| सम्मार्जयित्वा | सम्मार्ज्य |
| उद्घाटयित्वा | उद्घाट्य |
| प्रार्थयित्वा | प्रार्थ्य |

०३. सः मित्रं **प्रेषयित्वा** आगतवान् ।

**'प्रेषयित्वा'** इति शुद्धम् एव ।

'प्रेषयति' इत्यत्र न हि 'प्र' इत्येषः उपसर्गः, प्रत्युत धात्वङ्गम् एव सः । 'प्रेषृ' इति धातुः । गत्यर्थकः सः । उपसर्गाभावात् न ल्यप् । 'प्रेषयित्वा' इति रूपम् ।

प्रविशति, प्रभवति इत्यादिषु 'प्र' इत्येषः उपसर्गः । अतः 'प्रेषयति' इत्यत्रापि उपसर्गः एव स्यात् इति केषाञ्चित् भ्रान्तिः । अतः ते 'प्रेषयित्वा' इति रूपम् अशुद्धं मन्यन्ते । तदसत् ।

अन्ये केचन - 'प्रेष्य इत्यत्र प्र इति उपसर्गः । 'इष'(गतौ) इति धातोः णिचि क्त्वाप्रत्ययस्य ल्यबादेशः । तदा 'प्रेष्य' इति रूपं सिद्ध्यति' इति वदन्ति ।

'प्रेष्य' इति प्रयोगे न अस्माकम् अपि विप्रतिपत्तिः । 'प्रेषयित्वा' इत्येतदपि शुद्धम् एव इत्यत्र नैर्भर्यम् अस्माकम् ।

०४. विषयं साकल्येन **अज्ञाय** किमपि न वक्तव्यम् ।

'अज्ञाय' इति अपशब्दः । **'अज्ञात्वा'** इति वक्तव्यम् ।

न ज्ञात्वा = अज्ञात्वा इति नञ्समासः अत्र । ल्यप् तु नञ्समासे न भवति, अपि तु अनञ्समासे एव, *'समासे अनञ्पूर्वे क्त्वो ल्यप्'* इति सूत्रे 'अनञ्पूर्व'शब्दस्य निवेशनात् । तस्मात् नञ्समासपूर्वकः क्त्वाप्रत्ययः यत्र भवति तत्र ल्यप् न करणीयः ।

०५. सः गीतं **विरच्य** प्रसिद्धिं गतः ।

'विरच्य' इति अपशब्दः । **'विरचय्य'** इति प्रयोक्तव्यम् ।

ण्यन्तात् ल्यपि *'णेरनिटि'* इति सूत्रेण णिचः लोपः स्यात् । यथा - प्रपाठ्य, विचार्य इत्यदयः । किन्तु यदा धातुः लघुपूर्वः भवति तदा णिचः लोपः न भवति, प्रत्युत अयादेशः भवति - *'ल्यपि लघुपूर्वात्' (६.४.५६)* इति सूत्रेण । 'रच'धातुः लघुपूर्वः । अतः 'विरचय्य' इति रूपम् ।

एतादृशानि अन्यानि यथा -

प्रकटयति - प्रकटय्य
प्रशमयति - प्रशमय्य
विशदयति - विशदय्य
विगणयति - विगणय्य
अवनमयति - अवनमय्य

सङ्कलयति - सङ्कलय्य
आकलयति - आकलय्य
आवरयति - आवरय्य
सन्दमयति - सन्दमय्य
सङ्गमयति - सङ्गमय्य

०७. सः तत् पुस्तकं **मुद्राप्य** महतीं हानिम् अनुभूतवान् ।

'मुद्राप्य' इति अपशब्दः । **'मुद्रयित्वा'** इति वक्तव्यम् ।
मुद्रां करोति इति मुद्रयति । 'तत्करोति तदाचष्टे' इति वार्तिकेन णिच् । तस्य क्त्वाप्रत्यये 'मुद्रयित्वा' इति रूपम् । अत्र उपसर्गः कोऽपि नास्तीत्यतः ल्यपः अप्राप्तिः समाद्युपसर्गयोगे तु 'सम्मुद्र्य' इत्यादीनि रूपाणि भवेयुः ।
केचन अत्र आपुकम् इच्छन्ति । तदा मुद्रापयति इति रूपम् । तदा अपि 'मुद्रापयित्वा' इति क्त्वान्तम् एव रूपम्, न तु ल्यबन्तम् । अत्रापि उपसर्गस्य अभावात् ल्यपः अप्राप्तिः ।

०८. सः मुखं **परिवृत्य** दृष्टवान् ।

**'परिवर्त्य'** इति प्रयोक्तव्यम् । 'परिवृत्य' इति प्रयोगः अस्थाने । परिवर्तते इत्येतत् अकर्मकम् । तस्य ल्यबन्तं रूपं भवति - 'परिवृत्य' इति । उपर्युक्ते वाक्ये तु सकर्मकता आवश्यकी । अतः ण्यन्तं रूपं प्रयोक्तव्यम् । ण्यन्तस्य (परिवर्तयति इत्यस्य) ल्यबन्तं रूपं 'परिवर्त्य' इति ।

०९. एतं विषयम् **आधार्य** मया एकः लेखः लिख्यते ।

**'आधारीकृत्य'** इत्यर्थे अत्र 'आधार्य' इति प्रयोगः कृतः । स च अस्थाने । 'आ' इत्युपसर्गपूर्वकः धारणार्थकः धृञ्धातुः अत्र । स्वार्थे णिच् । तदानीं धात्वर्थः च 'आधारः भूत्वा' 'आश्रयं दत्त्वा' इति भवति । स च अर्थः अत्र न अभिप्रेतः । 'आश्रयं कृत्वा' इत्यर्थः अत्र अभिप्रेतः । स च 'आधार्य' इति पदात् न प्राप्यते ।

१०. सैनिकः शत्रुं **लक्षीकृत्य** शूलं क्षिप्तवान् ।

'लक्षीकृत्य' इति प्रयोगः दोषाय । **'लक्ष्यीकृत्य'** इति प्रयोक्तव्यम् । यत् अलक्ष्यम् आसीत् तस्य लक्ष्यत्वसम्पादनम् एव लक्ष्यीकरणं नाम । अलक्ष्यं लक्ष्यं कृत्वा लक्ष्यीकृत्य । लक्ष्यं नाम वेध्यत्वेन

प्राप्यत्वेन वा इष्टम् । लक्षं नाम काचित् सङ्ख्या । शूलक्षेपणावसरे लक्षस्य (संख्यायाः) न कापि प्रसक्तिः । अतः लक्षशब्दः अत्र अस्थाने । प्रादेशिकभाषायां 'लक्ष्य'शब्दस्य स्थाने 'लक्ष'शब्दः प्रयुज्येत । कामं प्रयोगः भवतु तत्र । किन्तु संस्कृते तु 'लक्ष्य'शब्दस्य प्रयोगः एव औचित्यम् आवहति ।

११. भोः, दीपं **प्रज्वाल्य** उपविश ।

**'प्रज्वाल्य'** इति प्रयोगः न दोषाय ।

प्रज्वालयति इत्यत्र पक्षद्वयम् अस्ति इति, प्रज्वलयति (ह्रस्वोपेतं रूपम्), प्रज्वालयति (दीर्घोपेतं रूपम्) इत्युभयमपि शुद्धमिति च क्रियापद-प्रकरणे अस्माभिः दृष्टम् अस्ति ।

सोपसर्गे 'मितां ह्रस्वः' इति पक्षः यदा आश्रीयते तदा प्रज्वलेः ल्यपि *'ल्यपि लघुपूर्वात्'* इति अयादेशे **'प्रज्वलय्य'** इति रूपम् । घञन्ताण्णिचि 'प्रज्वालयति' इति भवति इति पक्षः यदा आश्रीयते तदा तु ह्रस्वाभावात् न अयादेशः । ततः **'प्रज्वाल्य'** इति ल्यबन्तं रूपम् । तस्मात् प्रज्वाल्य इति रूपम् अपि साधु एव ।

१२. सा गीतं **गात्वा** देवं नमस्कृतवती ।

'गात्वा' इति अपशब्दः । **'गीत्वा'** इति प्रयोक्तव्यम् ।

गैधातोः *'घुमास्थागापाजहातिसां हलि' (६.४.५६)* इति सूत्रेण ईकारः, क्त्वाप्रत्ययस्य हलादित्वात् कित्त्वाच्च । तस्मात् 'गीत्वा' इति रूपम् ।

१३. पाचकः अन्नं **परिविष्य/परिवेष्य** गतः ।

**'परिविष्य' 'परिवेष्य'** इति उभयथा अपि साधु ।

'परिवेवेष्टि', 'परिवेषयति' इत्यनयोः समानार्थकता (एकत्र अण्यन्तः धातुः । अपरत्र ण्यन्तः । ण्यन्ते णिच् स्वार्थे ) इति पूर्वम् उक्तम् । (६. क्रियापदविभागः - १०) अण्यन्तप्रकृतिकं (परिवेवेष्टि) 'परि-विष्य' इति । ण्यन्तप्रकृतिकं (परिवेषयति) 'परिवेष्य' इति । अतः उभयथा अपि साधुता ।

क्वचित् परिविश्य/परिवेश्य इति तालव्यः शकारः लिख्येत । तत् तु अशुद्धम् । 'उपविश्य' इत्यादीनां सादृश्यभ्रमात् ते तथा लिखेयुः । 'विष्लृ'धातुः मूर्धन्य'ष'कारोपेतः । अतः ल्यबन्तरूपे अपि मूर्धन्यः

षकारः एव, न तु तालव्यः शकारः ।

१४. मन्त्री सैनिकान् **आज्ञप्य** निर्गतवान् ।

'आज्ञप्य' इति असाधु । **'आज्ञाप्य'** इति प्रयोक्तव्यम् ।

'ज्ञा'धातोः णिचि निष्ठाप्रत्यये परे एव *'वा दान्तशान्त.........ज्ञप्ताः' (७.२.२८)* इति सूत्रेण ह्रस्वस्य विधानम् । क्तक्तवतू 'निष्ठा'शब्देन निर्दिश्येते । 'आज्ञाप्य' इत्यत्र ल्यप् । सः न निष्ठाप्रत्ययः । अतः ह्रस्वः न । तस्मात् 'आज्ञाप्य' इति एकमेव रूपम् । (क्तवतुप्रत्यये तु आज्ञापितवान् / आज्ञप्तवान् इति रूपद्वयम् । एवमेव क्तप्रत्यये अपि ।)

१५. एतत् तस्मै **प्रतिदत्त्वा** आगच्छतु ।

**'प्रतिदाय'** इति प्रयोक्तव्यम् । 'प्रतिदत्त्वा' इति अपशब्दः ।

दाधातोः क्त्वाप्रत्यये 'दत्त्वा' इति रूपम् । उपसर्गयोगे तु *'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (७.१.३७)* इति सूत्रेण क्त्वो ल्यबादेशः । तदा 'प्रतिदाय' इति रूपम् । उपसर्गयोगे ल्यप् नित्यः । अतः 'प्रतिदत्त्वा' इति रूपम् अशुद्धम् ।

१६. आरक्षकं दृष्ट्वा चोरः **निगूह्य** स्थितवान् ।

**'निलीय'** इति, **'आत्मानं निगूह्य'** इति वा प्रयोक्तव्यम् ।

संवरणार्थकः गुहूधातुः सकर्मकः । तस्मात् स्पष्टं यत् निगूह्य इत्यस्य किमपि कर्म स्यात् इति । 'आत्मानं निगूह्य' इति प्रयोगे तु कर्मणः उपादानात् न कापि विप्रतिपत्तिः । यदि तत् न इष्यते तर्हि अकर्मकः नि + लीङ्-श्लेषणे इत्येषः धातुः प्रयुज्यताम् । तदा तु कर्मणः प्रसक्तिः नास्ति ।

## ८. अष्टमोऽध्यायः

# समासः

०१. अर्जुनः भगवतः **विराट्रूपं** दृष्टवान् ।

'विराट्रूपम्' इति दोषाय । **'विराड्रूपम्'** इति प्रयोक्तव्यम् । समासे हि सन्धिः नित्यः । अतः पदान्ते स्थितस्य वर्गीयव्यञ्जनस्य टकारस्य मृदुव्यञ्जने रेफे परे टवर्गस्य तृतीयव्यञ्जनं (डकारः) आदेशः स्यात् *'झलां जशोऽन्ते' (८.२.३९)* इति सूत्रेण । एवम् अत्र जश्त्वसन्धिः नित्यं प्रवर्तते, न तु विकल्पेन । तस्मात् 'विराड्-रूपम्' इति जश्त्वसहितं रूपम् एव साधु ।

एतादृशानि उदाहरणान्तराणि यथा -

| *अशुद्धम् (✗)* | *शुद्धम् (✓)* |
|---|---|
| षट्-अधिकेषु | षडधिकेषु |
| तत्-अनन्तरम् | तदनन्तरम् |
| सम्पत्विनियोगः | सम्पद्विनियोगः |
| विपत्भीतिः | विपद्भीतिः |
| भगवत्भक्तिः | भगवद्भक्तिः |
| त्वक्विमोचनम् | त्वग्विमोचनम् |
| भिषक्वरः | भिषग्वरः |
| दिक्भ्रमः | दिग्भ्रमः |

०२. कक्ष्यायां **षड्सप्ततिः** जनाः सन्ति ।

षड्सप्ततिः इति अपशब्दः । **'षट्सप्ततिः'** इति प्रयोक्तव्यम् । 'समासे सन्धिः नित्यः' इति तु ज्ञायते एव । पदान्ते स्थितस्य वर्गीय-व्यञ्जनस्य डकारस्य टकारः *'खरि च' (८.४.५५)* इति सूत्रेण ।

एतादृशानि उदाहरणान्तराणि यथा -

| *अशुद्धम् (✗)* | *शुद्धम् (✓)* |
|---|---|
| सद्कीर्तिः | सत्कीर्तिः |
| विराड्स्वरूपम् | विराट्स्वरूपम् |
| ऋत्विग्प्रमुखः | ऋत्विक्प्रमुखः |

०३. **सार्ध एकादशवादने** मम विद्यालयस्य आरम्भः ।
**'सार्धैकादशवादने'** इति प्रयोक्तव्यम् ।
समासे सन्धिः नित्यः एव खलु ? अतः अत्र वृद्धिः स्यादेव *'वृद्धिरेचि' (६.१.८८)* इति सूत्रेण । अतः अत्र वृद्धिसहितं रूपम् एव शुद्धम् ।
क्वचित् 'सार्ध-एकादशवादनम्' इति लिख्यते प्राथमिकस्तरे बोधनाय । तन्नाम सन्ध्यर्हयोः उभयोः वर्णयोः मध्ये रेखिका(-) (लघुरेखा) लिख्यते । एषा ज्ञापयति यत् अत्र सन्धिः यद्यपि इष्टः, तथापि प्राथमिकस्तरीयाणां बोधनाय स च न कृतः इति । सन्धिः तु अत्र नित्यः एव ।

०४. रघुः **मृण्मयेन** पात्रेण कौत्साय अर्घ्यं दत्तवान् ।
'मृण्मयेन' इत्यत्र णत्वं दुर्लभम् । **'मृन्मयेन'** इति णत्वरहितं रूपं प्रयोक्तव्यम् ।
अत्र प्रक्रिया किञ्चिदवगन्तव्या । मृद् + मयम् इति स्थिते *'प्रत्यये भाषायां नित्यम्'* इति वार्तिकेन (सू. ८.४.४५) दकारस्य नकारः । एवं च एतत् सूत्रम् अष्टमाध्यायस्य चतुर्थे पादे अस्ति । णत्वविधायकं सूत्रं तु [*'रषाभ्यां नो णः...'* (८.४.१) इति सूत्रं, 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति वार्तिकं च] चतुर्थे पादे ततोऽपि प्राक् अस्ति । अतः णत्वे कर्तव्ये नकारस्य असिद्धत्वात् णत्वं न प्रवर्तते । अतः 'मृन्मयः' इत्येव रूपम् ।

०५. रमेशः **संशोधन तथा अभिवृद्धिविभागे** कार्यं करोति ।
**'संशोधनाभिवृद्धिविभागे'** इति प्रयोक्तव्यम् । ।
समस्तपदयोः मध्ये 'तथा' इत्यस्य प्रवेशः न भवत्येव । संशोधनम् अभिवृद्धिः च संशोधनाभिवृद्धी । तयोः विभागः संशोधनाभिवृद्धि-विभागः । एषः आशयः वक्त्रा प्रकाशयितुम् इष्टः । अतः एतादृशे समासस्थले 'तथा' इत्यस्य प्रयोगः न भवत्येव । प्रादेशिकभाषा-प्रभावकारणतः एतादृशाः प्रयोगाः क्रियन्ते कैश्चित् ।

०६. **मासपर्यन्तम्** एतत् कार्यं समाप्तं भविष्यति ।
'मासपर्यन्तम्' इति शब्दः न अपेक्षितार्थाभिधायी । **'मासाभ्यन्तरे'** इति प्रयोक्तव्यम् ।

'मासात्मकस्य अवधेः समाप्तितः पूर्वं कार्यं समाप्तिम् एष्यति' इति वक्तुम् इच्छति वक्ता । हिन्दीभाषायां तु 'महिने तक' इति प्रयोगः क्रियते । तस्य अनुकरणं कुर्वद्भिः 'मासपर्यन्तम्' इति उच्यते । 'पर्यन्त'शब्दः न हि अपेक्षितम् अर्थं गमयति। अतः अत्र 'अभ्यन्तरे' इति प्रयोक्तव्यम् ।

०७. बालकः मातरं **न उक्त्वा** विद्यालयं गतवान् ।

'न उक्त्वा' इत्ययं प्रयोगः न विवक्षितम् अर्थम् अवगमयति । **'अनुक्त्वा'** इति समस्तं रूपं प्रयोक्तव्यम् ।

नञः अर्थद्वयं - *पर्युदासः प्रसज्यप्रतिषेधश्चेति । पर्युदासे नञर्थस्य अप्राधान्यम्। सः समस्यते । अतः तत्र उत्तरपदेन अन्वयः । प्रसज्यप्रतिषेधे नञर्थस्य प्रधानता । तत्र न समासः । नञः क्रियायाम् अन्वयः ।

'बालः विद्यालयं न गच्छति' इत्यत्र प्रसज्यप्रतिषेधः । अत्र नञः क्रियायाम् अन्वयः । पर्युदासः तु पूर्वोक्तः ।

यत्र स्वातन्त्र्येण नञ् प्रयुज्यते तत्र तस्य क्रियायाम् अन्वयः । अतः एव वाक्यादौ अपि तस्य प्रयोगः यथा - नाहम् आगच्छामि ।

'स्वातन्त्र्येण प्रयुक्तः नञ् क्रियायाम् एव अन्वयं प्राप्नोति' इति तात्पर्यम् ।

प्रकृतवाक्ये तु प्रयोक्त्रा 'कथनस्य अभावः गमनं च' अपेक्ष्यते । किन्तु तदनुगुणः शब्दविन्यासः न कृतः । स्वातन्त्र्येण प्रयुक्तः नञ् प्रधानक्रियया अन्वितः भवति । तस्मात् (गमनाभावः कथनं च) 'मातरम् उक्त्वा न गतवान्' इति आशयः एतस्मात् वाक्यात् अभिव्यज्यते । स च वक्तुः न इष्टः ।

यदि उत्तरपदेनैव नञः सम्बन्धः इष्यते तर्हि समासः अवश्यं विधेयः । 'अनुक्त्वा' इत्येव प्रयोक्तव्यम् ।

०८. कटम् इदानीं **पुटी न करोतु** । अनन्तरं कर्तुं शक्यते ।

'पुटी न करोतु' इति दोषाय । **'न पुटीकरोतु'** इति वक्तव्यम् । 'पुटीकरोति' इत्यत्र पुटी इति च्विप्रत्ययान्तं रूपम् । *'कृभ्वस्तियोगे*

---

* **पर्युदासः** स विज्ञेयः यत्रोत्तरपदेन नञ् ।
**प्रसज्यप्रतिषेधो**ऽसौ क्रियया सह यत्र नञ् ।

*सम्पद्यकर्तरि च्विः' (५.४.५०)* इति च्विः । *'ऊर्यादिच्विडाचश्च' (१.४.६१)* इति सूत्रेण च्विप्रत्ययान्तस्य क्रियायोगे गतिसंज्ञा । *'ते प्राग्धातोः' (१.४.८०)* इति सूत्रेण 'गतिसंज्ञकाः धातोः प्रागेव प्रयोक्तव्याः' इति विधिः । अतः 'पुटीकरोति' इति रूपम् । नञ् तु च्व्यन्तात् एव अन्वयं प्राप्नोति, न तु 'करोति'मात्रात् । अतः 'पुटी न करोति' इति प्रयोगः असाधुः ।

०९. **शास्त्रीमहोदयः** अद्य अस्माकं गृहम् आगच्छति ।
'शास्त्रीमहोदयः' इति अपशब्दः । **'शास्त्रिमहोदयः'** इति प्रयोक्तव्यम् ।
समासे पूर्वपदस्य विभक्तिश्रवणं न । (अलौकिकविग्रहोत्तरम् उभयोः अपि पदयोः विभक्तेः लोपः भवति । ततः समस्तात् पदात् सुबुत्पत्तिः । तस्मात् उत्तरपदोत्तरम् एव विभक्तिः दृश्यते, न तु पूर्वपदस्य अनन्तरम्) पूर्वपदं *प्रातिपदिकरूपेण तिष्ठति । 'शास्त्री' इति प्रथमान्तं रूपम् । तस्य प्रातिपदिकं 'शास्त्रिन्' इति । पूर्वपदस्थस्य प्रातिपदिकान्तस्य नकारस्य लोपः भवति *'नलोपः प्रातिपदिकान्तस्य' (८.२.७)* इति सूत्रेण । तस्मात् 'शास्त्रिमहोदयः' इति रूपम् ।
इन्नन्तस्य नकारान्तस्य च प्रथमान्ते दीर्घः श्रूयते इत्यतः केचन समासप्रक्रियाम् अज्ञात्वा समस्तपदस्य पूर्वपदस्यापि दीर्घं कुर्वन्ति भ्रान्त्या ।
येषां विषये भ्रान्तिः भवितुम् अर्हति तादृशाः केचन शब्दाः - शर्ममहोदयः, वर्ममहोदयः, द्विवेदिवर्यः, घनपाठिमहोदयः, वाजपेयिवर्यः इत्यादयः ।

१०. **महात्मागान्धिवर्येण** श्रेष्ठः आचारः दर्शितः ।
**'महात्मगान्धिवर्येण'** इति प्रयोक्तव्यम् ।
महात्मशब्दः नकारान्तः । पूर्वपदत्वेन तस्य प्रयोगे नकारलोपे च 'महात्मगान्धिवर्यः' इति रूपम् । यदि व्यस्तप्रयोगः इष्यते तर्हि **'महात्मना गान्धिवर्येण'** इति प्रयोगः करणीयः ।

११. रमाकान्तः **शास्त्रीपरीक्षाम्** उत्तीर्णः अस्ति ।

---

* नामपदानां मूलप्रकृतिः 'प्रातिपदिकम्' इति उच्यते । यत् प्रतिपदं भवति तत् उच्यते प्रातिपदिकम् इति ।

'शास्त्रीपरीक्षाम्' इति अपशब्दः । **'शास्त्रिपरीक्षाम्'** इति प्रयोक्तव्यम् ।
उपाधेः नाम 'शास्त्री' इति । स च इन्नन्तः । समासे पूर्वपदस्य नकारलोपे 'शास्त्रिपरीक्षा' इति । नलोपस्तु सर्वेषु अपि समासेषु भवति एव । शास्त्री इति परीक्षा शास्त्रिपरिक्षा इति सम्भावनापूर्वपदः कर्मधारयः ।

१२. संस्कृतस्य केवलेन **महिमावर्णनेन** न किमपि प्रयोजनम् ।
'महिमावर्णनम्' इति अपशब्दः । **'महिमवर्णनम्'** इति प्रयोक्तव्यम् ।
महिमशब्दः नकारान्तः । 'महिमन्' इति प्रातिपदिकम् । समासे पूर्वपदस्थस्य नकारस्य लोपे (सूत्रं पूर्वोदाहरणे दत्तम्) 'महिमवर्णनम्' इति रूपम् । केचन भ्रान्त्या महिमशब्दम् आकारान्तं मत्त्वा 'महिमावर्णनम्' इति प्रयुञ्जते । महिमशब्दः नकारान्तः पुँल्लिङ्गः, न तु आकारान्तः ।
एतत्सदृशः 'सीमन्' इति कश्चन शब्दः अपि अस्ति । सः नकारान्तः स्त्रीलिङ्गः । तस्य तु आकारान्तता अपि अस्ति । अतः 'सीमा सीमानौ सीमानः' इति, 'सीमा सीमे सीमाः' इति च रूपाणि तस्य । महिमशब्दः न आकरान्ततायुक्तः ।

१३. अद्य **संस्कृतछात्राः** नाटकं प्रदर्शयन्ति ।
'संस्कृतछात्राः' इति अपशब्दः । **'संस्कृतच्छात्राः'** इति प्रयोक्तव्यम् ।
ह्रस्वस्य छकारे परे तुगागमः नित्यः *'छे च' (६.१.७३)* इति सूत्रेण । तुगागमे कृते श्चुत्वे 'संस्कृतच्छात्रः' इति रूपम् । दीर्घात् पदान्तात् छे परे तुगागमः विकल्पेन । ह्रस्वस्य छे परे तु तुक् नित्यः एव । अतः 'च'काररहितं रूपम् असाधु ।
एवमेव प्रियच्छात्राः, अद्यतनच्छात्राः, विद्यालयच्छात्राः, पुंरुषच्छात्रावासः, श्वेतच्छत्रम् इत्यादिषु अपि तुगागमः । तत्र तुगागमरहितं रूपं नास्ति ।

१४. सीतायाः **पतये** मया धनं दत्तम् ।
'पतये' इति अपशब्दः । **'पत्ये'** इति प्रयोक्तव्यम् ।

पतिशब्दः हरिशब्दात् अन्यः । हरिशब्दः 'घि'संज्ञकः । अतः हरिणा हरये इत्यादीनि रूपाणि भवन्ति । पतिशब्दस्य समासे एव घिसंज्ञा, अन्यत्र न । घिसंज्ञाभावात् पतये इति रूपं न शुद्धम् । 'पत्ये' इत्येव शुद्धम् ।

१५. **सीतापत्ये** मया धनं दातव्यम् ।
'सीतापत्ये' इति अपशब्दः । **'सीतापतये'** इति प्रयोक्तव्यम् ।
समासे पतिशब्दः घिसंज्ञकः । *'पतिः समास एव' (१.४.८)* इति सूत्रेण समासे *'घेर्ङिति'(७.३.१११)* इति सूत्रेण गुणः । तस्मात् **'सीतापतये'** इति रूपम् ।
सीतापतिशब्दः (पत्यन्तः शब्दः) हरिशब्दवत् । केवलः पतिशब्दः घिसंज्ञानिमित्तकानि कार्याणि न प्राप्नोति ।

१६. त्रिविक्रमः **मध्यरात्रौ** श्मशानभूमौ सञ्चरति स्म ।
'मध्यरात्रौ' इति अपशब्दः । **'मध्यरात्रे'** इति प्रयोक्तव्यम् ।
केवलः रात्रिशब्दः इकारान्तः । मध्यशब्दः एकदेशवाची । अतः मध्यशब्दात् परो यो रात्रिशब्दः तस्मात् अच्प्रत्ययः *'अहःसर्वैक-देशसङ्ख्यातपुण्याच्च रात्रेः' (५.४.८७)* इति सूत्रेण । तन्नाम अकारान्तता । 'रात्राह्नाहाः पुंसि' इति पुंस्त्वं च । अतः 'मध्यरात्रः' इति साधु रूपम् ।
एवमेव अर्धरात्रः, पूर्वरात्रः, अपररात्रः, सर्वरात्रः, संख्यातरात्रः, पुण्यरात्रः इत्यादयः अपि ।

१७. **नवरात्र्युत्सवदिने** सर्वे आनन्दम् अनुभवन्ति ।
'नवरात्र्युत्सवदिने' इति अपशब्दः । **'नवरात्रोत्सवदिने'** इति प्रयोक्तव्यम् । नवानां रात्रीणां समाहारः नवरात्रम् । संख्यया रात्रिशब्दस्य समासे *'अहःसर्वैकदेश...'* इति सूत्रेण अच्प्रत्ययः । तन्नाम अकारान्तता । *'सङ्ख्यापूर्वं रात्रं क्लीबम्'* इति लिङ्गानुशासनसूत्रेण सङ्ख्यापूर्वस्य रात्रिशब्दस्य नपुंसकता ।
एवमेव एकरात्रं, द्विरात्रं, त्रिरात्रम् इत्यादिषु सर्वेषु संख्यापूर्वेषु ज्ञेयम् ।

१८. अहश्च रात्रिश्च इति विग्रहे **अहोरात्रम्** इति रूपम् ।
**'अहोरात्रः** इति रूपम्' इति प्रयोक्तव्यम् ।
अहोरात्रशब्दस्य 'अहश्च रात्रिश्च' इति विग्रहस्तु युक्तः एव । द्वन्द्व-

समासः अत्र । द्वन्द्वे कृते *'रात्राह्नाहाः पुंसि'* *(२.४.२९)* इति सूत्रेण रात्रिशब्दः पुंस्त्वं प्राप्नोति । तस्मात् 'अहोरात्रः' इति रूपम् । 'बालकः अहोरात्रं पठति' इत्यत्र तु अहोरात्रशब्दोत्तरं यत् 'अम्' दृश्यते तत् न नपुंसकगतम्, अपि तु द्वितीयाविभक्तिगतम् । तत् नंपुसकत्वभ्रमं जनयति इति तु सत्यम् ।

**१९.** राष्ट्रनायकः गान्धिवर्यः **पथप्रदर्शकः** आसीत् ।

**'पथिप्रदर्शकः'** इति रूपं वरम् । **'मार्गप्रदर्शकः'** इति तु युक्तः प्रयोगः ।

'पथिन्' इति नान्तः शब्दः सः । पूर्वपदत्वेन तस्य प्रयोगे नकारलोपे **'पथिप्रदर्शकः'** इति रूपम् ।

'पथप्रदर्शकः' इति यदि प्रामाणिकः प्रयोगः स्यात् तर्हि सः कथञ्चित् समर्थयितुम् अपि शक्यः । मार्गार्थे एव अकारान्तः 'पथ'शब्दः कश्चन अस्ति । *'वाटः पथश्च मार्गश्च'* इति त्रिकाण्डकोषः । तं पूर्वपदत्वेन उपयुज्य 'पथप्रदर्शकः' इत्यपि समर्थयितुं शक्यम् ।

एवमेव 'पथसञ्चलनम्' इत्यत्रापि । 'पथिसञ्चलनम्' इति प्रयोगः प्रशस्तः । प्रामाणिके प्रयोगे सत्येव 'पथसञ्चलनम्' इत्येतस्य समर्थनं चिन्तयितुं शक्येत ।

**२०.** भवता **महदुपकारः** अनुष्ठितः ।

**'महोपकारः'** इति, **'महान् उपकारः'** इति वा प्रयोक्तव्यम् । 'महदुपकारः' इति अपशब्दः ।

महान् उपकारः इति विग्रहः । कर्मधारये बहुव्रीहौ च महतः तकारस्य आत्वं विहितम् - *'आन्महतः समानाधिकरणजातीययोः'* *(६.३.४६)* इति सूत्रेण । आत्वे महा + उपकारः इति सिद्धे गुणेन 'महोपकारः' इति रूपं सिद्ध्यति । यदि समासः न इष्यते तर्हि 'महान् उपकारः' इति रूपम् । समानाधिकरणसमासे सति पूर्वपदस्थस्य महतः तकारस्य आत्वं नित्यम् । अतः 'महदुपकारः' इति न भवति । महतः (महापुरुषस्य) उपकारः इति षष्ठीतत्पुरुषः यदि क्रियेत तर्हि तु 'महदुपकारः' इत्येव । तत्र महतः न आत्वं सामानाधिकरण्यस्य अभावात् । स च अर्थः अत्र न अभिप्रेतः । अतः महोपकारः इत्येव रूपम् ।

एवमेव महानन्दः इत्यादिषु अपि ।

२१. इदं **महदाश्चर्यम्** ।

**'महदाश्चर्यम्'** इति प्रयोगः न दोषाय । **'महाश्चर्यम्'** इत्यपि प्रयोगः भवितुम् अर्हति ।

'महत् आश्चर्यम्' इति व्यस्तप्रयोगः । सन्धौ कृते 'महदाश्चर्यम्' इति रूपम् । यदि समासः इष्यते तर्हि महतः तकारस्य आत्वं स्यादेव । तदा तु 'महाश्चर्यम्' इति रूपम् । आश्चर्यशब्दस्य नपुंसकलिङ्गत्वात् महच्छब्दस्यापि नपुंसके 'महत् ' इति रूपम् । महोपकारः इत्यत्र तु उपकारशब्दस्य पुंस्त्वात् महतः पुंस्त्वे महान् इति रूपम् ।

२२. **देवशर्मराज्ञः** शासनम् अत्युत्तमम् आसीत् ।

'देवशर्मराज्ञः' इति अपशब्दः । **'देवशर्मराजस्य'** इति प्रयोक्तव्यम् ।

केवलस्य राजशब्दस्य षष्ठ्यन्तं रूपं 'राज्ञः' इति । किन्तु तत्पुरुषे राजशब्दः यदा अन्ते भवति तदा तस्य 'टच्'प्रत्ययः । *'राजाहः-सखिभ्यष्टच्' (५.४.९१)* इति सूत्रेण । तेन अकारान्तता ।

'देवशर्मा इति राजा' इत्यत्र कर्मधारयः । स च तत्पुरुषभेदः । अतः अत्रापि टच्प्रत्ययकारणतः अकारान्तता । तेन 'देवशर्मराजः' इति रूपम् । तस्य षष्ठीविभक्त्यन्तं रूपं - 'देवशर्मराजस्य' इति ।

एतादृशानि एव अन्यानि उदाहरणानि यथा -

| अशुद्धम् (✗) | शुद्धम् (✔) |
|---|---|
| सामन्तराजानः | सामन्तराजाः |
| मोगलराजानः | मोगलराजाः |
| अस्मद्राज्ञः | अस्मद्राजस्य |
| अवन्तिराजानम् | अवन्तिराजम् |
| स्वराज्ञः | स्वराजस्य |
| रघुनामकराजानम् | रघुनामकराजम् |

२३. वत्स ! **पाणिपादान्** प्रक्षाल्य भोजनार्थम् आगच्छ ।

'पाणिपादान्' इति अपशब्दः । **'पाणिपादम्'** इति प्रयोक्तव्यम् । अत्र पाण्योः पादयोः च समासः इष्यते । पाणी च पादौ च

प्राण्यङ्गानि । (मानवानाम् अङ्गानि । मानवाः अपि प्राणिनः । प्राणाः येषां सन्ति ते प्राणिनः ।) प्राण्यङ्गानां द्वन्द्वः यदा इष्यते तदा समाहारद्वन्द्वः एव करणीयः । एकवद्भावस्य विधायकं सूत्रम् अस्ति - *'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (२.४.२)* इति । अतः पाण्योः पादयोः च समाहारः 'पाणिपादम्' । अत्र इतरेतरद्वन्द्वः निषिद्धः । एष समाहारः 'नित्यसमाहारः' इति उच्यते ।

२४. **पितापुत्रौ** नगरं गच्छतः ।

**'पितापुत्रौ'** इति रूपं न दोषय ।

पिता च पुत्रः च इति विग्रहः । पूर्वपदस्य प्रातिपदिकत्वे 'पितृपुत्रौ' इति स्यात् । किन्तु *'आनङ् ऋतो द्वन्द्वे' (६.३.२५)* इति सूत्रेण पुत्रशब्दे परे अपि आनङः विधानात् 'पितापुत्रौ' इति रूपम् । पुत्रशब्दे परे एव आनङ्, पितामहादिषु परेषु न । अतः 'पितृपितामहौ' इत्यादीनि आनङ्रहितानि रूपाणि ।

'माता च पुत्री च' इति विग्रहे पूर्वपदस्य आनङि 'मातापुत्र्यौ' इति रूपम् । *'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्'* इति परिभाषया पुत्रशब्देन पुत्रीशब्दः अपि गृह्यते । तस्मात् आनङ् ।

२५. **पिताकार्यकर्तारौ** इह न आगतौ ।

'पिताकार्यकर्तारौ' इति अपशब्दः । **'पितृकार्यकर्तारौ'** इति प्रयोक्तव्यम् ।

पिता च कार्यकर्ता च इति विग्रहः । यद्यपि उभौ शब्दौ ऋकारान्तौ, तथापि न अत्र तयोः विद्यासम्बन्धः योनिसम्बन्धः वा । *'आनङ् ऋतो....'* इति सूत्रे न केवलम् ऋकारान्तता उक्ता, अपि तु 'विद्या-योनिसम्बन्धः अपि स्यात्' इति उक्तम् । अतः तादृशस्य सम्बन्धस्य अभावात् न आनङ् ।

२६. कार्यकर्तृभिः **लघुलघुकार्येषु** अपि अवधानं दातव्यम् ।

**'लघुषु अपि कार्येषु'** इति वाक्यविन्यासः वरम् ।

'लघूनि यानि कार्याणि भवन्ति तेषु' इति वक्तुम् इच्छति वाक्यप्रयोक्ता । कार्यशब्दस्य बहुवचनत्वे तद्विशेषणस्य लघुशब्दस्यापि बहुत्वं स्यात् । तस्मात् 'लघुषु कार्येषु' इति वाक्यविन्यासः करणीयः ।

अथवा लघु-कार्ययोः यदि समासः इष्यते तर्हि पूर्वपदस्य प्रातिपदिकत्वे

'लघुकार्येषु' इति प्रयोगः ।

प्रयोक्त्रा तु लघुशब्दः द्विः उच्चारितः । द्विः उच्चारणमात्रेण परमलघुत्वं तु न सिध्यति । अन्यच्च, यदा द्विः उच्चारणं भवति तदा एकशेषस्य प्रसक्तिः निवारयितुं न शक्या । अतः एकस्यैव अवशेषः भवितुम् अर्हति । (लघूनि च लघूनि च लघूनि इति एकशेषः, 'रामाः' इत्यादिषु यथा तथा ।)

यदि द्विरुच्चारणे एव प्रीतिः तर्हि व्यस्तप्रयोगः क्रियताम् - 'लघुषु लघुषु कार्येषु' इति ।

एवमेव -

| | |
|---|---|
| १. स्वस्वकार्याणि | २. दीर्घदीर्घवाक्येषु |
| ३. सहस्रसहस्रजनाः | ४. कोटिकोटिरूप्यकाणि |
| ५. भिन्नभिन्नकार्यक्रमाः | ६. शतशतनमस्काराः |
| ७. बहुबहुसन्तोषः | ८. शतशतसमस्याः |
| ९. महामहानगरेषु | १०. बृहद्बृहत्पात्रेषु |

इत्यादयः ये प्रयोगाः श्रूयन्ते तेषु अपि द्विरुक्तेः परिहारः वरम् ।

**२७.** कार्यक्रमे संस्कृतज्ञाः आसन् । **तदितराः** अपि आसन् ।

'तदितराः' इति अपशब्दः । **'तदितरे'** इति प्रयोक्तव्यम् ।

इतरशब्दः सर्वनामसंज्ञायुक्तः । तस्य बहुवचनरूपम् 'इतरे' इति, न तु 'इतराः' इति । तत्पुरुषसमासे अपि तस्य बहुवचनरूपम् 'इतरे' इति, न तु 'इतराः' इति । तत्पुरुषसमासे अपि तस्य सर्वनामता तु न अपगच्छति । अतः 'तदितरे' इति रूपम् ।

एवमेव तदितरस्मै, तदितरस्मात्, तदितरेषाम् इत्यादीनि अपि रूपाणि । 'सर्वनामसम्बद्धानि कार्याणि अवश्यं करणीयानि अत्र' इति तु सारः ।

'इतरशब्दः कथं समस्यते ?' इति कश्चन प्रश्नः अत्र उदेति । 'सः इतरः यस्मात् सः' इति बहुव्रीह्याश्रयणात् शक्यते इति दुर्घटवृत्ति-

---

१. 'स्वीयानि कार्याणि' इति व्यस्तः प्रयोगः शोभते ।

३. 'सहस्राधिकाः जनाः' इति प्रयोगः भवितुम् अर्हति ।

५. 'विभिन्नाः कार्यक्रमाः' इति प्रयोगः वरं स्यात् ।

७. 'महान् सन्तोषः' इति प्रयोगः वरम् । 'बहुसन्तोषः' इति तु निस्सारः प्रयोगः ।

कारस्य कथनम् । (एतस्य अङ्गीकारे तु सर्वनामता अपगच्छति) 'सुप्सुपा' इति समासः इति कथनं तु युक्ततरम् इति भाति ।
इतरशब्देन समासस्तु बहुधा दृश्यते । 'सितेतरस्य' इति कुमारसम्भवे कालिदासः । 'संस्कृतज्ञेतरेषाम्' इति चारुदेवशास्त्रिणः शब्दापशब्दविवेके प्रकीर्णप्रकरणे । 'तदितरः' इति कौमुद्याः तत्त्वबोधिनीटीकायाम् । अन्यत्रापि एतादृशाः प्रयोगाः लभ्यन्ते बहुधा ।

२८. एतत् **सविवरं** ज्ञातुम् इच्छामि अहम् ।
**'सविवरणम्'** इति, **'विस्तरेण'** इति वा वक्तव्यम् ।
विवरशब्दस्य अर्थः रन्ध्रम् इति । अत्र तु विस्तरः विवरणं वा अपेक्ष्यते । विवरशब्देन नार्थः । अतः 'सविवरणम्' इति प्रयोक्तव्यम् । एतस्मिन् एव अर्थे 'विस्तरेण' इति प्रयोगः अपि वरम् एव ।

२९. यथा कुम्भं करोति इति कुम्भकारः तथा **गङ्गां धरतीति गङ्गाधरः** ।
गङ्गाधरशब्दस्य 'गङ्गां धरति' इति विग्रहप्रदर्शनम् अयुक्तम् । तथा विग्रहे कुम्भकारः इतिवत् 'गङ्गाधारः' इति स्यात् । अतः **धरतीति धरः** (पचादित्वात् अच्) **गङ्गायाः धरः गङ्गाधरः** इति विग्रहः प्रदर्शनीयः ।

३०. तस्य कृषिकस्य गोविन्दः इति **नामकः** पुत्रः आसीत् ।
**'गोविन्दनामकः'** इति प्रयोक्तव्यम् ।
'गोविन्दः इति नाम यस्य सः' इति विग्रहः । तदा 'गोविन्दनामकः' इति रूपं सिद्ध्यति । प्रकृतवाक्ये तु समासः न कृतः । अतः समासकृतस्य 'कप्'प्रत्ययस्य प्राप्तिः असम्भवा । समासे कृते एव *'शेषाद्विभाषा' (५.४.१५४)* इति सूत्रेण कप्प्रत्ययः विकल्पेन । कप्प्रत्यये 'गोविन्दनामकः' इति रूपम् । कप्प्रत्ययाभावे 'गोविन्दनामा' इति रूपम् । अत्र उभयत्रापि 'नाम' इत्यस्य अभिधानम् अर्थः ।
'गोविन्दो नाम कश्चित् ...' इति प्रयोगान्तरम् अपि सम्भवति । तत्र नामशब्दः न अभिधानार्थकः । प्रसिद्ध्यर्थकम् अव्ययं तत् । 'गोविन्दः इति प्रसिद्धः कश्चित्' इति तस्य तात्पर्यं भवति ।
तस्मात् अयं निष्कर्षः – कप्प्रत्यये इष्टे 'गोविन्दनामकः' इति प्रयोगः

क्रियताम् । (समासः क्रियताम् इत्यर्थः ।) नामशब्दमात्रे इष्टे 'गोविन्दो नाम' इति व्यस्तप्रयोगः क्रियताम् । व्यस्तप्रयोगे 'इति'शब्दः परिह्रियताम् । यदि 'इति'शब्दे प्रीतिः तर्हि व्यस्तप्रयोगं कृत्वा प्रसिद्ध-ख्यातादिपदं प्रयुज्यताम् । 'नाम'शब्दः परिह्रियताम् ।

३१. बालिका **प्राप्तलेखनी** सती सन्तुष्टा जाता ।

**'प्राप्तलेखनीका'** इति प्रयोक्तव्यम् । 'प्राप्तलेखनी' इति अपशब्दः ।

'प्राप्ता लेखनी यया सा' इति विग्रहे *'नद्यृतश्च' (५.४.१५३)* इति सूत्रेण नित्यं कप्प्रत्ययः । तस्मात् 'प्राप्तलेखनीका' इति रूपम् ।

अन्ये केचन प्रयोगाः यथा –

- बहुवधूकं गृहम् (बह्व्यः वध्वः यस्मिन् तत्)
- बहुकर्तृकं कार्यम् (बहवः कर्तारः यस्मिन् तत्)
- प्रोषितभर्तृका (प्रोषितः भर्ता यस्याः सा)

(प्रोषितः = परस्थलं गतः)

- देवमातृकः देशः (देवः पर्जन्यः मातेव यस्य)
- धृतघटीका (धृता घटी यया सा)

३२. **क्रीतमालकः** सः गृहं गतवान् ।

**'क्रीतमालकः'** इति रूपं युक्तम् एव ।

क्रीता माला येन सः क्रीतमालः । *'शेषाद्विभाषा' (५.४.१५४)* इति सूत्रेण विकल्पेन कप्प्रत्ययः । कप्प्रत्यये 'क्रीतमालाकः' इति रूपम्। तदभावे तु 'क्रीतमालः' इति । *'आपोऽन्यतरस्याम्' (७.४.१५)* इति सूत्रेण आकारस्य ह्रस्वः विकल्पेन । तदा 'क्रीतमालकः' इत्यपि रूपम् । एवं **क्रीतमालकः**, **क्रीतमालाकः**, **क्रीतमालः** इति त्रीणि रूपाणि । एवमेव –

- अधीतविद्यः / अधीतविद्यकः / अधीतविद्याकः
- बहुशाखः / बहुशाखकः / बहुशाखाकः
- श्रितशय्यः / श्रितशय्यकः / श्रितशय्याकः
- पोषितलतः / पोषितलतकः / पोषितलताकः इत्यादयः अपि ।

३३. सर्वे कार्यकर्तारः **सोत्साहेन** कार्यं कृतवन्तः ।

'सोत्साहेन' इति प्रयोगः अत्र असाधुः । **'सोत्साहम्'** इति द्वितीयान्तं

पदम्, 'उत्साहेन' इति तृतीयान्तं पदं वा प्रयोक्तव्यम् ।
उत्साहेन सहितः सोत्साहः । अयं धर्मिपरः । धर्मिपरः शब्दः तृतीयान्तेन क्रियायाम् अन्वयं न प्राप्नोति । प्रकृतवाक्ये क्रियायाम् अन्वयः इष्यते । अतः 'सोत्साहम्' इति प्रयोक्तव्यम् । क्रियैकदेशे फले तस्य अभेदेन अन्वयः भवति ।
यदा धर्मपरता तदा तृतीयान्तेन क्रियायाम् अन्वयः । अतः 'उत्साहेन' इत्यपि प्रयोगः । एवमेव आनन्देन, दुःखेन, सरलतया, सम्यक्तया इत्यादयः अपि ।

३४. **दशमकक्ष्योत्तीर्णः** सः उद्योगान्वेषणं करोति ।
**दशमकक्ष्याम् उत्तीर्णः** इति वक्तव्यम् । दशमकक्ष्योत्तीर्णः इति समासः अस्थाने ।
'दशमकक्ष्याम् उत्तीर्णः' इत्यत्र द्वितीयातत्पुरुषसमासः भवितुं न अर्हति । यतः उत्तीर्णपदेन द्वितीयातत्पुरुषसमासः केनापि सूत्रेण न विहितः । एवं विधायकसूत्रस्य अभावात् उत्तीर्णपदं द्वितीयान्तेन न समस्यते । अतः व्यस्तप्रयोगः एव शरणम् ।

३५. दशमकक्ष्यायाः **उत्तीर्णानन्तरं** सः अन्यत्र गतः ।
'उत्तीर्णानन्तरम्' इति प्रयोगः असाधुः । **'उत्तरणानन्तरम्'** इति, **'..कक्ष्याम् उत्तीर्य'** इति वा प्रयोक्तव्यम् ।
एतस्मिन् वाक्ये उत्तरणं गमनं चेति क्रियाद्वयम् अस्ति । उत्तरणं पूर्वक्रिया । गमनं च उत्तरक्रिया । एवं पौर्वापर्यभावसद्भावात् उदुपसर्गपूर्वकात् तॄधातोः क्त्वाप्रत्यये ल्यपि 'उत्तीर्य' इति रूपम् । यदि अनन्तरशब्दस्य प्रयोगः एव इष्यते तर्हि तस्मात् पूर्वम् उत्तरणम् उत्तीर्णता इत्यादयः भाववाचकाः शब्दाः प्रयोक्तव्याः । उत्तीर्णः इति धर्मी । धर्मिणः क्रियायाः च पौर्वापर्यभावः न घटते । क्रिययोः एव पौर्वापर्यभावः घटते । अतः पूर्वक्रियां द्योतयितुं भाववाची शब्दः एव प्रयोक्तव्यः ।

३६. **उदारचेतः** सः दीनानां साहाय्यं करोति ।
'उदारचेतः' इति अपशब्दः । **'उदारचेताः'** इति, **'उदारचेतस्कः'** इति वा प्रयोक्तव्यम् ।
चेतश्शब्दः नपुंसकः सकारान्तश्च । 'उदारचेताः' इत्यत्र उदारं चेतः

यस्य सः इति विग्रहः । बहुव्रीहिः अत्र । बहुव्रीहौ अन्यपदप्राधान्यम् । अतः अन्यपदस्य यत् लिङ्गं तदेव लिङ्गं भवति समस्तपदस्यापि । किन्तु उत्तरपदस्य चेतश्शब्दस्य या सकारान्तता भवति सा तु पुंसि अपि अनुवर्तते एव । सकारान्तपुंलिङ्गस्य प्रथमैकवचनान्तं रूपम् 'उदारचेताः' इति । तत्र विकल्पेन 'कप्'प्रत्ययः अपि अस्ति *'शेषात् विभाषा' (५.४.१५४)* इति सूत्रेण । कपि 'उदारचेतस्कः' इति रूपम् । कपः अभावे तु 'उदारचेताः' इति ।

३७. **बहुदिनारभ्य** एतत् एवमेव प्रचलति ।

'बहुदिनारभ्य' इति असाधु । **'बहुभ्यः दिनेभ्यः आरभ्य'** इति प्रयोक्तव्यम् ।

'आरभ्य' इत्येतस्य योगे पञ्चमी प्रभृत्यर्थकत्वात् । पञ्चम्यन्तेन समासः तु न विधायकसूत्राभावात् । अतः 'बहुभ्यः दिनेभ्यः आरभ्य' इति व्यस्तप्रयोगः एव करणीयः ।

'बहुदिनात् आरभ्य' इति प्रयोगः अपि दोषाय । दिनानां बहुत्वं खलु इष्यते ? बहुषु बहुवचनम् । अतः दिनशब्दोत्तरं बहुवचनप्रत्ययः योजनीयः । ततः 'बहुदिनेभ्यः' इति वक्तव्यम् । यदि प्रयोगस्य प्रशस्तता इष्यते तर्हि 'बहुभ्यः दिनेभ्यः' इति प्रयोगः करणीयः ।

३८. **पतिपत्नी** नगरम् अगच्छताम् ।

पतिपत्नी इति अपशब्दः । **पतिपत्न्यौ** इति, **पतिः पत्नी** च इति वा प्रयोक्तव्यम् ।

पतिः च पत्नी च पतिपत्न्यौ इति द्वन्द्वसमासः । द्वयोः सत्त्वात् द्विवचनान्तः स्यात् 'पतिपत्नी'शब्दः । द्विवचने च 'पतिपत्न्यौ' इति रूपम् । व्यस्तप्रयोगे तु 'पतिः पत्नी च' इति प्रयोगः ।

३९. **पतिपत्न्यौ** गृहं **प्रत्यागतवन्तौ** ।

'प्रत्यागत**वत्यौ**' इति प्रयोक्तव्यम् ।

पतिपत्न्यौ इत्यत्र द्वन्द्वसमासः । *'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (२.४.२३)* इति सूत्रेण परवल्लिङ्गता पतिपत्नीशब्दस्य । अतः तस्य ईकारान्तस्त्रीलिङ्गता सिद्धा । तस्मात् तिङन्तस्थानिकं भूतकृदन्तान्तं पदं स्त्रीलिङ्गे एव स्यात्, न तु पुंलिङ्गे । अतः 'प्रत्यागतवत्यौ' इति स्त्रीलिङ्गप्रयोगः एव साधुः ।

'पतिः पत्नी च' इति व्यस्तप्रयोगे कृते तु पुंलिङ्गरूपस्यापि साधुता ।

४०. अहं **व्याख्यातारूपेण** कार्यं करोमि ।

'व्याख्यातारूपेण' इति प्रयोगः दोषाय । 'व्याख्यातृरूपेण' इति प्रयोक्तव्यम् ।

व्याख्यातृशब्दः अत्र समासस्य पूर्वपदम् अस्ति । पूर्वपदस्य प्रातिपदिकरूपेण स्थितिः भवति समासे । 'व्याख्याता' इत्येतत् प्रथमान्तं पदम् । तस्य प्रातिपदिकं 'व्याख्यातृ' इति । अतः 'व्याख्यातृरूपेण' इति प्रयोगः शुद्धः ।

४१. **महामना मालवीयस्य** कार्यम् असाधारणम् ।

**'महामनसः'** इति, **'महामनोमालवीयस्य'** इति वा प्रयोक्तव्यम् ।

महत् मनः यस्य सः महामनाः । सकारान्तः पुंलिङ्गः शब्दः सः 'मालवीयस्य' इति पदस्य विशेषणम् । 'मालवीयस्य' इति षष्ठ्यन्तं पदम् । तस्मात् 'महामनसः' इति रूपम् । (कप्प्रत्ययोऽपि अत्र कर्तुं शक्यः । तदा तु अकारान्तता । 'महामनस्कस्य' इति रूपम् ।

यदि समासः इष्यते तर्हि 'महामनोमालवीयस्य' इति रूपं स्यात् । सकारान्तः महामनश्शब्दः प्रातिपदिकरूपेण तिष्ठति । सस्य रुत्वे हश्परत्वात् उत्वे गुणे च 'महामनोमालवीयः' इति रूपम् ।

४२. रमेशः **मध्येमार्गं / मार्गमध्ये** मिलितः ।

**'मध्येमार्गम्' 'मार्गमध्ये'** इति उभयम् अपि साधु ।

'मध्येमार्गम्' इत्यत्र अव्ययीभावसमासः *'पारे मध्ये षष्ट्या वा'* *(२.१.१८)* इति सूत्रेण । (एदन्तत्वं तु निपातनात्) अव्ययीभावस्य प्राप्तिः विकल्पेन । तदभावे षष्ठीसमासः । मार्गस्य मध्ये मार्गमध्ये ।

४३. वत्स ! अलं त्वरया । **उदरपूर्णं** भोजनं कुरु ।

'उदरपूर्णम्' इति अपशब्दः । **'पूर्णोदरम्'** इति प्रयोक्तव्यम् ।

पूर्णशब्दः विशेषणम् । कर्मधारयसमासे विशेषणस्य पूर्वप्रयोगः *'विशेषणं विशेष्येण बहुलम्' (२.१.५७)* इति सूत्रेण । अतः 'पूर्णम् उदरं यस्मिन् कर्मणि यथा तथा' इति विग्रहे 'पूर्णोदरम्' इति सिद्धम् । क्रियाविशेषणं तत् ।

४४. सा ह्यः **पितृगृहं** गतवती ।

**'मातृगृहं गतवती'** इति युक्तम् । **'जनकस्य गृहं गतवती'** इति वा

वक्तव्यम् ।
पितरः नाम पितृदेवताः अपि । ऊर्ध्वलोके निवासः तेषां पितृणाम् । यदा समासः क्रियते तदा 'पितृ'शब्दस्य पितृदेवताव्यञ्जकत्वं भवति प्रायः । पितृशब्दघटिताः समासाः प्रायः तादृशमेव अर्थम् अवगमयन्ति । तस्मात् 'पितृगृहम्' इति समासस्य अकरणम् एव वरम् । 'जनकस्य गृहं गतवती' इति प्रयोगे तु न अन्यार्थस्य भानम् । मातुः गृहं 'मातृगृहम्' । अत्र समासे न अन्यार्थस्य भानम् । अतः 'मातृगृहम्' इति समस्तपदस्य प्रयोगः अपि भवितुम् अर्हति ।

४५. सः **अर्शव्याधिना** ग्रस्तः अस्ति ।
'अर्शव्याधिना' इति अशुद्धम् । **'अर्शोव्याधिना'** इति प्रयोक्तव्यम् । समासे पूर्वपदत्वेन स्थितः अर्शश्शब्दः रुत्वोत्वादिकं गुणं च प्राप्नोति । तस्मात् 'अर्शोव्याधिना' इति रूपम् । अर्शश्शब्दः सकारान्तः, न तु अकारान्तः ।

४६. अत्र उपस्थितस्य **प्रत्येकस्यापि** जनस्य परिचयः मम नास्ति ।
'प्रत्येकस्य' इति अपशब्दः । **'एकैकस्य'** इति प्रयोक्तव्यम् । एकम् एकं प्रति प्रत्येकम् । अव्ययीभावसमासः अत्र । तस्मात् 'प्रत्येक'शब्दः अपि अव्ययम् । 'प्रत्येकस्य' इति रूपं तस्य नास्ति । एकशब्दस्य वीप्सायां द्विर्भावे एकैकशब्दस्य सिद्धिः । स च शब्दः अकारान्तः विशेषणं च । तस्य षष्ठ्यन्तं रूपम् 'एकैकस्य' इति । 'प्रत्येकं जनस्य' इत्यपि प्रयोगः सम्भवति ।

४७. पूर्वं **प्रत्येकस्मिन् गृहे** जनाः संस्कृतं जानन्ति स्म ।
**'प्रत्येकस्मिन् गृहे'** इति प्रयोगः न दोषाय ।
एकम् एकं प्रति प्रत्येकम् । अव्ययीभावसमासः अत्र । *'अव्ययीभावश्च'* (१.१.४१) इति सूत्रेण अव्ययत्वम् । प्रत्येकशब्दः अकारान्तः इत्यतः *'नाव्ययीभावादतोऽम् त्वपञ्चम्याः'* (२.४.९३) इति सूत्रेण अमादेशः । 'अपञ्चम्याः' इति सूत्रे उक्तत्वात् पञ्चम्यां तु 'प्रत्येकस्मात्' इति रूपम् । *'तृतीयासप्तम्योर्बहुलम्'* (२.४.८४) इति सूत्रेण बहुलम् अम्भावः । तस्मात् 'प्रत्येकेन' 'प्रत्येकस्मिन्' इति रूपद्वयं सिद्धम् । एवं तृतीयापञ्चामीसप्तम्यन्तानि रूपाणि सिद्धानि भवन्ति । प्रथमान्तं (अमन्तं) तु अस्ति एव । प्रथमान्तद्वितीयान्तयोः समानं रूपम् ।

*कथनस्य एषः सारः* – प्रथमायां द्वितीयायां च अमन्तं रूपम् । (पञ्चम्याः ऋते अन्यासु सर्वासु विभक्तिषु अपि) तृतीयायां, पञ्चम्यां, सप्तम्यां च तत्तद् विभक्त्यन्तरूपाणि अपि ।

तस्मात् एतत् उक्तं भवति –

| विभक्तिः | | अमन्तं रूपम् | तत्तद्विभक्त्यन्तं रूपम् |
|---|---|---|---|
| प्रथमा | – | प्रत्येकम् | – |
| द्वितीया | – | प्रत्येकम् | – |
| तृतीया | – | प्रत्येकम् | प्रत्येकेन |
| चतुर्थी | – | प्रत्येकम् | – |
| पञ्चमी | – | – | प्रत्येकस्मात् |
| षष्ठी | – | प्रत्येकम् | – |
| सप्तमी | – | प्रत्येकम् | प्रत्येकस्मिन् |

एवम् अव्ययीभावे सर्वेषाम् अपि अकारान्तानां पञ्चम्याः ऋते अन्यासु सर्वासु विभक्तिषु अमन्तं रूपम् । तृतीयायां, पञ्चम्यां, सप्तम्यां च तत्तद्विभक्त्यन्तं रूपम् अपि । **चतुर्थ्यन्तं षष्ठ्यन्तं च रूपं तु नास्ति इति स्मरणीयम् ।**

एतदत्र अवधेयम् – 'प्रत्येकस्मिन् गृहे' इत्यस्य स्थाने 'प्रतिगृहे' इत्येव प्रयोगः शक्यः । (गृहं गृहं प्रतिगृहम्) 'प्रतिगृह'शब्दात् एव अपेक्षितार्थस्य सिद्धिः । तस्मात् 'प्रत्येक'शब्दः परिहर्तुम् एव शक्यः एतादृशेषु प्रसङ्गेषु ।

४८. **कूपपतितः** इत्यस्य **'कूपे पतितः'** इति विग्रहः ।

'कूपे पतितः' इति विग्रहः अयुक्तः । **'कूपं पतितः'** इति विग्रहः वक्तव्यः ।

तत्पुरुषसमासे विधायकसूत्रानुगुणं विग्रहवाक्यम् उच्यते । द्वितीयातत्पुरुष-विधायकं सूत्रं *'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः'* (२.१.२४) इति । तस्य तात्पर्यम् – 'श्रितपतितादीनि पदानि द्वितीयान्तेन एव समस्यन्ते' इति । तस्मात् 'कूपं पतितः' इत्येव विग्रहः ।

४९. आचारनिपुणः इत्यत्र **'आचारेण निपुणः' 'आचारे निपुणः'** इति उभयथा अपि विग्रहः ।

आम् । **'आचारेण निपुणः' 'आचारे निपुणः'** इति उभयथा अपि

विग्रहः सङ्गच्छते ।

तृतीयातत्पुरुषविधायके *'पूर्वसदृश....'* (२.१.३१) इति सूत्रे निपुणशब्दः अपि अन्तर्भूतः । तस्मात् 'आचारेण निपुणः' इति तृतीयान्तपदोपेतं विग्रहवाक्यम् । शौण्डादिगणे अपि तस्य पाठः । तस्मात् *'सप्तमी शौण्डैः'* (२.१.४०) इति सूत्रेण सप्तम्यन्तेन अपि निपुणशब्दः समस्यते । अतः 'आचारे निपुणः' इत्यपि विग्रहवाक्यम् ।

५०. एषः **निरपराधी** अस्ति ।

'निरपराधी' इति अयुक्तम् । **'निरपराधः'** इति प्रयोगः युक्तः । निर्गताः अपराधाः यस्मात् सः निरपराधः । बहुव्रीहिसमासः अत्र । अकारान्तपुंलिङ्गत्वम् अपि ।

यः अपराधान् कृतवान् भवति सः 'अपराधी' भवति । अपराधाः सन्ति अस्य इति अपराधी । *'अत इनिठनौ'* (५.२.११५) इति सूत्रेण इनिः । तस्मात् इन्नन्तता । किन्तु निरपराधशब्दः न इन्नन्तः । बहुव्रीहित्वात् तस्य ।

एवम् 'अपराधी' इन्नन्तः । 'निरपराधः' अकारान्तः ।

यदि इन्नन्तः एव इष्यते तर्हि नञ्तत्पुरुषः क्रियताम् । न अपराधी अनपराधी । **'अनपराधी'** इत्येषः इन्नन्तः । 'न विद्यते अपराधः यस्य सः' इति विग्रहः उक्तः चेत् बहुव्रीहिः । **'अनपराधः'** इति समस्तं पदम् । तदा अकारान्तता । तस्मात् 'अनपराधः' 'अनपराधी' इति उभौ अपि साधू । एकः अकारान्तः, अपरः इन्नन्तः ।

अपराधस्य अभावः निरपराधम् इति अव्ययीभावः । निरपराधम् अस्य अस्तीति निरपराधी इति विवरणं तु अगतिकगत्या । शिष्टप्रयोगे सत्येव स्थितस्य गतेः चिन्तनार्थं कष्टमार्गः कोऽपि एतादृशः आश्रीयते । सर्वत्र एतादृशं दुर्घटं व्याख्यानं शिष्टैः न सह्यते । तस्मात् तादृशं व्याख्यानं सर्वत्र न करणीयम् ।

५१. एषः **अनपराधी / अनपराधः** अस्ति ।

**'अनपराधी' 'अनपराधः'** इति उभौ अपि शुद्धौ एव । 'अनपराधः' इत्येषः प्रयोगः प्रशस्ततरः ।

'अनपराधी' 'अनपराधः' इत्यनयोः उभयोः अपि विग्रहः पूर्वं दर्शितः

एव ।

अनपराधी इत्यत्र आदौ तद्धितवृत्तिः आश्रिता, (अपराधः अस्य अस्ति इत्यत्र) ततः समासवृत्तिः आश्रिता । (न अपराधी इति ) एवं वृत्तिद्वयम् आश्रितम् ।

अनपराधः इत्यत्र 'न विद्यते अपराधः यस्य सः' इति बहुव्रीहिः । एका एव वृत्तिः अत्र । वृत्तिद्वयस्य आश्रयणात् अपि एकस्याः एव वृत्तेः आश्रयणं लाघवाय खलु कल्पते ? वैयाकरणानां समयः अस्ति – *'न कर्मधारयात् मत्वर्थीयः बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः'* इति । 'यत्र बहुव्रीहिसमासात् एव इष्टसिद्धिः भवति तत्र कर्मधारयं कृत्वा पुनः मत्वर्थीयस्य प्रत्ययस्य योजनं न करणीयम्' इति तस्य वाक्यस्य अर्थः । अतः एव उक्तम् – 'अनपराधः' एव प्रशस्ततरः इति । किन्तु पूर्वोक्तस्य समयस्य अनित्यत्वम् अङ्गीक्रियते इत्यतः 'अनपराधी' 'अनपराधः' इति उभयथा अपि प्रयोगः भवितुम् अर्हति इति उच्यते । एवमेव 'देवतास्वरूपः / देवतास्वरूपी' 'दीर्घहस्तः / दीर्घहस्ती' 'दीर्घकेशा / दीर्घकेशिनी' इत्यादयः अपि ।

५२. 'तेन पठ्यते' इत्येतत् **कर्मवाच्यम्** ।

'कर्मवाच्यम्' इति प्रयोगः अनुचितः । **'कर्मणिप्रयोगः'** इति कथनं युज्यते ।

एतस्मिन् प्रयोगे 'तिङ्'प्रत्ययेन कर्म वाच्यं भवति । यत्र वाच्यं कर्म भवति तत् 'वाच्यकर्मकं' भवति, न तु 'कर्मवाच्यम्' । यदा समासः क्रियते तदा अर्थः मनसि स्थापनीयः एव । कस्य पदस्य प्राधान्यं, कस्य पूर्वनिपातः इत्यादिकम् अपि चिन्तनीयम् एव । यत्र कर्म वाच्यं भवति तत्र बहुव्रीहिः एव स्यात् । तदा तु वाच्यपदस्य प्राधान्यम्, उत्तरपदत्वेन प्रयोगो वा न स्यात् ।

'कर्मणिप्रयोगः' इत्यत्र तु अलुक्समासः । कर्मार्थे यत्र 'तिङ्'प्रत्ययस्य प्रयोगः भवति सः कर्मणिप्रयोगः ।

एवमेव 'कर्तरिप्रयोगः' 'भावेप्रयोगः' इत्यादिषु अपि ।

कर्तृवाच्य-कर्मवाच्यादयः शब्दाः बहुधा उपयुज्यन्ते इति तु सत्यम् । किन्तु तेषां साधुत्वं कथमिति न ज्ञायते । असाधुशब्दस्य प्रयोगः शास्त्रेण निषिद्धः ।

कर्मवाच्यादिपदानां साधुत्वकथनक्रमं यदि कश्चित् प्रदर्शयेत् तर्हि वयम् अनुगृहीताः स्याम ।

५३. **औषधस्य सेवनानन्तरं** ज्वरः अपगतः ।

'औषधस्य सेवनानन्तरम्' इति प्रयोगः न दोषाय ।

सेवनस्य अनन्तरं सेवनानन्तरम् । षष्ठीतत्पुरुषः अत्र । 'औषधस्य' इत्यत्र षष्ठी । षष्ठ्यन्तस्य तस्य समासघटकीभूतेन 'सेवन'पदेन अन्वयः । तन्नाम समस्तपदस्य एकदेशे अन्वयः । एषः एकदेशान्वयः निषिध्यते शास्त्रेण । तस्मात् कथम् अत्र साधुता इति प्रश्नः ।

यद्यपि एकदेशान्वये समासः निराक्रियते, तथापि नित्यसापेक्षस्थले तु सः अङ्गीक्रियते । 'सेवनम्' इति पदं यदा श्रूयते तदा 'कस्य सेवनम् ?' इति प्रश्नः उदेति एव । एषा एव नित्यसापेक्षता नाम । एतादृशे स्थले समासः अङ्गीक्रियते । 'देवदत्तस्य गुरुकुलम्' इति प्राचीनम् उदाहरणम् । गुरुशब्दश्रवणात् 'कस्य गुरुः ?' इति जिज्ञासा उदेति एव । अतः अत्र नित्यसापेक्षता । तस्मात् देवदत्तपदस्य गुरुपदे अन्वयः अङ्गीकृतः । एतद्विषये भर्तृहरिः वदति –

*सम्बन्धिशब्दः सापेक्षः नित्यं सर्वः समस्यते ।*
*वाक्यवत्सव्यपेक्षा सा वृत्तावपि न हीयते ।।* इति ।

अतः एतादृशः एकदेशान्वयः शास्त्रकारैः अनुमतः एव । तस्मात् -

- पत्रिकायाः पठनानन्तरम्
- गीतस्य श्रवणानन्तरम्
- वाक्यस्य उच्चारणानन्तरम्
- भवतः आगमनानन्तरम्
- अर्चकस्य पूजानन्तरम्

इत्यादयः सर्वे प्रयोगाः निश्शङ्कं भवितुम् अर्हन्ति । (एतेषु आदिमेषु त्रिषु कर्मसम्बन्धः, अनन्तरीयेषु त्रिषु कर्तृसम्बन्धः च अस्ति ।)

५४. विदुरेण **कृतोपदेशः** अत्र सङ्गृहीतः ।

'विदुरेण **कृतः उपदेशः**' इति व्यस्तः प्रयोगः एव प्रशस्यते ।

कृतः उपदेशः = कृतोपदेशः । कर्मधारयसमासः अत्र । तृतीयान्तस्य 'विदुर'पदस्य समासघटकीभूतस्य 'कृत'पदेन अन्वयः । तस्मात् अत्रापि एकदेशान्वयः । 'कृत'पदस्य श्रवणात् 'केन' इति आकाङ्क्षा उदेति

एव, पूर्वस्मिन् उदाहरणे यथा तथैव । पूर्वस्मिन् उदाहरणे तु उक्तम् अस्ति - 'नित्यसापेक्षस्थले समासः अङ्गीक्रियते' इति । अत्रापि नित्यसापेक्षता अस्तीत्यतः अयं प्रयोगः दोषाय तु न । तथापि एतादृशस्य प्रयोगस्य त्यागः एव वरम् ।

पूर्वं यानि उदाहरणानि दर्शितानि तानि अप्रयत्नेन कृतानि, क्रियमाणानि च । अतः तेषाम् अनुग्रहप्रकारः दर्शितः । 'विदुरेण कृतोपदेशः' इत्येषः तु प्रयत्नेन कृतः । एतादृशे स्थले व्यस्तप्रयोगः एव शोभते । तस्मात् 'विदुरेण कृतः उपदेशः' इति व्यस्तः प्रयोगः एव वरम् इति उच्यते ।

किन्तु एतदत्र स्मर्तव्यं यत् 'विदुरेण कृतोपदेशः' इत्यत्र यः समासः कृतः सः दोषाय तु न इति ।

५५. देवः भक्तस्य पुरतः **प्रत्यक्षः** जातः ।

**'प्रत्यक्षः** जातः' इत्यत्र न कोऽपि दोषः ।

'अक्षम् अक्षं प्रति प्रत्यक्षम् इति अव्ययीभावः । अतः 'प्रत्यक्ष'शब्दः नपुंसके स्यात्, अव्ययं वा' इति केचन अभिप्रयन्ति । किन्तु 'प्रत्यक्ष'शब्दस्य विग्रहः 'अक्षम् अक्षं प्रति' इति न उच्यते, प्रत्युत 'प्रतिगतम् अक्षम् इन्द्रियं यस्मिन् तत्' इति उच्यते । तदा तु बहुव्रीहिः । बहुव्रीहौ अन्यपदार्थप्राधान्यम् । अतः तस्य विशेष्यनिघ्नता ।

प्राचीनप्रयोगो यथा -

'प्रत्यक्षाभिः प्रपन्नः तनुभिरवतु वस्ताभिरष्टाभिरीशः'

- शाकुन्तलम् - १.१

अतः 'प्रत्यक्षः' इति प्रयोगः न दोषाय ।

५६. **पतिपत्न्यौ** सम्भाषणं कुर्वन्तौ आस्ताम् ।

**'कुर्वत्यौ'** इति प्रयोक्तव्यम् ।

'पतिपत्नी'शब्दः ईकारान्तः स्त्रीलिङ्गः । 'कुर्वत्'शब्दस्यापि स्त्रीत्वम् एव स्यात् । अतः 'कुर्वत्यौ' इति प्रयोक्तव्यम् । यदि व्यस्तप्रयोगः कृतः स्यात् तर्हि 'कुर्वन्तौ' इत्यस्य साधुता स्यात् एव । *'पुमान् स्त्रिया' (१.२.६७)* इति सूत्रेण पुंलिङ्गरूपस्यैव शेषात् । (कुर्वन् च कुर्वती च कुर्वन्तौ इति विग्रहः)

एतदत्र स्मर्तव्यं यत् 'पतिपत्न्यौ' इति तु न संस्कृतशैली ।

५७. **सालङ्कृता** कन्या योग्याय वराय दातव्या ।

'अलङ्कृता' इत्येतावता एव इष्टसिद्धिः अत्र । अथवा **'सालङ्कारा'** इति प्रयुज्यताम् ।

'अलङ्कारयुक्ता कन्या' वाक्येऽस्मिन् विवक्ष्यते । स च 'अलङ्कृता' (अलं + कृ + क्तः) इत्यनेन एव सिद्ध्यति । यदि 'अलङ्कारेण सहिता' इति विग्रहवाक्यम् एव इष्यते तर्हि 'सालङ्कारा' इति प्रयुज्यताम् । 'सालङ्कृता' इत्यस्य अर्थः तु 'अलङ्कारसहितया (कन्यया) सहिता' इति भवति । स च अर्थः अत्र न अभिप्रेतः ।

५८. राजा **सालङ्कृते रथे** उपविश्य प्रस्थितवान् ।

'अलङ्कृते रथे' इति प्रयोगेण एव इष्टसिद्धिः ।

'अलङ्कृतः' इत्यस्य अर्थः **'अलङ्कारयुक्तः'** इति । 'सालङ्कृतः' इत्यस्य तु अर्थः 'अलङ्कारयुक्तेन युक्तः' इति । एतस्मिन् वाक्ये अलङ्कारयुक्तत्वम् एव अपेक्ष्यते, न तु अलङ्कारयुक्तयुक्तत्वम् । अतः 'अलङ्कृते रथे' इति प्रयोगः एव समुचितः ।

५९. एषु दिनेषु **उपभोक्तावादः** अभिवर्धते ।

'उपभोक्तावादः' इति अपशब्दः । **'उपभोक्तृवादः'** इति प्रयोक्तव्यम् । उपभोक्तृसम्बद्धः वादः = उपभोक्तृवादः । 'उपभोक्ता' इत्येतत् प्रथमान्तं पदम् । तस्य प्रातिपदिकम् ऋकारान्तम् । समासे पूर्वपदं प्रातिपदिकरूपेण तिष्ठति । अतः 'उपभोक्तृवादः' इति रूपं साधुं ।

६०. भवान्याः पतिः **'भवानिपतिः'** इति उच्यते ।

**'भवानीपतिः'** इति प्रयोक्तव्यम् । 'भवानिपतिः' इति अपशब्दः । 'भवानी' पदम् ईकारान्तम् । तस्य प्रथमान्तं पदम् अपि तदेव । समासे पूर्वपदस्य ईकारन्तस्य ह्रस्वता न केनापि सूत्रेण विहिता । अतः 'भवानीपतिः*' इति प्रयोगः एव साधुः ।

'शास्त्री + महोदयः = शास्त्रिमहोदयः' 'घनपाठी + महोदयः =

---

* 'भवानीपतिः' इति प्रयोगः एव न करणीयः इति आलङ्कारिकाः । भवस्य पत्नी = भवानी । भवान्याः पतिः = भवानीपतिः । एवं च 'मम पत्न्याः पतिः' इति प्रयोगः इव भवति एतादृशः प्रयोगः ।

घनपाठिमहोदयः' इत्यादिषु प्रथमान्तं पदम् ईकारान्तम् । समासे नलोपानन्तरं पूर्वपदे इकारान्तत्वं दृश्यते । एतत् दृष्ट्वा केचन चिन्तयन्ति यत् समासे ईकारान्तस्य इकारान्तता इति । भ्रान्तिः तेषाम् । पूर्वपदस्थस्य नकारान्तस्थस्य नकारस्य लोपः उक्तः शास्त्रेण, न तु ईकारान्तस्य ह्रस्वता ।

६१. एषः अध्यापकः इदानीम् **अवकाशप्राप्तः** अस्ति ।

**'निवृत्तः'** इति प्रयोगः अत्र वरं स्यात् ।

'अवकाशप्राप्तः' इत्यत्र समासवृत्तिः तु घटते । अवकाशं प्राप्तः = अवकाशप्राप्तः । *'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' (२.१.२४)* इति सूत्रेण द्वितीयातत्पुरुषः । 'प्राप्तः अवकाशः येन सः' इति विग्रहे 'प्राप्तावकाशः' इत्यपि रूपं भवितुम् अर्हति । अतः तत्पुरुषं बहुव्रीहिं वा वक्तुं शक्नुयाम एव वयम् अत्र ।

किन्तु विप्रतिपत्तिः तु 'अवकाश'शब्दस्य अर्थस्य विषये । यस्य सेवाजीवनं समाप्तं तं निर्देष्टुम् इच्छति वक्ता । तदर्थं तेन अवकाशशब्दः प्रयुक्तः । किन्तु अवकाशशब्दस्य तादृशः अर्थः न उक्तः केनापि कोषकारेण । अवस्थानदेशः, अवसरः, सुयोगः, कालभेदः, रन्ध्रम्, आश्रयः इत्यादयः अर्थाः वर्णिताः कोषकारैः । तेषु कोऽपि अर्थः वृत्तिरहितस्य जीवनस्य निर्देशे समर्थः । अतः अत्र अवकाशशब्दस्य परिहारः एव वरम् इति भाति । 'निवृत्तः' इति पदम् अपेक्षितार्थाभिधायी अस्ति । तस्मात् तस्यैव प्रयोगः वरम् ।

६२. अयम् अस्ति **पूर्वनिदेशकः** ।

'पूर्वनिदेशकः' इत्यस्य अर्थस्य विषये किञ्चित् चिन्तनीयम् । अत्र केन सूत्रेण समासः, पूर्वशब्दस्य अर्थश्च कः इति चिन्तनीयम् ।

*'पूर्वापराधरोत्तर...' (२.२.१)* इति सूत्रेण नात्र समासः । यतः पूर्वपदस्य एकदेशार्थकत्वम् अत्र न इष्यते । 'निदेशकचरः' इत्यर्थे (भूतपूर्वः निदेशकः) स च शब्दः प्रयुक्तः । 'भूतपूर्वः निदेशकः' इति प्रयोगे तु न कापि विप्रतिपत्तिः । 'पूर्वनिदेशकः' इति प्रयोगे तु *'पूर्वापरप्रथमचरम...' (२.१.५८)* इति सूत्रेण कर्मधारयसमासः इति वक्तव्यं स्यात् । तदा तु 'पूर्वनिदेशकः' इति शब्दस्तु सिद्धः । किन्तु अर्थः ? स च अर्थः अत्र न अभिप्रेतः । भूतपूर्वत्वम् अपेक्षितम् ।

भूतपूर्वार्थे पूर्वशब्दः न रूढः इत्येव भाति । यदि तथा रूढिः स्यात् तर्हि पाणिनिः 'भूतपूर्वे चरट्' इति कथनं परित्यज्य 'पूर्वे चरट्' इत्येव अवदिष्यत् । अतः 'भूतपूर्व'शब्दः अन्यः, 'पूर्व'शब्दः अन्यः एव इति भाति । तस्मात् **'भूतपूर्वः निदेशकः'** इति प्रयोगः एव समुचितः स्यात् । विद्वांसः अत्र प्रमाणम् ।

६३. **आङ्ग्लशिक्षितानां** जनानाम् अभिप्रायः भवति विलक्षणः ।
**'शिक्षिताङ्ग्लानाम्'** इति, **'प्राप्ताङ्ग्लशिक्षणानाम्'** इति वा प्रयोक्तव्यम् । 'ये आङ्ग्लभाषया शिक्षणं प्राप्तवन्तः' 'ये च आङ्ग्लसंस्कृतिप्रधानं शिक्षणं प्राप्तवन्तः' ते अत्र निर्देष्टुम् इष्टाः । समासे समुचितः पदप्रयोगः कृतः चेदेव अपेक्षितः अर्थः प्राप्येत । 'आङ्ग्लशिक्षिताः' इत्यस्य पदस्य अर्थः भवेत् - 'ये आङ्ग्लाः सन्तः शिक्षिताः (शिक्षणवन्तः) सन्ति ते' इति । स च अर्थः अत्र न अभिप्रेतः । अत्र द्वितीयासमासः (तत्पुरुषः) वक्तुं न शक्यः । विधायके सूत्रे (*'द्वितीया श्रितातीत...'* इत्यस्मिन्) 'शिक्षित'पदस्य अनन्तर्भावात् । अन्यः समासः उक्तः चेत् शिक्षितपदम् उत्तरपदं न भवेत् ।
'शिक्षितम् आङ्ग्लं यैः ते' इति 'प्राप्तम् आङ्ग्लशिक्षणं यैः ते' इति वा विग्रहे उक्ते समुचितार्थावबोधकं समस्तं पदं प्राप्येत ।
समासे अर्थः, विधायकसूत्रस्य सद्भावः च अवश्यं मनसि स्थापनीयः एव ।

६४. भवन्तः सर्वे **सकुशलिनः** खलु ?
**'सकुशलाः'** इति **'कुशलिनः'** इति वा प्रयोक्तव्यम् । 'सकुशलिनः' इति पदं न अपेक्षितार्थद्योतकम् ।
वाक्यप्रयोक्ता कुशलसहिततां प्रष्टुम् इच्छति । 'कुशल'पदस्य क्षेमादयः अर्थाः । कुशलम् अस्य अस्तीति कुशली । कुशलेन सह वर्तते इति सकुशलः । उभयोः अपि समानः अर्थः । सकुशलशब्देन एव इष्टे सिद्धे तस्मात् पुनः मतुबर्थकः प्रत्ययः करणीयः नास्ति ।
'अपि कुशलं भवतां सर्वेषाम् ?' इत्यपि आनुपूर्वी भवितुम् अर्हति एतादृशे प्रसङ्गे ।

६५. एषः आपणः **सुगन्धिः** अस्ति ।

**'सुगन्धः'** अस्ति इति वक्तव्यम् ।

'सुगन्धिः' इत्यत्र इत्प्रत्ययः अन्तादेशत्वेन । सूत्रं च *'गन्धस्येदुत्पूतिसुसुरभिभ्यः' (५.४.१३५)* इति । अत्र वार्तिकं ज्ञापयति *'गन्धस्येत्त्वे तदेकान्तग्रहणम्'* इति । यत्र गन्धः अविभागेन लक्ष्यते तत्रैव इत् इति तस्य तात्पर्यम् । 'सुगन्धिः वायुः' इत्यादीनि एतस्य उदाहरणानि । आपणे तु गन्धः तावत् एव तिष्ठेत्, यावत् गन्धयुक्तानि वस्तूनि तिष्ठेयुः । वस्तूनाम् अभावे गन्धस्यापि अभावः । अतः गन्धः अत्र अविनाभावेन स्थितः न । तस्मात् न इत्त्वम् । शोभनः गन्धः यस्य सः = सुगन्धः ।

**६६.** एषः आपणः **चन्दनगन्धिः** अस्ति ।

**'चन्दनगन्धः'** इति प्रयोक्तव्यम् ।

यस्मिन् आपणे चन्दनस्य गन्धः अनुभूयते तम् आपणम् उद्दिश्य प्रयुक्तमिदं वाक्यम् । *'उपमानाच्च' (५.४.१३७)* इति सूत्रेण उपमानवाचिपूर्वपदात् परस्यापि गन्धशब्दस्य इत् विहितः एव । अतः एव 'पद्मगन्धि'प्रभृतयः प्रयोगाः सङ्गच्छन्ते । प्रकृतवाक्ये तु न सादृश्यं विवक्ष्यते, प्रत्युत चन्दनस्य एव गन्धः विवक्ष्यते । अतः 'चन्दनगन्धः' इति प्रयोगः । यदि सादृश्यम् इष्येत (चन्दनगन्धः इव गन्धः यस्य सः) तर्हि 'चन्दनगन्धिः' इति प्रयोगः साधुः स्यात् एव ।

**६७.** आधुनिके काले **सुगन्धद्रव्याणि** प्राप्यन्ते बहुधा ।

**'सुगन्धिद्रव्याणि'** इति प्रयोक्तव्यम् ।

'शोभनः गन्धः यस्य सः' इति विग्रहे *'गन्धस्येत्...'* इति सूत्रेण इत् । स च नित्यः उत्पूतिसुसुरभिपदयोगे सति । द्रव्येषु गन्धः अविभागेन लक्ष्यते । (ततः गन्धः पृथक्कर्तुं न शक्यः) अतः 'सुगन्धिः' इति इत्युक्तः एव प्रयोगः करणीयः । इतः अभावे तु गन्धस्य सत्तायाः अस्थिरता द्योत्येत ।

# ९. नवमोऽध्यायः

## सङ्ख्या

०१. षष्ठकक्ष्यायां **विंशतयः** जनाः सन्ति ।

**'विंशतिः जनाः'** इति वक्तव्यम् । 'विंशतयः जनाः' इति प्रयोगः असाधुः ।

सङ्ख्याविषये इदं किञ्चित् ज्ञातव्यम् ।

एकशब्दः एकत्वे । द्वित्वे द्विशब्दः । त्रिशब्दतः दशान्ताः शब्दाः च (नवदशपर्यन्तम्) बहुत्वे । **विंशत्यादयः** (विंशतिः, त्रिंशत् .... शतम्, लक्षम्..) **नित्यैकवचनान्ताः । तेषु आ नवतेः शब्दाः स्त्रीलिङ्गे च** । तथा हि अमरकोषः - *'विंशत्याद्याः सदैकत्वे, तासु चानवतेः स्त्रियः'* इति ।

एवं च विंशत्यादयः नित्यैकवचनान्ताः । अतः विशतिं पुस्तकानि, विंशत्या जनैः, विंशत्यां विद्यालयेषु इत्यादयः प्रयोगाः ।

'विंशतिः जनाः' इत्यत्र विशेष्यभूतः जनशब्दः पुंसि बहुत्वे च । विशेषणभूतः स्त्रियाम् एकत्वे च । एतस्यां स्थितौ कश्चन प्रश्नः उद्भवेत् - 'यल्लिङ्गं यद्वचनं...' इत्येतस्य नियमस्य अन्वयः अत्र न दृश्यते खलु इति । सत्यम् । स च नियमः अत्र न अन्वेति । सः नियमः विशेष्यनिघ्नानां विषये । नियतलिङ्गानां विषये तस्य अन्वयः न भवति । अतः एव - 'मयूरः वाहनम्' 'मित्रं रामः' 'वेदाः प्रमाणम्' इत्यादयः प्रयोगाः ।

एतदपि अत्र ज्ञातव्यम् -

संस्कृतभाषायां सङ्ख्याः अर्थद्वयं बोधयन्ति - सङ्ख्यां सङ्ख्येयं चेति । प्रादेशिकभाषासु एषः क्रमः नास्ति । 'सङ्ख्येयः' सङ्ख्यया परिच्छिन्नं वस्तु बोधयति । स च विशेष्यनिघ्नो भवति । यथा - एकः पुरुषः, एका महिला, एकं पुष्पम् इत्यादि । किन्तु आदश सङ्ख्येयार्थकत्वमेव । तन्नाम नवदशान्ताः सर्वाः सङ्ख्याः सङ्ख्येयार्थकत्वमेव बोधयन्ति । प्रमाणं यथा - *'सङ्ख्याः सङ्ख्येये ह्यादश त्रिषु'* इति अमरः ।

विंशत्याद्याः तु सङ्ख्यां सङ्ख्येयं च बोधयन्ति । सङ्ख्येयबोधकता

यथा - विंशतिः पुरुषाः, नवतिः पुस्तकानि, त्रिंशत् महिलाः इत्यादयः । सङ्ख्याबोधकता यथा - पुरुषाणां विंशतिः, पुस्तकानां नवतिः, महिलानां त्रिंशत् इत्यादयः।

**एवं च दशान्ताः (*नवदशपर्यन्ताः) सङ्ख्येयमात्रे । विंशत्याद्याः सङ्ख्येयार्थे सङ्ख्यार्थे च भवन्ति** इति सिद्धम् ।

'सङ्ख्यार्थे द्विबहुत्वे स्तः' इति अमरकोषः । यथा - जनानां विंशतिः (२०), जनानां विंशती (४०), जनानां विंशतयः (६०,८०... इत्यादयः)

तात्पर्यम् एतत् सिद्धं भवति - विशेषणत्वेन सङ्ख्येयार्थत्वेन उपयुज्यमानाः विंशत्याद्याः सङ्ख्याः नित्यैकवचनान्ताः । सङ्ख्यार्थे उपयुज्यमानानां द्विवचनबहुवचनान्तता सम्भवति । यस्याः द्विवचन-बहुवचनान्तता अस्ति सा विशेषणत्वेन उपयोक्तुं न शक्या ।

०२. स्पर्धायां **विंशतिजनैः** भागः गृह्यते ।

अत्र विंशतिजनयोः यः समासः कृतः सः न दोषाय ।

*'दिक्सङ्ख्ये संज्ञायाम्' (२.१.५०)* इति सूत्रं वदति - 'सङ्ख्यावाचकः दिग्वाचकः च कर्मधारयसमासे (तत्पुरुषे) संज्ञायाम् एव समस्यते' इति । सप्तर्षयः इत्यादीनि एतस्य उदाहरणानि ।

'विशंतिजनाः' इति न संज्ञा । अतः सूत्रस्य आशयानुसारेण अत्र समासः निषिद्धः । किन्तु सङ्ख्यया समासः कृतः दृश्यते प्राचीनैः । तद्यथा -

- *'त्रिलोकनाथः पितृसद्मगोचरः'* इति कालिदासः ।
- *'नवरसरुचिरा'* इति मम्मटः ।
- *'षोडशपदार्थानाम्'* इति न्यायशास्त्रे ।
- *सप्तस्त्रीलिङ्गशब्दानाम्'* इति प्रयोगः कौमुद्याम् उदाहृते प्राचाम् - 'अवीतन्त्री......' इत्यस्मिन् पद्ये ।

एतादृशेषु स्थलेषु इत्थं समाधानम् उच्यते - त्र्यवयवः लोकः त्रिलोकः । शाकपार्थिवादित्वात् उत्तरपदलोपः । षोडशपदार्थानाम्

---

* अत्र 'नवदश' इति शब्दः ग्रहीतव्यः, न तु अर्थः । 'नवदश'शब्दे प्रयुक्ते दशान्तत्वम् । अतः सङ्ख्येयमात्रार्थकता बहुवचनं च । 'एकोनविंशतिः' इति शब्दे प्रयुक्ते विंशत्याद्यत्वम् । तदा सङ्ख्येयार्थता सङ्ख्यार्थता च ।

इत्यत्र षोडशसङ्ख्याकाः पदार्थाः इति मध्यमपदलोपी समासः । एवम् एव इतरत्रापि । एतच्च समाधानं कौमुद्याः व्याख्याने बालमनोरमायां तत्त्वबोधिन्यां च निरूपितम् अस्ति । तत्र एतदपि उच्यते - *'एतच्च द्विगोर्लुगनपत्ये इति भाष्ये स्पष्टम्'* इति ।

महाकविप्रयोगाणां साधुत्वम् अवगतम् । दैनन्दिनव्यवहारे अस्माभिः किं करणीयम् ? यदि समासः न अङ्गीक्रियेत तर्हि विंशत्या जनैः, चत्वारिंशतः जनेभ्यः, नवत्यां गृहेषु इत्यादीनां विषये अधीतशास्त्राः अपि प्रमादं कुर्युः । एवं स्थिते का कथा स्यात् सामान्यानाम् ? अतः प्रमादबाहुल्यस्य निवारणाय सङ्ख्यया सह तत्पुरुषसमासः अङ्गी-क्रियते । प्राचीनानां प्रयोगाणां साधुत्वकथनाय यः उपायः आश्रितः स एव उपायः आश्रीयते अत्रापि । यत्र क्लेशस्य बाहुल्यं तत्र शिष्टैः अनिषिद्धस्य मार्गस्य अवलम्बनं न दोषाय इति भाव्यते ।

०३. **शतं** जनेभ्यः भोजनं व्यवस्थापनीयम् अस्ति ।

'शतं जनेभ्यः' इति असाधुप्रयोगः । **'शताय जनेभ्यः'** इति, **'शतजनेभ्यः'** इति वा प्रयोक्तव्यम् ।

शतशब्दस्य एकवचनान्तप्रयोगः युक्तः एव । किन्तु जनशब्दोत्तरं श्रूयमाणा चतुर्थीविभक्तिः तत्र न योजिता । स च दोषाय । 'शताय' इति प्रयोक्तव्यम् । यदि समासः इष्यते तर्हि शतजनेभ्यः इति प्रयोगः ।

०४. 'भवतः कोषे कति रूप्यकाणि सन्ति ?' **'पञ्च अस्ति'**

'पञ्च अस्ति' इति दोषाय । **'पञ्च सन्ति'** इति प्रयोक्तव्यम् ।

पञ्चशब्दः बहुवचनान्तः । कदाचित् वक्ता पञ्चरूप्यकद्योतकम् एकं रूप्यककागदम् अस्ति इत्येतम् अर्थं मनसि निधाय 'पञ्च अस्ति' इति वाक्यं प्रयुक्तवान् स्यात् । किन्तु प्रयुक्तं वाक्यं तु तादृशम् अर्थं न अभिव्यञ्जयति । अतः 'पञ्च सन्ति' इत्येव प्रयोगः स्यात् ।

०५. अहं **पञ्चदिनात्** पत्रस्य प्रतीक्षां कुर्वन् अस्मि ।

**'पञ्चभ्यः दिनेभ्यः'** इति, **'पञ्चदिनेभ्यः'** इति वा प्रयोगः वरम् ।

पञ्चशब्दः बहुवचनान्तः । अतः दिनशब्दः अपि बहुवचनान्तः एव स्यात् । अन्यथा परस्परान्वयः न स्यात् । 'पञ्चभ्यः दिनेभ्यः' इत्यत्र व्यस्तप्रयोगः । 'पञ्चदिनेभ्यः' इत्यत्र समासः । सूत्रेण निषिध्यमानः अपि समासः प्राचीनप्रयोगान् अवलब्य क्रियते अगतिकगत्या ।

अतः यत्र शक्यते तत्र व्यस्तप्रयोगः एव वरम् ।

अथवा 'पञ्चदिनात्' इत्येतत् समर्थनीयम् एव इति तीव्रेच्छा तर्हि इत्थं समर्थनं शक्यम् - पञ्चानां दिनानां समाहारः पञ्चदिनम् । पात्रादिगणे प्रवेशनात् अकारान्तता । पात्रादिः आकृतिगणः ।

०६. 'भवतः कोषे कति रूप्यकाणि सन्ति ? **'शतम् अस्ति'**

'शतम् अस्ति' इति प्रयोगः समर्थनार्हः अस्ति । 'रूप्यकाणाम्' इति पदं तत्र अध्याहार्यम् । तथा च 'रूप्यकाणां शतम् अस्ति' इति समग्रं वाक्यम् । शतशब्दस्य सङ्ख्यार्थकता । अतः क्रियापदस्य एक-वचनान्तता न दोषाय ।

**'शतं सन्ति'** इत्यपि प्रयोगः भवितुम् अर्हति । तदा तु 'रूप्यकाणि' इत्यस्य अध्याहारः । 'शतं रूप्यकाणि सन्ति' इत्यत्र प्रथमान्तस्य बहुवचनान्तस्य रूप्यकशब्दस्य अध्याहारः । 'शत'पदस्य सङ्ख्येयार्थकता । अतः उभयथा अपि साधुत्वम् ।

'तुल्यन्यायेन 'पञ्च अस्ति' इति प्रयोगः कुतो वा समर्थयितुं न शक्यः' इति प्रश्नः सम्भवेत् । 'पञ्च' इत्यस्य सङ्ख्यार्थकता नास्ति। सङ्ख्येयमात्रार्थकता तस्य । अतः प्रथमान्तस्यैव पदस्य अध्याहारः सम्भवति, न तु षठ्यन्तस्य । तस्मात् **दशान्तपदस्य प्रयोगे सति** (एकशब्दं द्विशब्दञ्च विहाय) **क्रियापदस्य एकवचनान्तस्य प्रयोगः न सम्भवति ।**

०७. **अष्टादशतमे** पाठे अयम् अंशः चर्चितः अस्ति ।

'अष्टादशतमे' इति अपशब्दः । **'अष्टादशे'** इति वक्तव्यम् ।

*'विंशत्यादिभ्यः तमडन्यतरस्याम्'* (५.२.५६) इति सूत्रेण विंशत्यादिभ्यः एव तमडागमः विहितः । अष्टादशशब्दः दशान्तेषु अन्तर्भवति, न तु विंशत्यादिषु । अतः तत्र न तमट् । तस्मात् अष्टादशः इत्यस्मात् केवलं डट् एव *'तस्य पूरणे डट्'* (५.२.४८) इति सूत्रेण ।

०८. भोः **षष्ठम** ! त्वम् उत्तिष्ठ ।

'षष्ठम' इति अपशब्दः । **'षष्ठ'** इति प्रयोक्तव्यम् ।

पञ्चम-सप्तमाष्टमादिषु अन्ते मकारः श्रूयते । *'नान्तात् असङ्ख्यादेर्मट्'* (५.२.४९) इति सूत्रेण पञ्चादिभ्यः मडागमः भवति । 'षष्' इति

शब्दात् तु पूरणार्थे न मट्, अपि तु तस्य *'षट्कतिकतिपयचतुरां थुक्'* *(५.२.५१)* इति सूत्रेण थुगागमः । अतः 'षष्ठः' इति रूपम् । मटः अभावात् षष्ठमः इति रूपं न ।

०९. संवत्सरचक्रे नवपञ्चाशः क्रोधनः, **षष्टः** क्षयः अक्षयो वा ।
'षष्टः' इति अपशब्दः । **'षष्टितमः'** इति प्रयोक्तव्यम् ।
षष्टिशब्दात् नित्यं तमट् *'षष्ट्यादेश्चासंख्यादेः' (५.२.५८)* इति सूत्रेण । अतः षष्टः सप्ततः, अशीतः, नवतः इत्येतानि चत्वारि रूपाणि असाधूनि एव । 'एकषष्टः' ... इत्यादयः तु भवन्ति एव । तेभ्यः विकल्पेन तमटः विधानात् । 'षष्ठः' इत्येतत् टवर्ग-चतुर्थाक्षरयुक्तं रूपं तु 'षष्'शब्दस्य पूरणार्थकं रूपम् ।

१०. **चतुर्थायां** पङ्क्तौ कश्चन मुद्रणदोषः अस्ति ।
'चतुर्थायाम्' इति अपशब्दः । **'चतुर्थ्याम्'** इति वक्तव्यम् ।
चतुर्थशब्दः स्त्रियाम् ईकारान्तः । अतः चतुर्थी इति रूपम् । 'चतुर्थ' इत्यत्र *'षट्कति...'* इति सूत्रेण थुगागमः । स च डटि एव । डट्प्रत्ययः टित् । तस्मात् *'टिड्ढाणञ्...' (४.१.१५)* इति सूत्रेण ङीप् । अतः चतुर्थी इत्येव रूपम् ।
प्रथमद्वितीयतृतीयशब्दाः आकारान्ताः स्त्रियाम् । यतः ते टित्प्रत्ययं न प्राप्नुवन्ति । प्रथमः इत्यत्र अमच्प्रत्ययः । द्वितीयतृतीयौ तीयप्रत्ययं प्राप्नुतः । अन्याः सर्वाः अपि सङ्ख्याः पूरणार्थे टितम् एव प्रत्ययं प्राप्नुवन्ति । एतान् त्रीन् विहाय अन्याः सर्वाः पूरणार्थे स्त्रियाम् ईकारम् एव प्राप्नुवन्ति ।

११. कारागारे स्थापितः चोरः **विंशतितमायां** रात्रौ पलायितवान् ।
'विंशतितमायाम्' इति अपशब्दः । **'विंशतितम्याम्'** इति वक्तव्यम् ।
'विंशतिशब्दात् पूरणार्थे डट्प्रत्ययः (तमडागमश्च) । स च टित् । टित्त्वात् *'टिड्ढाणञ्...'* इति सूत्रेण ङीप् । अतः विंशतितमी इति रूपम् ।
आढ्यतमः लघुतमः इत्यादिषु अपि 'तम' इति श्रूयते । स च 'तमप्'-प्रत्ययः । *'अतिशायने तमबिष्ठनौ' (५.३.५५)* इति सूत्रेण तमप्प्रत्ययः । तस्य पित्त्वात् न ङीबादयः । तस्मात् आढ्यतमा

लघुतमा इत्येवं टाबन्तं रूपं स्त्रियाम् ।

सङ्ख्यायाः तु पूरणार्थे डट् । सः टित् । तस्मात् ङीप् । अतिशायनार्थे तमप् । सः न टित् । अतः टाप् । अतः विंशतितम-लघुतमयोः अन्ते 'तम' इत्येतत् श्रूयते चेदपि प्रत्ययभेदात् स्त्रीप्रत्ययभेदः ।

१२. विंशतितमे एतस्मिन् **शताब्दे** सर्वे अर्थपराः एव दृश्यन्ते प्रायेण ।

शततमः अब्दः भवति शताब्दः । **'एतस्यां शताब्द्याम्'** इति, **'एतस्मिन् शतके'** इति वा प्रयोक्तव्यम् ।

समासबलात् 'शत'शब्दः शततमार्थं बोधयति । सङ्ख्याशब्दानां वृत्तिविषये पूरणार्थत्वं दृश्यते । 'त्रिभागशेषासु निशासु' इति कुमारसम्भवे (५.५७) प्रयोगः । तृतीयः भागः त्रिभागः, सः शेषः यासां तासु इति विग्रहः । 'आददीताथ षड्भागम्...' इति मनुस्मृतौ (८.३३) । अत्र षष्ठः भागः षड्भागः इति अर्थः । एवमेव 'शतांशः' इत्यादिषु पूरणाप्रत्ययार्थता बोध्या ।

अत्र तु शतस्य अब्दानां समूहः अपेक्षितः । तस्मिन् अर्थे द्विगुः करणीयः । शतस्य अब्दानां समाहारः शताब्दी । *'द्विगोः' (४.१.२१)* इति सूत्रेण ङीप् । अतः 'विंशतितम्याम् एतस्यां शताब्द्याम्' इति प्रयोक्तव्यम् । 'विंशतितमे एतस्मिन् शतके' इत्यपि प्रयोगः भवितुम् अर्हति ।

१३. विद्यालयस्य शततमं वर्षम् एतत् । अतः **शताब्दी**कार्यक्रमः महता वैभवेन आचरणीयः ।

'शताब्दीकार्यक्रमः' इति अशुद्धम् । **'शताब्दकार्यक्रमः'** इति प्रयोक्तव्यम् ।

शततमं वर्षं सूचयितुम् अत्र 'शताब्दी'पदं प्रयुक्तम् । 'शताब्दी' इत्यस्य 'शतस्य अब्दानां समाहारः' इत्यर्थः । अत्र सः न अभिप्रेतः । 'शततमः अब्दः' इत्यर्थः अभिप्रेतः । तस्मिन् अर्थे 'शताब्द'शब्दस्य प्रयोगः युज्यते । तस्य अर्थविवरणं पूर्वम् उक्तम् ।

१४. एतस्मिन् **शतमाने** बहवः कवयः अभूवन् ।

**'एतस्मिन् शतके'** इति, **'एतस्यां शताब्द्याम्'** इति वा प्रयोक्तव्यम् ।

शतमानशब्दस्य 'शतस्य अनेकेषां मानं पूजा यस्मिन्' इति अर्थः ।

बहूनाम् आदरपात्रीभूतः उच्यते 'शतमानः' इति । 'शतमानं भवति शतायुः पुरुषः ....' इत्येतस्मिन् श्रुतिवाक्ये शतमानशब्दस्य अयमेव अर्थः उक्तः । 'शतस्य वर्षाणां समूहः' इत्यर्थः तस्य पदस्य नास्ति । अतः अपेक्षितम् अर्थं गमयितुं शतकशब्दः शताब्दीशब्दो वा प्रयोक्तव्यः । उभयोः अपि अर्थः समानः भवति ।

यदि स्थितस्य गतिः कथञ्चित् चिन्तनीया तर्हि इत्थं समर्थनं भवितुम् अर्हति – शतं वर्षाणि मानं यस्य सः शतमानः । यस्य = कालखण्डस्य इत्यर्थः । सः कालखण्डः शतमानः ।

१५. पितृपादानां **षष्ट्यब्दि**कार्यक्रमे बहवः उपस्थिताः आसन् ।

'षष्ट्यब्दि'कार्यक्रमः इति असाधु । **षष्ट्यब्द**कार्यग्रमः इति प्रयोक्तव्यम् ।

अत्र 'षष्टितमः अब्दः' इत्यर्थः अपेक्षितः । तदर्थं षष्ट्यब्दशब्दः उपयोक्तव्यः । षष्टितमः अब्दः षष्ट्यब्दः । समासबलात् पूरणार्थता । 'षष्टेः अब्दानां समाहारः' इति विग्रहे कृते तु 'षष्ट्यब्दी' इति ईकारान्तता स्यात् । इकारान्तता तु कथमपि न सम्भवति । समाहारार्थः अत्र न अभिप्रेतः इत्यतः षष्ट्यब्दीशब्दप्रयोगः अपि अनुचितः ।

१६. **द्वित्रि**क्षणानन्तरं सः ततः निर्जगाम ।

'द्वित्रिः' इति अपशब्दः । **'द्वित्राः'** इति प्रयोक्तव्यम् ।

द्वौ वा त्रयो वा द्वित्राः । *'संख्याव्ययासन्न...'* (२.२.२५) इति सूत्रेण बहुव्रीहित्वम् । *'बहुव्रीहौ संख्येये डजबहुगणात्'* (५.४.७३) इति सूत्रेण डच् । *'टेः'* (६.४.१४३) इति सूत्रेण टिलोपः । तस्मात् अकारान्तता । केवलः त्रिशब्दः इकारान्तः । द्वित्रशब्दः तु अकारान्तः ।

१७. मम गृहे **पञ्चषड्** यानानि सन्ति ।

'पञ्चषड्' इति अपशब्दः । **'पञ्चषाणि'** इति वक्तव्यम् ।

पञ्च वा षड् वा इति बहुव्रीहिः । बहुव्रीहौ डच्प्रत्ययः । तस्मात् अकारान्तता ।

षष्शब्दः षकारान्तः । पञ्चषशब्दः तु अकारान्तः । अतः 'पञ्चषड्दिनेषु' 'पञ्चषड्वाक्यानि' इत्यादीनि रूपाणि असाधूनि एव ।

१८. बन्धुगृहं गतः सः **चतुःपञ्चसु** दिनेषु प्रत्यागच्छेत् ।
'चतुःपञ्चसु' इति अपशब्दः । **'चतुःपञ्चेषु'** इति प्रयोक्तव्यम् ।
एतादृशशब्दानां प्रयोगः एव परिहरणीयः वा ।
चत्वारः वा पञ्च वा इति विग्रहः । *'संख्याव्ययासन्न...'* इति सूत्रेण बहुव्रीहित्वम् । ततः डच्प्रत्ययः च । तस्मात् अकारान्तता । 'चतुःपञ्चाः' इति रूपम् ।
इदमत्र ज्ञेयम् -
प्रादेशिकभाषासु 'एक-दो' 'दो-तीन' 'तीन-चार' 'चार-पांच' 'पांच-छे' 'सात-आठ' 'आठ-दस' 'दस-बारह' 'दस-पंद्रह' इत्यादयः प्रयोगाः श्रूयन्ते । संस्कृते तु एते सर्वे शब्दाः व्युत्पादयितुं शक्याः । किन्तु व्याकरणेन ये ये व्युत्पादयितुं शक्याः ते सर्वे प्रयुज्यन्ते इति न । ये । प्रयोगाः शिष्टव्यवहारे दृश्यन्ते ते एव प्रसिद्धाः, न अन्ये । अतः अप्रसिद्धानां रूपाणां प्रयोगस्य परिहारः एव वरम् ।

१९. **त्रिचतुर्वारं** सः माम् आहूतवान् ।
'त्रिचतुर्वारम्' इति अपशब्दः । **'त्रिचतुरवारम्'** इति प्रयोक्तव्यम् ।
'त्रयः वा चत्वारः वा' इति त्रिचतुराः । तस्य अकारान्तता । युक्तिस्तु पूर्वम् उक्ता । अतः त्रिचतुरवारम् इति प्रयोगः एव साधुः । त्रिचतुरशब्दः अकारान्तः । (चतुश्शब्दस्तु रेफान्तः)

२०. अद्य कार्यक्रमे **उपविंशतिः** जनाः आसन् ।
'उपविंशतिः' इति अपशब्दः । **'उपविंशाः'** इति प्रयोक्तव्यम् ।
विंशतेः समीपे ये सन्ति ते उपविंशाः । उपशब्दस्य अव्ययत्वात् *'सङ्ख्याव्ययासन्न..'* इति सूत्रेण बहुव्रीहिता । ततः डच् । ततः *'ति विंशतेर्डिति' (६.४.१४२)* इति सूत्रेण ति इत्यस्य लोपः । 'उपविंशाः' इति रूपम् ।
अत्रापि ज्ञेयम् -
प्रादेशिकभाषायां 'बीस-पच्चीस' 'तीस-चालीस' 'चालीस-पचास' 'साठ-सत्तर' इत्यादयः प्रयोगाः श्रूयन्ते । किन्तु संस्कृते एतादृशाः प्रयोगाः न श्रूयन्ते । (प्रयत्नेन व्युत्पादयितुं शक्याः ते शब्दाः इति तु अन्यत् ।) संस्कृते तु तादृशं भावं प्रकाशयितुम् उपविंशादयः शब्दाः

प्रयुज्यन्ते । उपविंशादयः यथा -
उपदशाः, उपविंशाः, उपत्रिंशाः, उपचत्वारिंशाः, उपपञ्चाशाः, उपषष्टाः, उपसप्तताः, उपाशीताः, उपनवताः, उपशताः, उपसहस्राः, ....... ।
विंशत्यधिकाः, त्रिंशदधिकाः, शताधिकाः इत्यादयः शब्दाः अपि प्रयोक्तुं शक्याः ।

२१. जीवने **परश्शतं** समस्याः सम्मुखीकरणीयाः भवन्ति ।
'परश्शतम्' इति प्रयोगः असाधुः । **'परश्शताः'** इति प्रयोगः करणीयः ।
शतात् परे इति विग्रहः । *'शतसहस्रौ परेणेति वक्तव्यम्'* इति काशिकावचनेन, पञ्चमी इति योगविभागाद्वा पञ्चम्यन्तः शतशब्दः परशब्देन समस्यते । राजदन्तादिगणे निपातात् शतशब्दस्य परनिपातत्वं पारस्करादित्वात् सुडागमः च । तस्मात् 'परश्शताः' इति रूपम् । शतशब्दः नपुंसके । किन्तु परश्शतशब्दस्तु विशेष्यनिघ्नः । अतः बहुवचनान्तता । एवमेव **परस्सहस्राः** इत्यादयः अपि ।

२२. अद्य कार्यक्रमः **कतिवादने** ?
'कतिवादने' इति अपशब्दः । **'कदा'** इति, **'कस्मिन् समये'** इति वा प्रयोक्तव्यम् ।
कतिशब्दः प्रश्नवाचकः बहुवचनान्तः च । वादनशब्देन सह कति-शब्दस्य समासः कथमपि उच्यते चेदपि अपेक्षितार्थस्य अवगमनं तु न भवति । अतः स च शब्दः परिहरणीयः एव ।

२३. अद्य कार्यक्रमः **पञ्चवादने** ।
'पञ्चवादने' इति प्रयोगः न दोषाय । शिष्टाः अपि समयकथनावसरे एताम् एव आनुपूर्वीम् उपयुञ्जानाः दृश्यन्ते । 'पञ्च वादनानि यस्मिन् तत्' इति विग्रहः । लोकाश्रयत्वात् लिङ्गस्य नपुंसकता अत्र ।

२४. कस्मिंश्चित् राज्ये **एकः** राजा आसीत् ।
**'कश्चन राजा'** इति प्रयोक्तव्यम् ।
एकस्मिन् राज्ये राजा भवति एकः एव । तच्च एकत्वं राजपदगतेन एकवचनेन एव अवगम्यते । तस्मात् एकत्वद्योतनाय एकशब्दस्य प्रयोगः निरर्थकः भवति । निरर्थकं पदप्रयोगं न सहन्ते शिष्टाः ।

अतः अत्र 'कश्चन' इति पदस्य प्रयोगः एव उचितः ।

यत्र एकशब्दः परिहर्तुं शक्यः तादृशाः केचन प्रयोगाः यथा -

- एकं वर्षम् अतीतम् ।
- छात्रेण एकः प्रश्नः पृष्टः ।
- तेन एकः स्वप्नः दृष्टः ।

२५. सः मह्यम् **एकशतं** रूप्यकाणि दत्तवान् ।

'शतं रूप्यकाणि' इति प्रयोगः युज्यते ।

अत्र 'शत'गतस्य एकत्वस्य द्योतनाय एकशब्दः प्रयुक्तः । तच्च एकत्वं शतशब्दगतेन एकवचनेन एव द्योत्यते । तस्मात् एकत्वम् उक्तं भवति । उक्तस्यैव अर्थस्य कथनाय न पदान्तरं प्रयुज्यते । तस्मात् 'शतं रूप्यकाणि' इत्येषः प्रयोगः अत्र समुचितः । शतशब्दगतात् एकवचनात् एकत्वं भासते एव । यदा शतशब्दगतं द्वित्वं त्रित्वं वा द्योतनीयं भवति तत्र तु द्विशत-त्रिशतादयः प्रयोगाः साधवः । एकत्वद्योतनाय तु एकवचनम् एव समर्थं भवति । प्रादेशिकभाषासु एकशतादयः प्रयोगाः श्रूयन्ते । संस्कृतशैली अन्या खलु भवति ? चेक्पत्रादिषु तु (यदि संस्कृतेन लिख्यते तर्हि) 'एकं शतं रूप्यकाणि' इति प्रयोगः औचित्यम् आवहति । 'शतं रूप्यकाणि' इति लिखिते सति अपरः कश्चित् शतशब्दात् पूर्वं द्वित्रप्रभृतीः लिखित्वा वञ्चयितुम् अर्हति । अतः स्पष्टप्रतिपत्तये तत्र 'एकं शतम्' इति प्रयोगः उचितः ।

२६. **एकस्मिन्** राज्ये **एकः** कृषकः आसीत् ।

'**कस्मिंश्चित्** राज्ये **कश्चन** कृषकः आसीत्' इति वाक्यविन्यासः वरम् ।

एकशब्दः सङ्ख्यावाची । सङ्ख्या च विशेषणं भवति । विशेषणस्य इतरव्यावर्तकत्वं भवति । 'एकः आसीत्' इत्यस्य 'द्वौ त्रयः वा न आसन्' इत्यपि अर्थः भवति । स च अर्थः अत्र न अभिप्रेतः । अनिर्दिष्टत्वम् अत्र अभिप्रेतम् । तदर्थं किंशब्दात् चित् चन वा प्रयोक्तव्यम् । तस्मात् अभिप्रेतस्य अर्थस्य प्रतिपादनं भवितुम् अर्हति ।

२७. तात ! **एकां** कथां कथय ।

एतस्मिन् वाक्यविन्यासे न दोषः ।

यद्यपि कथागतम् एकत्वं वक्तुः इष्टं, तच्च एकत्वम् एकवचनेन एव द्योतितं, तथापि एकशब्दप्रयोगः कृतः अस्ति अत्र । कथाकथनम् अनिच्छन्तं पितरं पितामहं वा उद्दिश्य उक्तं वाक्यम् एतत् । अतः वक्ता द्वित्वं त्रित्वं च निवारयितुम् इच्छन् एकशब्दं प्रयुंक्ते । एवं च एकशब्दप्रयोगस्य फलं द्वित्वादिनिवृत्तिः । (पूर्वोदाहरणेषु एकत्वद्योतनं फलम् आसीत्, अत्र द्वित्वादिनिवृत्तिः अपि उद्दिष्टा) अतः एकशब्दप्रयोगः उचितः एव ।

यदि पूर्वोदाहरणेषु द्वित्वादिनिवृत्तिः अपि फलत्वेन इष्यते तदा तु 'एक'शब्दस्य प्रयोगोऽपि युज्यते एव ।

२८. **कति गुरुदक्षिणा** देया इति शिष्येण पृष्टम् ।

'कति गुरुदक्षिणा' इति प्रयोगः असाधुः। **'कियती गुरुदक्षिणा'** इति, **'गुरुदक्षिणा कियत् देया'** इति वा प्रयोक्तव्यम् ।

'कति' इत्यस्य उत्तरं संख्यात्मकम् एव भवति । गुरुदक्षिणा च परिमाणात्मिका । (एका गुरुदक्षिणा, द्वे गुरुदक्षिणे.... इति गणना न क्रियते । एतावत्परिमाणिका गुरुदक्षिणा इति उच्यते ।) अतः 'कियती गुरुदक्षिणा' इत्येव वक्तव्यम् । यदि कियच्छब्दस्य क्रियायाम् अन्वयः इष्यते तदा 'गुरुदक्षिणा कियत् देया' इति प्रयोगः ।

*'किमः परिमाणे डति च'(५.२.४१)* इति सूत्रेण संख्यापरिमाणे वाच्ये किमः डतिः । तस्मात् 'कति' इति सिद्धिः । कियच्छब्दस्य तु परिमाणे संख्यापरिमाणे च वतुप् । वस्य घः । अतः परिमाणार्थकता सङ्ख्यार्थकता च तस्य । तस्मात् यत्र संख्यात्मकम् उत्तरं भवति तत्रापि कियच्छब्दस्य प्रयोगः शक्यः। यथा - कियन्तः जनाः सन्ति तत्र ?

२९. **चतसृणाम्** अपि बालिकानाम् अध्ययनं सम्यक् प्रचलति ।

'चतसृणाम्' इति अपशब्दः । **'चतसृणाम्'** इति प्रयोक्तव्यम् ।

अजन्तशब्दानां सर्वेषां षष्ठीबहुवचने दीर्घः - *'नामि'* इति सूत्रेण । यथा - रामाणाम्, मातॄणाम् इत्यादि । किन्तु तिसृचतसृशब्दयोः न दीर्घः, *'न तिसृचतसृ' (६.४.४)* इति सूत्रेण तस्य निषेधात् । तस्मात् 'चतसृणाम्' इति रूपम् । एवमेव ' तिसृणाम्' इत्यपि ।

३०. सा **प्रथमापङ्क्तौ** स्थितवती ।

'प्रथमापङ्क्तौ' इति अपशब्दः । **'प्रथमपङ्क्तौ'** इति, **'प्रथमायां पङ्क्तौ'**

इति वा प्रयोक्तव्यम् ।

विशेषणपूर्वपदकर्मधारये प्रथमा + पङ्क्तिः इति स्थिते *'पुंवत्कर्मधारय...'* (६.३.४२) इति सूत्रेण पुंवद्भावः । तस्मात् 'प्रथमपङ्क्तिः इति रूपम् । व्यस्तप्रयोगे तु 'प्रथमायां पङ्क्तौ' इति रूपम् ।

३१. बालः **'प्रथमाकक्ष्यायां** पठति ।

**'प्रथमाकक्ष्या'** इति प्रयोगः न दोषाय । **'प्रथमकक्ष्या'** इत्यपि प्रयोगः भवितुम् अर्हति ।

'प्रथमा' इति कक्ष्यायाः नाम । तस्मात् कर्मधारये न पुंवद्भावः । अतः 'प्रथमाकक्ष्यायाम्' इति प्रयोगः साधुः । यदि प्रथमपदस्य संज्ञात्वं न इष्टम्, अपि तु पूरणप्रत्ययान्तमात्रत्वम् इष्टं तदा तु पुंवद्भावे 'प्रथमकक्ष्यायाम्' इत्यपि साधु ।

एवं 'प्रथमाविभक्तौ' इत्यादिषु अपि ज्ञेयम् । 'प्रथमा' इति विभक्तेः नाम । तस्मात् 'प्रथमाविभक्तौ' इति प्रयोगः । विभक्तिनिर्देशावसरे सामान्यतया 'प्रथमा' 'द्वितीया' इत्यादयः संज्ञाशब्दाः एव प्रयुज्यन्ते, न तु प्रथमादयः पूरणप्रत्ययान्ताः । अतः 'प्रथमविभक्तौ' इति प्रयोगः यद्यपि समर्थनार्हः, तथापि तस्य प्रयोगवैरल्यम् एव ।

३२. **सार्धैकसहस्रवर्षात् पूर्वं** एषा घटना प्रवृत्ता ।

'सार्धैकसहस्रवर्षात्' इति अपशब्दः । **'सार्धैकसहस्रात् वर्षेभ्यः'** इति, **'सार्धैकसहस्रवर्षेभ्यः'** इति वा प्रयोक्तव्यम् ।

'सार्धैक..' इति प्रयोगः अस्ति, अतः एकवचनम् इति चिन्तयति प्रयोक्ता । उदाहरणे 'सार्धैक..' इत्येतावत् एव नास्ति, अपि तु 'सहस्र'शब्दः अपि अस्ति । सः एकवचनान्तः अपि बहुत्वं द्योतयति । तस्मात् वर्षशब्दात् बहुत्वद्योतकः विभक्तिप्रत्ययः एव भवेत् । अतः 'सार्धैकसहस्रात् वर्षेभ्यः' इति प्रयोगः । यदि समासः क्रियते तर्हि 'सार्धैकसहस्रवर्षेभ्यः' इति प्रयोगः ।

३३. **एकशतदश** (११०)

**'एकशतदश'** इति भाषाध्ययनावसरे प्राथमिकस्तरे प्रयोगः न दोषाय ।

*'अङ्कानां वामतो गतिः'* इति हि नियमः । अतः 'दशाधिकशतम्'(११०) इति पठ्यते । अङ्कानां दक्षिणतः गतिः सर्वथा नास्ति

इति न । हेमाद्रिपुराणे महासङ्कल्पे प्रयोगो यथा - 'चतुर्लक्षद्वात्रिंशत्-सहस्त्राणाम्' (४३२०००) इति ।

दीधितिकारस्य प्रयोगो यथा - '*दशसहस्त्राणां चतुश्शतानि* चत्वारि' (१०४०४) इति ।

प्रादेशिकभाषासु अङ्कानां दक्षिणतः गतिः एव दृश्यते । अतः प्राथमिके स्तरे सः एव क्रमः आदृतः चेत् पठितॄणाम् आनुकूल्यं सिध्येत् । तस्मात् प्राथमिके स्तरे दक्षिणतः गतिः अङ्गीक्रियते । गच्छता कालेन वामतः गतिः एव अनुसरणीया । सा एव प्राचुर्येण दृश्यते संस्कृतक्षेत्रे ।

३४. मम दूरवाणीसंख्या - **द्वे द्वे एकं पञ्च पञ्च सप्त नव** (२२१५५७९)

एषः प्रयोगः न दोषाय । अत्र संख्यागताः अङ्काः पार्थक्येन उच्चारिताः । दूरवाणीसंख्यादीनां ज्ञापने अयं क्रमः उपकारकः भवति । उच्चारितानाम् अङ्कानां विभक्तियोजनम् एकैकस्यापि पार्थक्येन कृतम् इत्यतः शास्त्रदृष्ट्या न कोऽपि दोषः । एतस्मात् संख्यायाः अखण्डता उक्ता न भवति इति तु सत्यम् । अखण्डताज्ञापने वक्तुः तात्पर्यं नास्ति । श्रोतुः आनुकूल्याय सः एकैकम् अपि अङ्कं पार्थक्येन उच्चारयितुम् इच्छति ।

३५. कार्यक्रमः **पञ्चजून्दिनाङ्के** भविष्यति ।

'पञ्चजून्दिनाङ्के' इति प्रयोगः अयुक्तः । **'जून्मासस्य पञ्चमे दिनाङ्के'** इति प्रयोक्तव्यम् ।

दिनाङ्कः (Date) कश्चन निर्देष्टुम् इष्टः वक्त्रा । स च पञ्चमः । 'पञ्च' इत्येषा सङ्ख्या 'दिनाङ्क'पदे अभेदेन अन्वयं प्राप्तुं नार्हति । अतः तेन 'पञ्चम'शब्दः (पूरणप्रत्ययान्तः) प्रयोक्तव्यः । स च दिनाङ्कः जून्-मासस्य । अतः 'जून्मास'शब्दात् षष्ठी । तस्मात् 'जून्मासस्य पञ्चमे दिनाङ्के' इति प्रयोगः उचितः भवति ।

३६. सभायाम् **अतिथित्रयाणां** सत्कारः कृतः ।

'अतिथित्रयाणाम्' इति अस्थाने । **'अतिथित्रयस्य'** इति प्रयोक्तव्यम् । 'त्रयम्' इत्यत्र '*द्वित्रिभ्यां तयस्यायज्वा*' (*५.२.४३*) इति सूत्रेण त्रिशब्दात् अयच् । 'त्रयम्' इत्यस्य अर्थः - त्र्यवयवकसमुदायः इति । समुदायस्य एकत्वात् एकवचनम् । अतः **'अतिथित्रयस्य'** इति

एकवचनान्तेन रूपेण एव इष्टसिद्धिः । त्रयस्य इति कथनात् समुदायघटितानां त्रयाणाम् अपि अतिथीनाम् उपसङ्ग्रहः भवति एव । पुनः तेषां निर्देशाय बहुवचनस्य न आवश्यकता ।

३७. **कतिचित्** मासेभ्यः पूर्वम् एषा घटना घटिता ।
**'कतिभ्यश्चित्'** इति प्रयोक्तव्यम् ।
कतिशब्दः मासशब्दस्य विशेषणम् । मासात् पञ्चमीबहुवचनं श्रूयते । अतः कतिशब्दात् अपि पञ्चमीबहुवचनम् एव श्रूयेत । 'कतिचित्' इत्यत्र चित् इति अव्ययम् । 'कति' इति पृथक् एव पदम् । न तस्य अव्ययाङ्गत्वम् । अतः विशेष्यानुगुण्येन तस्यापि यथायोग्यं विभक्तिः स्यात् एव ।

३८. **कतिचन सहस्रपुस्तकानि** अस्माभिः प्रकाशयिष्यन्ते ।
**'कतिपयसहस्रं पुस्तकानि'** इति प्रयोगः साधुः स्यात् ।
एतस्मिन् वाक्ये सहस्रस्य विशेषणत्वेन अनिर्दिष्टसङ्ख्यासूचकं पदम् इष्यते । कतिपयशब्दः सुबन्तः विशेषणार्हः अनिश्चितसङ्ख्यासूचकः च । अतः तस्य प्रयोगे एव औचित्यम् ।
कतिचनशब्दः विशेषणं भवितुं नार्हति । कति-विशेष्ययोः मध्ये अव्ययस्य 'चन' इत्यस्य अनुप्रवेशात् ।

३९. **त्रिंशत्यधिकानि** कथापुस्तकानि पठितानि मया ।
'त्रिशत्यधिकानि' इति अपशब्दः । **'त्रिंशदधिकानि'** इति प्रयोक्तव्यम् ।
'त्रिंशद्' इति दकारान्तं पदम् । त्रिंशद् + अधिकम् = त्रिंशदधिकम् । यदि स च शब्दः विंशतिः इव त्यन्तः ('ति' अन्ते यस्य सः) स्यात् तर्हि त्रिंशत्यधिकम् इति यण्सन्धियुक्तं रूपं स्यात् । त्यन्तता तु नास्ति । अतः यणः अपि अप्राप्तिः ।

४०. कक्ष्यायां **द्विविंशतिः** छात्राः सन्ति ।
'द्विविंशतिः' इति अपशब्दः । **'द्वाविंशतिः'** इति प्रयोक्तव्यम् ।
द्विशब्दात् दश-विंशति-त्रिंशच्छब्देषु परेषु नित्यम् आत्वं विहितं *'द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः'* (६.३.४७) इति सूत्रेण । एतत् आत्वं बहुव्रीहिसमासे अशीतिशब्दे परे च न भवति । *'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्'* (६.३.४९) इति सूत्रेण चत्वारिंशदादिषु

परेषु विकल्पेन आत्वम् ।

अतः – 'द्वादश, द्वाविंशतिः, द्वात्रिंशत्, इत्येतेषु त्रिषु आकारः नित्यः । 'द्वाचत्वारिंशत्/द्विचत्वारिंशत्, द्वापञ्चाशत्/द्विपञ्चाशत्, द्वाषष्टिः/ द्विषष्टिः, द्वासप्ततिः/द्विसप्ततिः, द्वानवतिः/द्विनवतिः' इत्येतेषु रूपद्वयम् । शतपर्यन्तम् एव एषा व्यवस्था । *'प्राक् शतात् वक्तव्यम्'* इति वार्तिकम् । 'द्व्यशीतिः' इत्यत्र आत्वं नास्ति इति तु स्मर्तव्यम् ।

४१. **अष्टत्रिंशत्** विकलाङ्गाः सन्ति एतस्मिन् ग्रामे ।

'अष्टत्रिंशत्' इति अपशब्दः । **'अष्टात्रिंशत्'** इति प्रयोक्तव्यम् । द्विशब्दात् इव अष्टशब्दात् अपि दश-विंशति-त्रिंशच्छब्देषु परेषु नित्यम् आत्वम् । ततः ऊर्ध्वं (शतपर्यन्तं) विकल्पेन आत्वम् । सूत्रे पूर्वोक्ते एव । उदा –

- नित्यम् आत्वम् – अष्टादश, अष्टाविंशतिः, अष्टात्रिंशत्
- विकल्पेन आत्वम् –

अष्टाचत्वारिंशत् / अष्टचत्वारिंशत्
अष्टापञ्चाशत् / अष्टपञ्चाशत्
अष्टाषष्टिः / अष्टषष्टिः
अष्टासप्ततिः / अष्टसप्ततिः
अष्टानवतिः / अष्टनवतिः

'अष्टाशीतिः' इत्यत्र तु आत्वं नास्ति । अत्र सवर्णदीर्घः अस्ति इति विशेषः ।

४२. **त्रयाशीतिः** छात्राः प्रथमां श्रेणीम् आप्नुवन् ।

'त्रयाशीतिः' इति अपशब्दः । **'त्र्यशीतिः'** इति प्रयोक्तव्यम् । *'त्रेस्त्रयः' (६.३.४८)* इति सूत्रेण त्रिशब्दस्य नित्यं त्रयस्-आदेशः दश-विंशति-त्रिंशच्छब्देषु परेषु । ततः ऊर्ध्वं शतपर्यन्तं विकल्पेन । अशीतिशब्दे परे न त्रयस्-आदेशः । अतः 'त्र्यशीतिः' इत्येव रूपम् । इतरत्र रूपाणि यथा –

- नित्यं त्रयस्-आदेशः – त्रयोदश, त्रयोविंशतिः, त्रयस्त्रिंशत्
- विकल्पेन त्रयस्-आदेशः –

त्रिचत्वारिंशत् / त्रयश्चत्वारिंशत्     त्रिपञ्चाशत् / त्रयःपञ्चाशत्
त्रिषष्टिः / त्रयष्षष्टिः     त्रिसप्ततिः / त्रयस्सप्ततिः

त्रिनवतिः / त्रयोनवतिः

४३. **एकान्नविंशतिः** रूप्यकाणि मया मित्राय दातव्यानि ।

**'एकान्नविंशतिः'** इति रूपं न दोषाय ।

'एकेन न विंशतिः' इति विग्रहः । *'एकादिश्चैकस्य आदुक्'* (६.३.७३) इति सूत्रेण अत्र आदुक् । आदुकः अनुनासिकत्वे 'एकान्नविंशतिः' इति रूपम् । तदभावे 'एकाद्नविंशतिः' इति । एकेन ऊना विंशतिः 'एकोनविंशतिः' । एताम् एव सङ्ख्याम् अभिधातुं 'नवदश' शब्दः अपि प्रयुज्यते । तस्मात् '१९' इत्यस्य अभिधानाय चत्वारः शब्दाः - 'एकोनविंशतिः, एकान्नविंशतिः, एकाद्नविंशतिः, नवदश' इति । एवमेव २९, ३९ इत्यादिषु अपि व्यवस्था ।

## १०. दशमोऽध्यायः

# विशिष्टाः प्रयोगाः

संस्कृतेन यद्यत् लिख्यते तत्सर्वं संस्कृतत्वोपेतं न भवति । संस्कृतत्वोपेतं किं, तद्भिन्नं च किमिति अवगमनं न सुकरम् । सूक्ष्मचिन्तनम् अपेक्षते तत् । प्रादेशिकभाषाप्रभावादिकारणतः क्वचित् अस्मदीयानि वाक्यानि बहुधा दुष्यन्ति । पुनः क्वचित् व्याकरणादिनियमानाम् अपालनात् दोषयुक्तानि भवन्ति। क्वचित् शिष्टव्यवहारस्य अपरिशीलनात् तानि शिष्टसम्मतानि न भवन्ति । अतः संस्कृतत्वस्य पालनं न सुकरम् ।

कानिचन वाक्यानि वाच्यमर्यादया यम् अर्थम् अभिव्यञ्जयन्ति स च अर्थः सङ्गतः न भवति । तादृशानि वाक्यानि साधूनि उत असाधूनि इति निर्णेतव्यं चेत् ग्रन्थादिपरिशीलनम् एव शरणम् । आपाततः यः अर्थः दृश्यते तम् अवलम्ब्य यदि तस्य वाक्यस्य शब्दस्य वा असाधुतां निर्णयेम तर्हि वयं दोषं कृतवन्तः स्याम । ग्रन्थपरिशीलनं, विदुषाम् उपसर्पणम् इत्यादयः आधिक्येन कृताः चेत् प्रायः वयं समुचिततां निर्णेतुं शक्नुयाम ।

एतस्मिन् प्रकरणे तादृशाः केचन विषयाः उपस्थाप्यन्ते, येषाम् अध्ययनात् संस्कृतत्वनिर्णये उपकारः स्यात् । इह तादृशानि कानिचन वाक्यानि प्रस्तूयन्ते, येषां च संस्कृतत्वविषये वयं सन्दिहानाः स्याम ।

०१. वत्स ! एतस्य मोदकस्य **रुचिं पश्य** ।

**'रुचिं पश्य'** इति प्रयोगः न दोषाय ।

वस्तुतस्तु रुचिः न चक्षुरिन्द्रियेण गृह्यते । अतः दर्शनार्थकस्य दृशधातोः (पश्य) प्रयोगः न उचितः इत्यस्ति संशयस्य अवसरः । किन्तु दृशधातोः अनेकार्थत्वं शास्त्रकारैः अङ्गीकृतम् । यथा - मनसा हरिं पश्यति ।

प्रकृते दृशधातुः 'जिह्वेन्द्रियस्य विषयीकरोतु' इत्यर्थे अस्ति । अतः 'रुचिं पश्यतु' इति न दोषाय । एतस्मिन् एव अर्थे 'रुचिम् आस्वाद्य परिशीलयतु' इत्यपि प्रयोगः सम्भवति ।

०२. पित्रा पुत्रः आदिष्टः यत् **तेन** आपणः गन्तव्यः इति ।

**'तेन'** इति प्रयोगः अस्थाने । **'त्वया'** इत्येव प्रयोक्तव्यम् ।

पित्रा यत् उक्तं तत् तत्प्रयुक्तैः एव शब्दैः ज्ञापनीयम् इति तु संस्कृतशैली । पिता पुरतः स्थितं पुत्रम् उद्दिश्य युष्मच्छब्दं प्रयुक्तवान् भवति, न तु 'तत्'शब्दम् । 'तत्'शब्दः च दूरस्थं परामृशति । अतः 'त्वया आपणः गन्तव्यः' इत्येव प्रयोगः स्यात् ।

आंग्लभाषायां Direct Speach, Indirect Speach इति शैलीद्वयम् अस्ति । पूर्वोक्ते एव वाक्ये **युष्मच्छब्दः (त्वया)** प्रयुक्तः चेत्, अन्येन उक्तं तदीयैः एव शब्दैः ज्ञापितं चेत्, Direct Speach इति उच्यते । युष्मच्छब्दस्य स्थाने तच्छब्दस्य प्रयोगः कृतः चेत् Indirect Speach इति उच्यते । ताम् एव व्यवस्थाम् अनुकुर्वन्तः केचन, 'यत्'शब्दः प्रयुक्तः चेत् युष्मच्छब्दस्य स्थाने तच्छब्दप्रयोगः भवितुम् अर्हति, तदा Indirect Speach भवितुम् अर्हति इति चिन्तयन्ति । सा च भ्रान्तिरेव ।

यच्छब्दः प्रयुक्तः चेदपि युष्मच्छब्दं प्रयुज्य एव पितुः वाक्यम् अनुवक्तव्यम् । (तेन आदेशकाले यत् वाक्यं प्रयुक्तं तदेव वाक्यं प्रयोक्तव्यम् ।)

'त्वया आपणः गन्तव्यः इति पित्रा आदिष्टम्' इत्येतस्य वाक्यस्य, 'पित्रा आदिष्टं यत् त्वया आपणः गन्तव्यः इति' इत्येतस्य वाक्यस्य च न कोऽपि भेदः । यच्छब्दप्रयोगप्रवृत्तिः औत्तराहेषु आधिक्येन दृश्यते ।

०३. एषः **घटः स्रवति** ।

**'घटः स्रवति'** इत्यपि प्रयोगः भवितुम् अर्हति । 'स्रु'धातोः अत्र सकर्मकता । 'जलम्' इत्यादि अत्र कर्म ।

गत्यर्थकः 'स्रु'धातुः वस्तुतः अकर्मकः । अतः 'घटात् जलं स्रवति' इति प्रयोगः सम्भवति । अत्र गतिः जले दृश्यते, न तु घटे । अतः जलस्य कर्तृत्वं, घटस्य अपादानता च स्फुटम् । एतदनुगुणाः केचन प्रयोगाः यथा –

- धनाद्धि धर्मः स्रवति, शैलादधि नदी यथा ।

  – रामायणम्

- न हि निम्बात् स्रवेत् क्षौद्रम् ।

  – रामायणम्

◆ स्रवत्युदकं कुण्डिकात् ।

*- भाष्यम्*

किन्तु अयमेव 'स्रु'धातुः सकर्मकत्वेनापि बहुधा प्रयुक्तः दृश्यते । यथा -

◆ कुञ्जरेण स्रवता मदम् ।

*- कथासरित्सागरः*

◆ न हि मलयगतश्चन्दनतरुः परशुप्रहारतः स्रवेत् पूयम् ।

◆ वित्रासुस्तावकाः सैन्याः शकृन्मूत्रे च सुस्रुवुः ।

*- महाभारतम्*

अतः स्रुधातुः क्वचित् अकर्मकत्वेन, क्वचिच्च सकर्मकत्वेन च प्रयुज्यते इति स्पष्टम् । 'घटः स्रवति' इत्यत्र तु सकर्मकता । अतः तादृशः प्रयोगः न दोषाय ।

अकर्मकस्य अपि धातोः सकर्मकत्वेन प्रयोगः न केवलं 'स्रु'धातोः, अपि तु द्रु - गतौ, क्षर - सञ्चलने, स्यन्दू - प्रस्रवणे इत्यादीनाम् अपि । तद्यथा -

◆ रक्षांसि भीतानि दिशो द्रवन्ति ।

*- भगवद्गीता*

◆ तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु ।

*- मनुस्मृतिः*

◆ सस्यन्दे शोणितं व्योम ।

*- भट्टिकाव्यम्*

अतः अकर्मकाणाम् अपि धातूनां सकर्मकत्वेन प्रयोगः शिष्टैः क्रियते इति सिद्धम् । 'स्रु'धातोः तु उदाहरणानि प्रदर्शितानि एव । तस्मात् **'घटः स्रवति'** (घटः जलं स्रवति) इति, **'जलं स्रवति'** (घटात् जलं स्रवति) इति च उभयथा अपि प्रयोगः भवितुम् अर्हति ।

अथवा 'मञ्चाः हसन्ति' इत्यत्र लक्षणया (लक्षणावृत्त्या) 'मञ्चस्थाः हसन्ति' इति यथा उच्यते तथैव 'घटः स्रवति' इत्यस्य लक्षणया 'घटस्थं जलं स्रवति' इत्यपि समाधानं वक्तुं शक्यते । तदा तत्र जलस्य न कर्मता ।

अथवा 'स्रवति' इत्येतत् अन्तर्भावितण्यर्थम् इति वा भवितुम्

अर्हति । तन्नाम 'स्रावयति' इत्यर्थे स्रवतेः प्रयोगः । तदा जलस्य कर्मता अपि उपपन्ना एव ।

०४. उद्यानपालकः **जलेन** सिञ्चति / **जलं** सिञ्चति ।
उभयथा अपि प्रयोगः सम्भवति । 'जलेन' इत्यत्र जलस्य करणत्व-विवक्षा । 'जलम्' इत्यत्र कर्मत्वविवक्षा । उभयमपि सङ्गतम् इत्यत्र चारुदेवशास्त्रिणां वचनं प्रमाणम् । तद्यथा -

*''धातूनाम् अर्थान्तरसङ्क्रमादपि व्यतियन्ति कारकाणि । यथा सिञ्चतेः क्षरणार्थे द्रवद्रव्यस्य कर्मत्वम्, आर्द्रीकरणार्थे च करण-त्वम्''* इति ।

*- वाग्व्यवहारादर्शे*

अतः 'जलं सिञ्चति' इति प्रयोगः अपि साधुः एव ।

०५. एषा **लेखनी** सम्यक् **लिखति** ।
**'लेखनी लिखति'** इति प्रयोगः न दोषाय ।
अक्षरविन्यासार्थकः लिखधातुः सकर्मकः । लेखनक्रियायां लेखनी भवति साधनम् । अतः 'बालः लेखन्या वाक्यं लिखति' इति प्रयोगः सम्भवति । किन्तु लेखनी कदापि न लिखति, तस्याः अचेतनत्वात् । तस्मात् सन्देहस्य अवसरः अस्ति एव - 'लेखनी लिखति इत्येषः प्रयोगः किं शुद्धः ?' इति ।
यदा सौकर्यातिशयं द्योतयितुं करणादीनाम् अपि क्वचित् कर्तृत्वं विवक्ष्यते तदा 'लेखनी लिखति' इति प्रयोगः सम्भवति । एवमेव 'स्थाली पचति' 'काष्ठं पचति' 'असिः छिनत्ति' इत्यादयः प्रयोगाः ।

०६. **धातूनाम् अनेकार्थता** ।
**'धातवः अनेकार्थाः भवन्ति'** इति तु संस्कृतक्षेत्रे प्रसिद्धिः अस्ति । धातुनिर्देशावसरे यः अर्थनिर्देशः भवति स तु दिङ्मात्रप्रदर्शनपरः । 'एतस्य धातोः एषः एव अर्थः' इति न निर्दिश्यते तत्र । कस्य धातोः कियन्तः अर्थाः सम्भवन्ति इति तु प्रयोगबलात् एव द्रष्टव्यं भवति । धातोः ये अर्थाः स्फुरन्ति तेषां गुणप्रधानभावः नास्ति । यत्र लक्षणयः प्रयोगः, तत्र कदाचित् गौणभावः वक्तुं शक्येत । यथा -

बालाः क्षीरं पिबन्ति । (मुख्या वृत्तिः)

श्रवणाञ्जलिपुटपेया रामायणकथा (गौणी वृत्तिः)

किन्तु तदितरस्थलेषु अर्थानां समप्रधानता एव ।

अनेकार्थत्वस्य उदाहरणानि यथा -

◆ वपति - बीजं वपति । (बीजसन्तानार्थकः)
- केशान् वपति । (लवनार्थकः)

◆ शंसति - देवं (प्र)शंसति । (स्तुत्यर्थकः)
- नॄन् शंसति । (हिंसार्थकः)

◆ वदति - बालकः वदति । (व्यक्तवचनार्थकः)
- वीणा वदति । (अव्यक्तवचनार्थकः) (ध्वन्यर्थकः)

◆ वर्तयति - तत्र ते वर्तयिष्यामि यथा युद्धमवर्तत ।
- भा. द्रोण. १३५.२८
(वर्णनार्थकः)
- रामोऽपि सह वैदेह्या वने वन्येन वर्तयन् ।
- रघुवंशः - १२.८६
(वृत्तिकरणार्थकः)
- कर्णो भृशं न्यश्वसदश्रु वर्तयन् ।
- भा. द्रोण. २.८
(मोचनार्थकः)

०७. अहं तस्मै **दूरवाणीं करोमि ।**

'दूरवाणीं करोति' इति प्रयोगः साधुः एव ।

करोतिः लोके द्विधा प्रयुज्यते प्रायः - सामान्यार्थे विशेषार्थे चेति ।

सामान्यार्थे यथा - भोजनं करोति, अध्ययनं करोति, स्नानं करोति इत्यादयः ।

विशेषार्थः यथा - काव्यं करोति, घटं करोति इत्यादयः । रचनम् / उत्पादनम् / निर्माणम् इत्यादयः करोतेः विशेषार्थाः इति वक्तुं शक्यं प्रायः ।

प्रकृतवाक्ये तु दूरवाणीकर्ता न हि दूरवाणीम् उत्पादयति । तां तु उत्पादयति काचित् संस्था । (ऐ.टि.ऐ.नामिका, अन्या वा) अतः अत्र करोतेः उत्पादनार्थकता न ।

अत्र 'करोति' नाम प्रवर्तयति इत्यर्थः, 'कारीषोऽग्निः अध्यापयति'

इत्यत्र यथा तथा । अतः 'दूरवाणीं करोति' इत्यस्य प्रयोगस्य साधुत्वम् । वस्तुतस्तु करोतिः बहुषु अर्थेषु प्रयुज्यते । तद्यथा -

◆ एवं त्वं पुत्रशोकेन राजन् **कालं करिष्यसि** ।

*- रामायणम् - २.६४.५२*

(मरिष्यसि इत्यर्थः अत्र)

◆ **चकाराङ्गिरसां** श्रेष्ठाद् धनुर्वेदं गुरोस्तदा ।

*- शाकुन्तलम् - २.५.*

(अत्र करोतेः विद्योपादानम् अर्थः)

◆ अत्र ते **पादौ करोमि** यदि तन्वि ताम्यसि ।

*- रामचरितम् - ४.४६*

(संवाहयामि इत्यर्थः अत्र)

◆ ते सर्वे **चक्रुरश्रूणि** ।

*- हरिवंशः - २.२६.२२*

(अत्र मुमुचुः इत्यर्थः करोतेः)

◆ **केशान्** जानाम्यहं **कर्तुम्** ।

*- भा. विराट. ९.१८*

('कर्तुम्' इत्यस्य प्रसाधयितुम् इत्यर्थः)

◆ **कृतानि** प्रथमेनाह्ना योजनानि चतुर्दश ।

*- रामायणम् - ६.२२.६४*

(कृतानि नाम अतिक्रान्तानि इत्यर्थः)

एवं करोतिना बहूनां धातूनाम् अर्थस्य अनुवादः क्रियते ।

०८. मोदकं **हस्ते** मा **ददातु** ।

**'हस्ते (मा) ददातु'** इति प्रयोगः साधुः एव ।

अत्र 'मा ददातु' इत्यस्य दाननिषेधः न अर्थः । वाक्यप्रयोक्त्रा दानम् इष्यते एव । तन्नाम 'बाल'स्य एव सम्प्रदानत्वम् इष्यते । एवं तर्हि 'मा ददातु' इत्यस्य निषेधगर्भस्य वाक्यस्य किं तात्पर्यम् ?

अत्र ददातेः अर्पणार्थकत्वम् । तस्मात् - 'मोदकं बालाय दातव्यं, किन्तु हस्ते न स्थापनीयम्' इत्ययम् अर्थः एतस्मात् वाक्यात् निर्गच्छति । अतः अयं वाक्यप्रयोगः साधुः एव ।

ददातेः अपि बह्वर्थकत्वम् अस्ति एव । ददातेः स्वस्वत्वनिवृत्तिपूर्वक-

परस्वत्वारोपणार्थकता तु प्रसिद्धा एव । अन्ये केचन अर्थाः यथा -

- चैत्रः रजकाय वस्त्रं ददाति । (अधीनीकरणम् अर्थः)
- उपाध्यायः शिष्याय चपेटां ददाति । (संयोजयति इत्यर्थः)
- दीयन्तां पक्षद्वाराणि । - *विद्धशालभञ्जिका* (पिधानम् अर्थः)
- घ्नतः पृष्ठं ददाति । (सन्निधापनम् अत्र अर्थः)

०९. अयं **मार्गः** मैसूरुनगरं **गच्छति** ।

**'मार्गः गच्छति'** इति प्रयोगः साधुः एव ।

गत्यर्थकः गम्धातुः । तस्य कर्तृपदानि भवन्ति रामादीनि गतिक्रियाश्रयभूतानि । मार्गः तु न गतिक्रियाश्रयः । अतः 'मार्गः गच्छति' इति प्रयोगः अनुपपन्नः इति भासते आपाततः दर्शनात् । वस्तुतस्तु तत्स्थेषु गच्छत्सु मार्गः गच्छति इति उच्यते । *'तद्गच्छति पथिदूतयोः' (४.३.८५)* इति सूत्रम् अत्र प्रमाणम् । अतः 'मार्गः गच्छति' इत्यत्र न दोषः ।

**१०. भवति, भिक्षां देहि ।**

**'भवति, भिक्षां देहि'** इति प्रयोगः साधुः ।

'भवति !' इति भवतीशब्दस्य सम्बोधनरूपम् । 'भवद्योगे न मध्यमः' इति वचनं श्रूयते । एवं स्थिते 'देहि' इति मध्यमपुरुषेण सह भवच्छब्दस्य प्रयोगः कथम् इति सन्देहस्य अस्ति अवसरः । 'त्वम्' इत्येतस्य अध्याहारः करणीयः इति तु एकं समाधानम् ।

माधवीयधातुवृत्तिकारः लिखति -

> *''यदा भवच्छब्दात् सम्बोधनविभक्तिः तदा युष्मदर्थयोगात् मध्यमो भवति - हे भवन्, भवसि इति''* इति ।

उदाहरणदर्शनात् स्पष्टं भवति यत् भवच्छब्दात् यदा सम्बोधनविभक्तिः भवति तदा मध्यमपुरुषप्रयोगः सम्भवति इति । 'भवति, भिक्षां देहि' इत्येतदपि तादृशम् एव ।

११. **'सः नगरं प्रस्थितः'**

**'सः नगरं प्रस्थितः'** इति प्रयोगः साधुः ।

'प्र' इत्युपसर्गपूर्वकः ष्ठाधातुः अकर्मकः । गमनक्रियारम्भमात्रं तस्य अर्थः । *'समवप्रविभ्यः स्थः'* इत्यनेन तस्य आत्मनेपदित्वम् । अतः 'प्रतिष्ठते' इति रूपम् । अकर्मकस्य तस्य कथं सकर्मकत्वेन प्रयोगः

प्रमाणम् ।

बालमनोरमापङ्क्तिः इत्थम् - तथा च वसन् ददर्श इत्यत्र लडादेशः शतृप्रत्ययोः भूतकाले इति सिद्धं भवति । .... वसन् ददर्श इत्यादौ तिङन्तवाच्यदर्शनादिक्रिया प्रधानम् । दर्शनादिकार्थत्वात् वासादिक्रिया तु गुणभूता । अतः प्रधानभूतदर्शनादिक्रियानुसारेण गुणभूतवासादिक्रियावाचिभ्यः एव इह प्रत्ययाः कालान्तरेषु विधीयन्ते इत्यर्थः ।

एतस्मात् -

'कार्यक्रमः निश्चितः भविष्यति' इत्यत्र क्तप्रत्ययः भविष्यदर्थे । एवमेव 'सः आगतवान् अस्ति' 'सः वदन् गतवान्' इत्यादिषु वाक्येषु अपि ऊह्यम् ।

**१५. लोडर्थे लट्**

पाणिनिना वर्तमाने लट् विहितः । प्रार्थनादिषु लोट् विहितः । एषः अंशः सर्वैः ज्ञायते एव । क्वचित् लोडर्थे लटः प्रयोगः अपि दृश्यते । तद्यथा -

◆ किं करोमि, क्व गच्छामि । - अत्र **संप्रश्ने** लोट् प्राप्तः । तथापि लटः प्रयोगः ।

◆ आर्ये व्रजामोऽन्यत इत्यथैनाम्......

- रघु. ६.८२

अत्रापि लोडर्थे लटः प्रयोगः ।

अतः लोडर्थे क्वचित् लटः प्रयोगः सम्भवति इति सिद्धम् ।

**१६. अर्थान्तरे लकाराः**

यथा लोडर्थे लट् दर्शितः तथैव अर्थान्तरे अपि केचन लकाराः प्रयुक्ताः दृश्यन्ते । यथा -

*** लडर्थे लृट् -**

◆ यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति ।

*- स्वप्ननाटकम् - ६.१४*

◆ व्यक्तं दूरे विराटस्य राजधानी भविष्यति ।

*- महाभारतम् - ५.६*

*** लडर्थे लोट् -**

◆ तद्ब्रूत वत्साः किमतः **प्रार्थयध्व**मिहागताः ।

*- कुमारसम्भवः - २.२८*

◆ न भ्रातरो न च पिता नैव त्वं मधुसूदन ।
ये मां विप्रकृतां क्षुद्रै**रुपेक्षध्वं** विशोकवत् ।

*- भारत. वन. १२.२५*

१७. **परिविष्टवान्/परिवेषितवान्** ।

**परिविष्टवान्** इति रूपं साधु, उत **परिवेषितवान्** इति ? उभयम् अपि साधु एव ।

'परिवेवेष्टि' इत्यत्र प्रकृतिः अण्यन्तो धातुः । एतस्मात् क्तवतुप्रत्यये कृते 'परिविष्टवान्' इति । 'परिवेषयति' इत्यत्र प्रकृतिः ण्यन्तो धातुः । एतस्मात् क्तवतुप्रत्यये 'परिवेषितवान्' इति । परिवेवेष्टि-परिवेषयत्योः अर्थभेदः नास्ति इति पूर्वम् उक्तम् । (६. क्रियापद-विभागः -१०) तथापि परिविष्टवान् इति प्रयोगः ज्यायान् । एवमेव **नियुक्तवान्/नियोजितवान्** इत्यत्रापि ज्ञेयम् ।

१८. राजा भटान् **आज्ञप्तवान् / आज्ञापितवान्** ।

**आज्ञापितवान्/आज्ञप्तवान्** इति उभयथा अपि साधु । ज्ञाधातोः णिचि *'वा दान्तशान्त....ज्ञप्ताः' (७.२.२८)* इति सूत्रेण निष्ठायां विकल्पेन इट् । तस्मात् इडभावे 'आज्ञप्तवान्' इति रूपम् । इटि 'आज्ञापितवान्' इति रूपम् ।

किन्तु सर्वत्रापि एवं रूपद्वयं न भवति । इड्विकल्पादिकं ज्ञात्वा प्रयोगः करणीयः ।

१९. **स्वागतं करोति**

'स्वागतं करोति' इत्येतत् किं साधुः प्रयोगः ? तस्य साधुता-साधुतानिर्णयात् पूर्वं 'स्वागत'शब्दस्य अर्थः तावत् चिन्तनीयः । आगतं नाम आगमनम् । शोभनम् आगतम् = स्वागतम् । अतः 'स्वागत'शब्दस्य 'शुभागमनम्' इति अर्थः सिद्धः ।

'गृहस्वामी अतिथेः स्वागतं कृतवान्' इति वाक्यं परिशीलयाम । अत्र स्वागतकर्ता तु गृहस्वामी । किन्तु तस्य आगमनं नास्ति अत्र ।

आगमनं तु अतिथेः । तस्मात् 'अतिथेः आगमनं गृहस्वामी कृतवान्' इत्येषः असङ्गतः अर्थः एतस्मात् वाक्यात् सिध्यति ।
अतः एव प्राचीनानां प्रयोगः 'स्वागतं वदति' इति । स्वागतम् इति शब्दं वदति इति तस्य अर्थः । 'स्वागतम्' इत्येषः स्वागतशब्द-पदार्थकः शब्दः । अतः एव स्वागतम् 'उच्यते', न तु क्रियते । कालिदासादीनां प्रयोगाः अपि अत्र प्रमाणम् ।
तद्यथा -

❖ प्रीतप्रीतिप्रमुखवचनैः **स्वागतं व्याजहार** ।

- मेघदूते

❖ **स्वागतेनोक्तौ** (तौ) विष्टरे सन्निषीदतुः ।

- महा. उद्योग॰ ११३.२

❖ परिघोरुभुजानाह हसन्ती **स्वागतं** कपीन् ।

- भट्टिकाव्यम् - ७. ६३

अत एव सभादिषु अपि 'स्वागतं व्याहरामि' 'स्वागतं व्याहृत्य विरमामि' इत्यादयः एव प्रयोगाः श्रूयन्ते । (व्याहरति = वदति) तस्मात् स्वागतं वचनविषयः, न तु कृतिविषयः इति सिद्धम् ।
एवं तर्हि 'स्वागतं करोति' इत्येषः प्रयोगः किम् असाधुः ? 'न' इति वदन्ति शिष्टाः । 'स्वागतं करोति' इति प्रयोगः साधुः एव । किन्तु अत्र करोतेः कृतिः नार्थः, अपि तु कथनम् अर्थः । प्रसिद्धाः वैयाकरणाः चारुदेवशास्त्रिणः वदन्ति - *'करोतिरत्र व्याहरणे वर्तते'* इति । धातूनाम् अनेकार्थत्वम् अस्ति एव । करोतेः तु शताधिकाः अर्थाः उपवर्ण्यन्ते ।
प्राचीनप्रयोगः यथा -

❖ ततोऽस्याः **स्वागतं कृत्वा** व्यादिश्य च वरासनम् ।

- महाभा॰ शान्ति. - ३२०.१४

❖ शुक्लापाङ्गैः सजलनयनैः **स्वागतीकृत्य** केकाः ।

- पूर्वमेघः - २३

तस्मात् 'स्वागतं करोति' इति प्रयोगः अपि न असाधुः । व्याहरणार्थकत्वं यदा वर्ण्यते तदा एव साधुता । करोतेः 'कृतिः' इति अर्थविवरणे कृते तु असाधुता अस्ति एव ।

२०. **तस्मै** स्वागतं व्याहरति ।

स्वागतशब्दयोगे का विभक्तिः प्रयोक्तव्या ? 'चतुर्थी प्रयोक्तव्या' इति वदन्ति शिष्टाः ।

प्राचीनप्रयोगाः यथा -

❖ तस्मै... **स्वागतं व्याजहार** ।

- पूर्वमेघे - ८

❖ **युगबाहुभ्यः** वः स्वागतम् ।

- कुमारसम्भवे - २.१७

❖ **स्वागतं देव्यै** ।

- मालविकाग्निमित्रम्

मल्लिनाथः लिखति - *'क्रियाग्रहणम् अपि कर्तव्यम् इति सम्प्रदानात् चतुर्थी'* इति । तस्मात् 'भवद्भ्यः सर्वेभ्यः स्वागतं व्याहरामि' इति चतुर्थीयुक्तः प्रयोगः युक्तिसहः भवति ।

स्वागतशब्दयोगे द्वितीया षष्ठी चापि प्राचीनैः प्रयुक्ता दृश्यते । यथा -

❖ षष्ठी - स्वागतम् **आर्यस्य** ।

- मृच्छकटिके - ५

❖ द्वितीया - परिघोरुभुजानाह हसन्ती **स्वागतं कपीन्** ।

- भट्टिः - ७.६३

'स्वागतम् आर्यस्य' इत्यत्र 'आर्यस्य स्वागतं वदामि' इति तात्पर्यम् । आगतम् = आगमनं कस्य इति जिज्ञासायाम् 'आर्यस्य' इति समाधानम् । तस्मात् षष्ठी । अतः आर्यपदस्य षष्ठ्यन्तस्य आगतम् इत्यनेन अन्वयः ।

'सा कपीन् स्वागतम् आह' इत्यत्र तु वदतेः द्विकर्मकत्वात् कपिशब्दस्य द्वितीया । (आह = वदति) तस्मात् षष्ठी द्वितीया च न समर्थनानार्हे । तथापि चतुर्थी प्रशस्यते इति भाति ।

२१. **सुस्वागतम्**

लोके 'सुस्वागतम्' इति प्रयोगः बहुधा दृश्यते । किम् एषः प्रयोगः साधुः ?

सु + सु + आगतम् = सुस्वागतम् ।

'सु' इत्यस्य 'शोभनम्' इत्यर्थः । तस्मात् 'स्वागतम्' इत्यस्य 'शोभनम् आगमनम्' इति अर्थः सिद्ध्यति । पुनः तस्मिन् एव पदे शोभनार्थस्य ज्ञापनाय पुनरपि 'सु' इत्यस्य प्रयोगः न आवश्यकः । समानार्थकं पदद्वयं लोके एकस्मिन् एव वाक्ये कोऽपि न प्रयुङ्क्ते । न हि 'घटं कलशम् आनय' इति कोऽपि वदति । तस्मात् 'स्वागतम्' इत्यनेन एव इष्टसिद्धौ पुनः 'सु' इत्यस्य प्रयोगस्य न आवश्यकता । अतः तं प्रयोगं परिहरेत् शब्द-कोविदः ।

किन्तु 'सुस्वागतम्' इति पदं बहुधा प्रयुक्तं दृश्यते प्राचीनैः । तद्यथा -

❖ श्राद्धकर्मणि 'स्वागतम्' इति श्राद्धकर्तरि उक्ते 'सुस्वागतम्' इति प्रतिवचनं वदति वैदिकः ।

❖ भद्र **सुस्वागतं** तेऽस्तु ।

- काकोलूकीयम् - १५९

❖ **सुस्वागतं** विदधुरुत्स्मयवीक्षितेन ।

- भाग० - १०.७१.३५

❖ स्वागतं ते द्विजश्रेष्ठ ! भूयः **सुस्वागतं** तव ।

- जैमिनीयाश्वमेधपर्व - ६६.३२

❖ पितामहश्चापि समीक्ष्य तं द्विजं ननन्द **सुस्वागत**मित्युवाच ।

- रामा० अरण्य० - ५.४३

एतादृशानां प्रयोगाणां दर्शनात् एतत् वक्तव्यं भवति - ''यद्यपि 'सु'पदस्य द्विरुक्तिः तर्केण न अनुमन्यते, तथापि शिष्टलोकः एतादृशान् प्रयोगान् बहुधा करोतीत्यतः 'सुस्वागत'पदस्य प्रयोगः न दुष्यति'' इति ।

तथापि 'स्वागतम्' इत्येतावता एव स च आशयः अभिव्यक्तः भवति इति तु न विस्मर्तव्यम् ।

**२२. सौष्ठवेच्छुभिः यावच्छक्यं परिहरणीयः विशेषणपूर्वपदः कर्मधारयः ।**

❖ **उत्तमबालकः समीचीनवाक्यम्** उक्तवान् ।

**'उत्तमः बालकः' 'समीचीनं पुस्तकम्'** इति उभयत्रापि व्यस्तप्रयोगः शिष्टसम्मतः ।

'उत्तमबालकः' इत्यत्र विशेषणपूर्वपदः कर्मधारयः । यद्यपि अयं समासः शास्त्रसम्मतः एव, तथापि काव्येषु एतस्य उपयोगः अल्पशः एव कृतः दृश्यते कालिदासवाल्मीकिव्यासप्रभृतिभिः । अत एव शिष्टाः वदन्ति - *''शूररावणः, धीररामः इत्यादयः समस्ताः प्रयोगाः यावच्छक्यं परिहरणीयाः । शूरः रावणः, धीरः रामः इत्यादयः व्यस्ताः प्रयोगाः एव आश्रयणीयाः''* इति ।

[ राळ्ळपल्लि-अनन्तकृष्णशर्मवर्येण उक्तमिदं वचनम् । 'दीवटिगेगळु'नामकात् पुस्तकात् एतत् उद्घृतम् । पु - १३५]

अतः व्यवहारे अपि एतादृशस्य समासस्य परिहारः एव करणीयः यावच्छक्यं भाषासौष्ठवाकांक्षिभिः । विशेषणपूर्वपदकर्मधारये कृते दोषः तु न । सौष्ठवस्य हानिः । भाषासौष्ठवं काव्यमात्रस्य विषयः न । व्यवहारस्यापि विषयः सः ।

## २३. अव्युत्पन्नानां संज्ञापदानां विभक्तियोजनम् ।

❖ **गुण्डप्पः अप्पय्यम्** अवदत् ।

अत्र 'गुण्डप्प'शब्दः 'अप्पय्य'शब्दो वा प्रकृतिप्रत्ययविवेकयुक्तः न । तौ उभौ अपि प्रादेशिकभाषीयौ संज्ञाशब्दौ । तयोः तादृशानां च विभक्तियोजनं किं युज्यते इति उदेति कश्चन प्रश्नः ।

*'अपदं न प्रयुञ्जीत'* इति शास्त्रोक्तिः । पदं च सुबन्तं तिङन्तं वा । गुण्डप्पादीनां तु असंस्कृतत्वात् न प्रातिपदिकसंज्ञा । तस्मात् तादृशेभ्यः शब्देभ्यः सुबुत्पत्तिः न । अतः तेषां प्रयोगानर्हत्वम्' इति केचन अभिप्रयन्ति ।

व्याकरणे एतद्विषये विशेषचर्चा कृता दृश्यते । एतं विषयं विस्तरेण ज्ञातुम् इच्छवः तान् व्याकरणग्रन्थान् पठेयुः । 'इदमित्थम्' इत्येतस्मिन् पुस्तके विद्यमानान् लेखान् वा पठेयुः ।

एतद्विषये अयं निर्णयः -

- संज्ञाशब्दाः विभक्तियोजनम् अर्हन्ति । 'यर्वाणः तर्वाणः' इत्यादि-भाष्यप्रयोगात्, कल्हणः, जल्हणः, भट्टोजिः, अप्पय्यः इत्यादि-शिष्टप्रयोगात् च संज्ञाशब्दानां विभक्तियोजनं शास्त्रसम्मतम् एव इति निर्णीयते ।

  तस्मात् व्यक्ति-वस्तु-ग्रामादीनां नामानि विभक्तियोजनम् अर्हन्ति

एव ।

☛ यत्र व्याकरणसंस्कृतः साधुशब्दः भवति तत्र तदर्थप्रतिपादनेच्छया असंस्कृतः असाधुशब्दः (अपशब्दः) न प्रयोक्तव्यः । यथा - व्युत्पन्ने 'विद्यालय'शब्दे सति 'स्कूलः' इति न प्रयोक्तव्यम् । 'कपाटिका'शब्दे सति 'कबोर्डः' इति न प्रयोक्तव्यम् । 'उत्पीठिका'-शब्दे सति 'टेबल्लः' 'टेबल्लस्य' इत्यादयः न प्रयोक्तव्याः । एवमेव इतरत्रापि ।

अयमत्र सङ्ग्रहः -

- ❑ अन्यभाषीयाः संज्ञाशब्दाः संस्कृतभाषायां विभक्तियोजनम् अर्हन्ति । यथा - गुण्डप्पः, बेङ्गलूरुः, इग्लेण्डः इत्यादयः ।
- ❑ व्युत्पन्ने संस्कृतशब्दे सति तदर्थद्योतनाय असंस्कृतः शब्दः न प्रयोक्तव्यः । यथा - प्रोफेसरः, टेबलः, टैप्रैटरः इत्यादयः । ते तु असाधवः एव ।
- ❑ असंस्कृतशब्दस्य अन्तिमे भागे संस्कृतशब्दस्य योजनात् अपि सरलः व्यवहारः कर्तुं शक्यः । कानिचन उदाहरणानि यथा -
  - ❖ कार्यानम्, जीप्यानम्, रैल्यानम्
  - ❖ टोमेटोशाकः, अनानसफलम्, नीम्दन्तफेनः
  - ❖ हेगडेवर्यः, म्यान्मर्देशः, न्यूजर्सीनगरम्

## २४. सङ्केते साधुत्वक्रमः

वयं यदा कस्मैचित् पत्रं लिखामः तदा तत्र सङ्केतम् (Address) अपि लिखामः । स च इत्थं भवति -

रामचन्द्रशर्मा
'आशीर्वादः' राममन्दिरमार्गः, द्वितीयः मुख्यमार्गः
सुभाश्चन्द्रनगरम्, वाराणसी (उ.प्र.)

इति । अत्र सर्वाणि प्रथमान्तानि पदानि दृश्यन्ते । समानविभक्तिकत्वे विशेषणविशेष्यभावः घटते । सङ्केतस्थानां प्रथमान्तपदानां न विशेषण-विशेष्यभावः इति तु स्फुटम् । एवं तर्हि प्रथमान्तानाम् एकत्र लेखनं कथं सङ्गच्छते ? कथम् एतेषां साधुता ?

वैयाकरणाः वदन्ति - *''तत्र इत्यादीनि पदानि अध्याहर्तव्यानि । सप्तम्याद्यन्तत्वेन विपरिणामः वा चिन्तनीयः''* इति ।

सङ्केतलेखनक्रमः तु आधुनिकः । किन्तु प्रथमान्तपदानाम् एकत्र लेखनं तु प्राचीनम् एव । तद्यथा - रामायणम्, प्रथमः काण्डः, प्रथमोऽध्यायः इत्यादयः । एवं तु सर्वत्र लिख्यते एव आ प्राचीनकालात् । तत्र साधुत्वं कथम् ? 'रामायणम्, तत्र प्रथमः काण्डः, तत्र प्रथमः अध्यायः' इति खलु विवरणम् ? अथवा 'रामायणे प्रथमे काण्डे प्रथमः अध्यायः' इति वा वक्तव्यम् । तदा एव साधुत्वम् । तुल्यन्यायेन सङ्केते अपि अयमेव क्रमः अङ्गीक्रियते । अतः सङ्केते सर्वाणि पदानि प्रथमान्तत्वेन यत् लिख्यन्ते तत् न दोषाय ।

**२५. श्रीपदपूर्वको नामनिर्देशः**

देवानां, गुरूणां, क्षेत्राणां, सामान्यानां चापि नाम्नः लेखनसमये उच्चारणसमये वा 'श्री'पदं प्रयुज्यते आदौ भारतीयपरम्परायाम् । 'श्री'पदस्य लक्ष्मीकान्तिसम्पत्त्यादयः बहवः अर्थाः सन्ति । गौरवार्हाणां नाम्नः आदौ श्रीपदं प्रयुञ्जीत इति वदन्ति विज्ञाः ।

'कल्पद्रुमे' विषयेऽस्मिन् उच्यते -

*''देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् ।*
*सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत् ।।* इति ।

*राघवभट्टकृतप्रयोगदर्शनात् स्वर्गगामित्वादिना सिद्धोऽधिकारो येषां नराणाम् इत्यनेन जीवतां श्रीशब्दादित्वं नाम्नः । न तु मृतानां तथेति शिष्टाचारः इति संस्कारतत्त्वम्''* इति ।

ललितासहस्रनामस्तोत्रस्य आदो 'श्रीमाता श्रीमहाराज्ञी श्रीमत्-सिंहासनेश्वरी' इति प्रयोगः दृश्यते । तद्विषये भास्कररायप्रणीते सौभाग्यभास्करभाष्ये लिख्यते - *'अथवा अभियुक्तानां नाम श्रीपदपूर्वं प्रयुञ्जीत, श्रीचक्र-श्रीशैल-श्रीविधा-श्रीफलादिवत्' इत्यभियुक्तप्रसिद्धेः'* इति ।

वैयाकरणभूषणसारस्य मङ्गलपद्यम् अस्ति - 'श्रीलक्ष्मीरमणं नौमि..'' इति । तत्र श्रीपदसमासविषये चर्चा क्रियते । तस्याः तात्पर्यम् (एतत्प्रकरणसम्बद्धम्) इत्यं भवितुम् अर्हति -

(१) श्रीः नाम लोकोत्तरा कान्तिः । श्रीसहितः लक्ष्मीरमणः श्रीलक्ष्मीरमणः इति मध्यमपदलोपी समासः ।

(२) अथवा श्रीशब्दस्य श्रीमति लक्षणा । श्रीरिति लक्ष्मीरमणस्य विशेषणम् ।

एवं च सिद्धं यत् व्यक्तिनाम्नः क्षेत्रनाम्नः वा आदौ श्रीपदयोजनं पारम्परिकं शास्त्रसम्मतं च इति । 'श्रीपदेन समासः' इति तत्र वक्तव्यम् । तथा सति 'श्री उमेशशर्मा' इत्यादिषु सन्ध्यकरणं दोषाय स्यात् । सन्धौ कृते विरूपतया नाम्नः ग्रहणं स्यात् । अतः अजादेः शब्दस्य आदौ 'श्रीमान्' इत्यस्य पदस्य प्रयोगः एव औचित्यम् आवहेत् इति भाति ।

## २६. नाम्नः एकदेशस्य ग्रहणम्

लोके कानिचन नामानि भवन्ति दीर्घाणि - अजितकुमारः, रामचन्द्रः, सर्वमङ्गला इत्यादीनि । एतन्नामवतां सम्बोधनावसरे प्रायः नाम्नः एकदेशस्य ग्रहणं भवति । 'अजित' 'कुमार' 'राम' 'मङ्गले' इत्येवमादीनि भवन्ति सम्बोधनरूपाणि ।

एषः क्रमः वस्तुतः अस्ति शास्त्रसम्मतः एव । वार्तिकं वदति - *'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वक्तव्यः'* इति । 'देवदत्तः दत्तः । देवः । सत्यभामा । भामा । सत्या' इत्यादीनि तस्य उदाहरणानि । भाष्ये अपि पस्पशाह्निकादिषु अयं विषयः प्रस्तुतः दृश्यते । अतः नामैकदेशग्रहणं न दोषाय ।

कनादिप्रत्ययाः अपि अत्र प्रयोक्तुं शक्याः । विस्तरस्तु कौमुद्यां द्रष्टव्यः । (अनुकम्पायाम् - ५.३.७६ इत्यादिषु)

कृष्णः इति यस्य नाम भवति सः एव क्वचित् निर्दिश्येत - 'कण्णः' 'किट्टिः' 'किशनः' इत्यादिभिः प्रकारान्तरं प्राप्तवद्भिः नामभिः । एतादृशेषु प्रसङ्गेषु तेषां संज्ञापदानाम् अव्युत्पन्नत्वम् अङ्गीकरणीयं भवेत् ।

## ११. एकादशोऽध्यायः

# भ्रमजनकाः प्राचीनाः प्रयोगाः

अस्माभिः लोके तादृशाः अपि प्रयोगाः दृश्यन्ते, येषु शब्दाशुद्धिः स्फुटा । तान् अनुकुर्वन्तः यदि वयं तेषां शब्दानाम् उपयोगं कुर्याम तर्हि दोषभागिनः स्याम ।

एते प्रयोगाः उच्यन्ते **आर्षप्रयोगाः** इति **महाकविप्रयोगाः** इति वा । यद्यपि ते व्याकरणनियमानुगुणाः न भवन्ति, तथापि तत्र साधुता तु अस्ति एव । तेषाम् अनुकरणं कुर्वन्तः वयम् अपि यदि प्रयोगं कुर्याम तर्हि अस्मत्प्रयोगाणाम् असाधुता ।

'आर्षप्रयोगः' 'महाकविप्रयोगः' वा (व्याकरणाननुगुणः) यदि दृश्यते तर्हि तत्प्रयोक्तॄणां विषये अल्पा अपि अनादरबुद्धिः न प्रकाशनीया । आदरपात्राणि ते । तादृशानां प्रयोगाणां पठनतः नास्माकं कापि हानिः । *'यू स्त्र्याख्यौ नदी' इति सूत्रे महाभाष्ये* उद्योतकारः नागेशः वदति - *''ऋषीणां तपोमाहात्म्याच्च तदुच्चारयितॄणाम् अस्माकं न प्रत्यवायः''* इति । तान् एव प्रयोगान् प्रमाणभूतान् मत्वा तादृशाः एव प्रयोगाः अस्माभिः अपि न करणीयाः ।

अधः केचन आर्ष-महाकविप्रयोगाः दर्श्यन्ते । तत्प्रयोगकर्तॄणां विषये तु महान् आदरः उह्यते एव । 'एतान् प्रयोगान् अनुकुर्वन्तः वयं दोषभागिनः न स्याम' इति उद्देशेन एते अत्र प्रदर्श्यन्ते । अस्मिन् अंशे दोषः अस्ति इति न ज्ञायते चेत् दोषयुक्तस्यापि अंशस्य अनुकरणं भवितुम् अर्हति कदाचित् । अतः प्रसिद्धाः केचन आर्ष-महाकवि-प्रयोगाः अत्र दर्श्यन्ते ।

०१. रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय **सीतायाः पतये** नमः ।।

- प्रसिद्धः श्लोकः कश्चन

**'सीतायाः पत्ये'** इति, **'सीतापतये'** इति वा वक्तव्यम् ।

घिसंज्ञायां सत्येव 'पतये' इति रूपं भवति । पतिशब्दस्य घिसंज्ञा तु *'पतिः समास एव' (१.४.८)* इति सूत्रेण समासे एव । अतः 'सीतापतये' इति रूपं साधु । यदि समासः न क्रियते तर्हि पत्ये इति रूपम् ।

यद्यपि 'सीतायाः पतये नमः' इति मनोरमायां कथञ्चित् समर्थितम्, सा तु अगतिकगतिः ।

०२. मनो न रमते स्त्रीणां जराजीर्णेन्द्रिये **पतौ** ।

**'पत्यौ'** इति प्रयोक्तव्यम् । पतिशब्दस्य सप्तमीविभक्तौ एकवचने 'पत्यौ' इति रूपम् । 'पतौ' इति तु घिसंज्ञायां सत्याम् एव । पतिशब्दस्य घिसंज्ञा भवति समासे एव । पतौ इत्यत्र न समासः । अतः 'पतौ' इति रूपं दोषाय ।

यदि श्लोकस्य साधुत्वं कथञ्चित् कल्पनीयं तर्हि 'जराजीर्णेन्द्रियेऽपतौ' इति पाठः वक्तव्यः । 'अपतौ' इति तु साधु रूपम् । कुत्सितः पतिः अपतिः । अप्राशस्त्ये अत्र नञ् । नञ्समासत्वात् घिसंज्ञा प्राप्ता । तदा 'अपतौ' इति रूपम् ।

'नष्टे मृते प्रव्रजिते क्लीबे च पतिते **पतौ**' इत्यत्रापि 'पत्यौ' इति प्रयोक्तव्ये 'पतौ' इति प्रयोगः कृतः दृश्यते ।

०३. पिता रत्नाकरो यस्य लक्ष्मीर्यस्य **सहोदरी** ।
शङ्खो रोदिति भिक्षार्थी फलं भाग्यानुसारतः ।।

- (वृद्ध)चाणक्यशतकम्

'सहोदरी' इति रूपं न सिध्यति । **'सहोदरा'** इत्येव शुद्धम् । *'सहनञ्विद्यमानपूर्वाच्च' (४.१.५७)* इति सूत्रेण, *'नासिकोदर...'* इति सूत्रेण विहितस्य ङीषः निषेधः क्रियते । तस्मात् न ईकारान्तता, अपि तु आकारान्तता एव ।

०४. त्यजेन्**मायाविनं** मित्रं धनं प्राणहरं त्यजेत् ।

**'मायावि मित्रम्'** इति प्रयोक्तव्यम् ।

सुहृत्पर्यायः मित्रशब्दः नपुंसके । तस्य विशेषणं 'मायावि'शब्दः अपि नपुंसके एव स्यात् । तस्य द्वितीयैकवचनान्तं रूपम् अपि 'मायावि' इत्येव । *'स्वमोर्नपुंसकात्' (७.१.२३)* इति सूत्रेण अमः लोपे *'नलोपः प्रातिपदिकान्तस्य' (८.२.७)* इत्यनेन नकारलोपे 'मायावि' इति रूपम् । 'मायाविनम्' इति तु पुँल्लिङ्गे द्वितीयैकवचनान्तम् ।

०५. **नातन्त्रीर्वि**द्यते वीणा नाचक्रो विद्यते रथः ।

- रामायणे

**'अतन्त्रीका'** इति प्रयोक्तव्यम् ।

अविद्यमानाः तन्त्र्यः यस्याः सा इति विग्रहः । *'नद्यृतश्च'* *(५.४.१५३)* इति सूत्रेण कप्प्रत्ययः । कपः निषेधस्तु *'नाडीतन्त्र्योः स्वाङ्गे'* *(५.४.१५९)* इति सूत्रेण स्वाङ्गे एव विहितः । यथा - बहुतन्त्रीः ग्रीवा । (स्वाङ्गं नाम काचित् संज्ञा । प्रायः शरीरावयवः भवति ।) 'अतन्त्रीका वीणा' इत्यत्र स्वाङ्गसंज्ञा नास्ति । अतः कप्प्रत्ययः नित्यः । तस्मात् 'अतन्त्रीका' इत्येव रूपम् ।

तन्त्रीशब्दविषये किञ्चित् ज्ञातव्यम् अस्ति । सः न ङ्यन्तः । ईप्रत्ययान्तः सः । *'अवितृस्तृतन्त्रिभ्यः ईः'* इति उणादिसूत्रेण ईः । अतः सुलोपः न । (सुलोपस्तु *'हल्ङ्याब्भ्यो .....'* *(६.१.६८)* इति सूत्रेण) तस्मात् 'तन्त्रीः' इति प्रथमैकवचनान्तं रूपम् । एते सुलोपरहिताः स्त्रीलिङ्गशब्दाः सप्त सन्ति । तथा हि श्लोकः -

*अवीतन्त्रीतरीलक्ष्मीधीह्रीश्रीणमुणादिषु ।*
*सप्तस्त्रीलिङ्गशब्दानां न सुलोपः कदाचन ।।* इति ।

एवं च 'तन्त्री'शब्दात् प्रथमैकवचने विसर्गस्य श्रवणम् । (तन्त्रीः इति) किन्तु क्वचित् विसर्गरहितम् अपि रूपं श्रूयते । तदा तु *'कृदिकारादक्तिनः'* इति वार्तिकेन पाक्षिकः ङीष्प्रत्ययः । ङीषि, ङ्यन्तत्वात् सुलोपः । तदा 'तन्त्री' इति विसर्गरहितं रूपम् अपि । किन्तु लोके विसर्गसहितस्यैव रूपस्य प्रसिद्धिः । अतः 'तन्त्रीः' इति प्रयोगः एव श्रेयसे ।

एते विचाराः कौमुद्याः बालमनोरमाटीकायां चर्चिता सन्ति ।

०६. कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी ।
**पञ्चभर्त्री** न पाञ्चाली यो जानाति स पण्डितः ।।

– प्रहेलिका काचित्

**'पञ्चभर्तृका'** इति प्रयोक्तव्यम् ।

पञ्च भर्तारः यस्याः सा इति विग्रहः । ऋकारान्तं पदं बहुव्रीहिसमासस्य अन्ते अस्ति । तस्मात् *'नद्यृतश्च'* *(५.४.१५३)* इति सूत्रेण कप्प्रत्ययः नित्यं प्राप्यते । तस्मात् 'पञ्चभर्तृका' इति रूपं स्यात् ।

०७. सा तिथिस्त**दहोरात्रं** स योगः स च चन्द्रमाः ।

लग्नं तदेव विख्यातं यत्र संस्मर्यते हरिः ।।

- भागवतम्

**'सः अहोरात्रः'** इति प्रयोक्तव्यम् ।

अहश्च रात्रिश्च इति विग्रहे अहोरात्रशब्दे सिद्धे *'रात्राह्नाहाः पुंसि'* (२.४.२९) इति सूत्रेण पुंस्त्वम् । ततः 'अहोरात्रः' इत्येव रूपम् । तद्विशेषणस्य तच्छब्दस्यापि पुंस्त्वं स्यात् ।

०८. न **विश्वसेद**मित्रस्य मित्रस्यापि न **विश्वसेत्** ।
कदाचित् कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत् ।।

- शार्ङ्गधरपद्धतिः

**'विश्वस्यात्'** इति प्रयोक्तव्यम् ।

'विश्वसिति' इत्यत्र 'वि' इत्युपसर्गपूर्वकः प्राणनार्थकः श्वसधातुः द्वितीयगणीयः । तस्मात् विधौ लिङि 'विश्वस्यात्' इति रूपम् । 'विश्वसेत्' इति रूपं न युक्तम् । 'गणकार्यमनित्यम्' इति कथञ्चित् साधितमिति तु अन्यत् । यथा - अद्यात् ।

०९. दृष्टिपूतं **न्यसेत्** पादं वस्त्रपूतं पिबेज्जलम् ।
शास्त्रपूतं वदेद्वाणीं मनःपूतं समाचरेत् ।।

- मनुस्मृतिः - ६.४६

**'न्यस्येत्'** इति प्रयोक्तव्यम् ।

'नि' इति उपसर्गेण युक्तः क्षेपणार्थकः असुधातुः अत्र । स च दिवादौ अस्ति । विधिलिङः सार्वधातुकत्वात् विकरणप्रत्ययः श्यन् स्यादेव । तदा च 'न्यस्येत्' इति रूपम् ।

१०. सन्ध्यायां न **स्वपेत्** राजन्... - महा॰ अनु॰ १०४.११८

**'सुप्यात्'** इति प्रयोक्तव्यम् । शयनार्थकः ष्वप्धातुः द्वितीयगणीयः । विधौ लिङि 'सुप्यात्' इति रूपम् । 'स्वपेत्' इति तु असाधु रूपम् ।

११. पापोऽहं पापकर्माहं पापात्मा पापसम्भवः ।
**त्राहि** मां कृपया देव शरणागतवत्सल ।।

**'त्रायस्व'** इति प्रयोक्तव्यम् ।

पालनार्थकः त्रैङ्धातुः भ्वादौ पठितः । धातोः ङित्वात् आत्मनेपदित्वम् *'अनुदात्तङितः आत्मनेपदम्'* (१.३.१२) इति सूत्रेण । तस्मात् लोटि मध्यमपुरुषैकवचने 'त्रायस्व' इति रूपम् ।

एवमेव 'त्राहि मामुरुदुःखितम्' 'त्राहि मां हि तथागतम्' इत्यादिषु अपि ज्ञेयम् ।

दुर्घटवृतत्तिकारः शरणदेवः तु - 'त्रायत इति त्राः । *अन्येभ्योऽपि दृश्यते* (३.२.१७८) इति विचि आचारे क्विपि धातुत्वे लोटि रूपम् । मां त्राहि = त्रातेवाचर इत्यर्थः' इति समाधानं वदति । स्थितस्य गतेः चिन्तनम् एतत् ।

१२. परीक्षका यत्र न सन्ति देशे
नार्हन्ति रत्नानि समुद्रजानि ।
आभीरदेशे किल चन्द्रकान्तं
त्रिभिर्वराटै**विपणन्ति** गोपाः ।।

- पञ्चतन्त्रम् - १.८४.३

**'विपणन्ते'** इति प्रयोक्तव्यम् ।

अत्र धातुः तु - 'पण - व्यवहारे स्तुतौ च' इति । स च आत्मनेपदी । अतः 'पणते' इत्येव रूपम् । 'वि' इत्यस्य उपसर्गस्य योगे परस्मैपदित्वं तु नास्ति ।

१३. अनुक्तमप्यू**हति** पण्डितो जनः

- हितोपदेशः

**'ऊहते'** इति प्रयोक्तव्यम् ।

वितर्कार्थकः ऊहधातुः भ्वादौ पठितः । स च आत्मनेपदी । अतः 'ऊहते' इति रूपम् ।

१४. नाकस्माच्छाण्डिली माता **विक्रीणाति** तिलैस्तिलान् ।
लुञ्छितानितरैर्येन हेतुरत्र भविष्यति ।।

- पञ्चतन्त्रम्, मित्रसम्प्राप्तिः - ७१

**'विक्रीणीते'** इति प्रयोक्तव्यम् ।

द्रव्यविनिमयार्थकः क्रीञ्धातुः यदा 'वि' इति उपसर्गेण युक्तः भवति तदा *'परिव्यवेभ्यः क्रियः'* (१.३.१८) इति सूत्रेण तस्य आत्मनेपदित्वम् । अतः 'विक्रीणीते' इति रूपम् । केवलः क्रीञ्धातुः तु उभयपदी । 'वि'प्रभृतीनाम् उपसर्गाणां योगे तु नित्यम् आत्मनेपदी ।

१५. स महीमखिलां **भुञ्जन्** राजर्षिप्रवरः पुरा ।
वर्णानां सङ्करं चक्रे कामोपहतचेतनः ।।

- मनु. - ९.६७

**'भुञ्जानः'** इति प्रयोक्तव्यम् ।

भुजधातुः पालनार्थकः अभ्यवहारार्थकः च । पालनार्थकः सः परस्मैपदी । अभ्यवहारार्थे भोगे वा तु आत्मनेपदी ।

एतस्मिन् श्लोके 'राजा महीं पालितवान्' इति नार्थः । राज्ञः भोगः एव अत्र प्रतीयते । 'वर्णसाङ्कर्यं जातम्' इति कथनम् अत्र प्रमाणम् । अतः भोगार्थे आत्मनेपदित्वम् एव । तस्मात् 'भुञ्जानः' इत्येव प्रयोक्तव्यम् । (कुल्लूकभट्टस्तु भुञ्जन् = पालयन् इति व्याचख्यौ)

१६. यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।
उभौ तौ सुखमेधेते **क्लिश्यत्यन्**तरितो जनः ।।

**'क्लिश्यते'** इति प्रयोक्तव्यम् ।

उपतापार्थकः क्लिशधातुः दिवादिः । स च आत्मनेपदी । अतः 'क्लिश्यते' इति प्रयोक्तव्यम् । क्लिशधातुः परस्मैपदी अपि अस्ति । किन्तु सः क्र्यादिगणीयः । 'क्लिश्नाति' इति तस्य रूपम् ।

१७. यथा पृथिव्यां बीजानि रत्नानि निधयो यथा ।
एवमात्मनि कर्माणि तिष्ठन्ति **प्रसवन्ति** च ।।

**'प्रसूयन्ते'** इति प्रयोक्तव्यम् ।

'षु'धातुः भ्वादिः कश्चन अस्ति, यस्य च 'सवति सवतः सवन्ति' इति रूपाणि भवन्ति । षु-प्रसवैश्वर्ययोः इति धातुगणे पाठः । प्रसवः नाम अत्र गर्भविमोचनम् इति नार्थः, अपि तु अभ्यनुज्ञानम् इत्यर्थः । एतद्विषये बालमनोरमापङ्क्तिः इत्थम् - *''अत्र प्रसवशब्दस्य गर्भविमोचनपरत्वभ्रमं वारयति - प्रसवोऽभ्यनुज्ञानमिति''* इति । अभ्यनुज्ञानम् इति अर्थः अत्र न अभिप्रेतः । उत्पादनार्थकत्वम् इह अभिप्रेतम् । अतः प्राणिप्रसवार्थकः षूङ्धातुः अत्र प्रयोक्तव्यः । सः दिवादिः । ङित्त्वात् तस्य आत्मनेपदित्वम् । तस्मात् 'प्रसूयन्ते' इति रूपम् ।

१८. त्याज्यं न धैर्यं विधुरेऽपि काले
धैर्यात्कदाचिद्गतिमाप्नुयात्सः ।

यथा समुद्रेऽपि च पोतभङ्गे
सांयान्त्रिको वाञ्छति **तर्तुमेव** ।।

**'तरितुम्'** इति **'तरीतुम्'** इति वा प्रयोक्तव्यम् ।

'तॄ'धातुः सेट् । *'वॄतो वा'* (७.२.३८) इति सूत्रेण इटः विकल्पेन दीर्घः । अतः तरितुम्, तरीतुम् इति रूपद्वयम् । इड्रहितं तुमुन्नन्तरूपं तु नास्ति ।

१९. न ह्येवं रमणीयेषु शाद्वलेषु तया सह ।
**रमतो** मे भवेच्चिन्ता न स्पृहान्येषु वा भवेत् ।।

- रामायणम्, किष्किन्धा. - १.९७

**'रममाणस्य'** इति प्रयोक्तव्यम् ।

क्रीडार्थकः 'रम'धातुः आत्मनेपदी । आत्मनेपदिनः शानच्प्रत्ययः । शानचि च 'रममाणः' इति रूपम् । तस्य षष्ठीविभक्त्यन्तं रूपं 'रममाणस्य' इति ।

२०. न च सङ्कुचितः पन्था येन वाली हतो गतः ।
समये तिष्ठ सुग्रीव मा वालिपथ**मन्वगाः** ।।

- रामायणम्, किष्किन्धा. - ३४.१८

**'अनुगाः'** इति प्रयोक्तव्यम् ।

माङ्योगे अडागमः निषिध्यते - *'न माङ्योगे'* (६.४.७४) इति सूत्रेण । अडागमाभावे 'अनुगाः' इति रूपम् । अडागमे सत्येव 'अन्वगाः' इति रूपं भवति । माङ्योगे अडागमसहितं रूपं न भवति ।

२१. ते तु सर्वे हरिवराः पृथिव्यां सर्ववानरान् ।
**सञ्चोदयित्वा** त्वरिता यूथानां जग्मुरग्रतः ।।

- रामायणम्० किष्किन्धा. ३७.३३

**'सञ्चोद्य'** इति प्रयोक्तव्यम् ।

'सम्' इति उपसर्गः अत्र । उपसर्गयोगे क्त्वाप्रत्ययस्य ल्यबादेशः *'समासेऽनञ्पूर्वे क्त्वो ल्यप्'* (७.१.३७) इति सूत्रेण । ल्यपि च 'सञ्चोद्य' इति रूपम् ।

२२. तेनाभिघातरभसस्य...
तं **पातयां** प्रथ**ममास** पपात पश्चात् ।।

- रघुवंशः - ९.६१

**'तं पातयामास'** इति प्रयोक्तव्यम् ।

'पत्ऌ'धातोः ण्यन्तात् लिटि प्रथमैकवचने 'पातयामास' इति रूपम् । अत्र आसधातोः (आस) अनुप्रयोगः अस्ति । अनुप्रयोगः नाम व्यवधानं विना प्रयोगः । एतस्मिन् श्लोके तु पातयाम् + आस इत्यनयोः मध्ये प्रथमम् इति पदं प्रयुक्तम् । एतत् तु शास्त्रविरुद्धम् । एतद्विषये मल्लिनाथः लिखति -

*''कृञ्चानुप्रयुज्यते लिटि' इत्यत्र अनुशब्दस्य व्यवहितविपर्यस्तनिवृत्त्यर्थत्वात् 'पातयां प्रथममास' इति अपप्रयोगः इति पाणिनीयाः । यथाह - वार्तिककारः - 'विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं च' इति''* इति ।

अतः 'पातयामास' इत्येव प्रयोक्तव्यम् । मध्ये अन्यः शब्दः न प्रयोक्तव्यः ।

२३. वारुणीमदविशङ्कमथा**विश्चक्षुषोऽभवद**साविव रागः ।

**'आविरभवत्'** इति प्रयोक्तव्यम् ।

आविश्शब्दः ऊर्यादिषु पठितः । *'ऊर्यादिच्विडाचश्च' (१.४.६१)* इति सूत्रेण ऊर्यादीनां गतिसंज्ञा । गतिसंज्ञायुक्ताः धातोः पूर्वम् एव प्रयोक्तव्याः इति वदति *'ते प्राग्धातोः' (१.४.८०)* इति सूत्रम् । अतः गतिसंज्ञायुक्तः आविश्शब्दः धातोः प्राक् एव प्रयोक्तव्यः । मध्ये अन्यशब्दस्य स्थितिः न सह्यते । प्रकृतश्लोके 'आविः चक्षुषः अभवत्' इति प्रयुक्तम् । 'चक्षुषः' इत्यस्य मध्ये स्थितिः अस्ति । एवं न स्यात् । 'आविरभवत्' इति प्रयोक्तव्यम् ।

मल्लिनाथः एतद्विषये वदति - *'आविर्भुवोः व्यवधानं कविस्वातन्त्र्यात्'* इति । तत्त्वबोधिनीकारः तु *'ते प्रागधातोः'*इत्यस्य सूत्रस्य पक्षान्तरम् आश्रित्य कथञ्चित् समाधानं वदति ।

२४. वर्धनं वाथ **सम्मानं** खलानां प्रीतये कुतः ।
फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ।।

- हितोपदेशः - २.१३९

**'सम्मानः'** इति प्रयोक्तव्यम् ।

सम्मानशब्दः पुंसि अस्ति । नपुंसकत्वं नास्ति तस्य ।

२५. तान् सावित्रीपरिभ्रष्टान् **व्रात्यानिति** विनिर्दिशेत् ।

- मनुस्मृतिः - १०.२०

**'व्रात्याः इति'** इति प्रयोक्तव्यम् ।

अत्र 'इति' शब्दः कर्मार्थं बोधयति । इतिशब्देन कर्मार्थे उक्ते पुनः कर्मार्थबोधनार्थम् अन्यस्य विभक्तिप्रत्ययस्य उपयोगः न करणीयः । *'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः'* इति हि वामनवचनम् । अतः अत्र व्रात्यः कर्म । तद्गतं कर्मत्वम् इतिशब्देन बोधितम् इति कारणतः व्रात्यशब्दोत्तरं न द्वितीया । प्रातिपदिकार्थे प्रथमा एव ।

२६. हरीतकीं भुंक्ष्व राजन् **मातेव** हितकारिणीम् ।

*- बालमनोरमायाम् उदाहृतम् ('सुपो धातु.... 'सूत्रे)*

**'मातरमिव'** इति प्रयोक्तव्यम् ।

'हरीतकी' अत्र उपमेयम् । 'माता' उपमानम् । उपमानोपमेययोः समाना विभक्तिः स्यादिति नियमः । हरीतकीशब्दात् द्वितीया अस्ति अत्र । अतः मातृशब्दादपि द्वितीया एव उचिता । अतः 'मातरम् इव' इति प्रयोगः युक्तः ।

२७. स **मृण्मये** वीतहिरण्मयत्वात् .... आतिथेयः ।।

- रघुवंशः - ५.२

- **मृण्मये** दहनाच्छुद्धिः - पराशरस्मृतिः - ७.२९
- पुनः पाकेन **मृन्मयम्** - मनु. - ५.१२
- पुनः पाकेन **मृण्मयम्** - वसिष्ठस्मृतिः - ३.५५
- **मृण्मयं** भाजनं सर्वम् - शङ्खस्मृतिः - १६.१

**'मृन्मये'** इति प्रयोक्तव्यम् ।

मृद् + मय इति स्थिते *'प्रत्यये भाषायां नित्यम्'* इति वार्तिकेन दकारस्य नकारः । एतच्च वार्तिकम् अष्टमाध्यायस्य चतुर्थे पादे अन्ते अस्ति । णत्वविधायकसूत्रं प्रति तस्य असिद्धत्वात् णत्वम् अत्र न प्रवर्तते । तस्मात् 'मृन्मयम्' इति रूपम् ।

२८. तस्य पाण्डुवदनाल्पभूषणा........

............ **कामयानसमवस्थया** तुलाम्

- रघुवंशे - १९.५०

**'कामयमानः'** इति प्रयोक्तव्यम् । कान्त्यर्थकः कमुधातुः आत्मनेपदी, *'कमेर्णिङ्'* (३.१.३०) इति सूत्रेण स्वार्थे णिङः विधानात् । तस्य ङित्वात् तङ् स्यात् । अतः लटि 'कामयते' इति रूपम् । अदन्ताङ्गत्वात् *'आने मुक्'* (७.१.९२) इति सूत्रेण शानचि मुगागमः स्यात् । मुगागमे सति 'कामयमानः' इत रूपम् । कविना तु 'कामयानः' इति मुगागमरहितं रूपं प्रयुक्तम् । तत् तु दोषाय । शाकुन्तले अपि एतादृशः प्रयोगः दृश्यते - 'ततः प्रविशति **कामयानावस्थो** राजा' (३.२१) इति । तथैव भागवते, महाभारते चापि एतादृशाः प्रयोगाः दृश्यन्ते ।

दुर्घटवृत्तौ शरणदेवः 'अपि शाकं **पचानस्य**' इति उदाहरणं प्रदर्श्य *'आगमशास्त्रस्य अनित्यत्वात् न मुक्'* इति समाधानं वदति ।

वामनेन अपि एतद्विषये चिन्तनं कृतं दृश्यते । सः वदति - *'कामयानशब्दः सिद्धः अनादिश्चेत्'* (का. सू. वृ. - ५.२.९२) इति । 'प्राचीनकालात् अपि एतस्य प्रयोगः क्रियमाणः दृश्यते इत्यतः एषः साधुः' इति तस्य तात्पर्यम् । तन्नाम आर्षप्रयोगत्वात् महाकविप्रयोगत्वात् च साधुः इति उक्तं भवति एव । किन्तु तस्य अनुकरणम् अस्माभिः कृतं चेत् असाधुतापत्तिः ।

२९. ❖ सभा वा न **प्रवेष्टव्यं** वक्तव्यं वा समञ्जसम्

- (दुर्घटवृत्तौ उदाहृतम्)

❖ कां दिशं गन्तव्यम् ।

- कादम्बरी

**'सभा न प्रवेष्टव्या' 'का दिक् गन्तव्या'** इति प्रयोगः भवेत् । विशधातोः गम्धातोः च सकर्मकत्वात् तव्यत्प्रत्ययः कर्मणि भवति । कर्मणि तव्यतः विधानात्, तेन कर्मणः उक्तवात् 'सभा'-शब्दस्य 'दिक्'शब्दस्य वा द्वितीया न स्यात् । अत्र तु द्वितीया प्रयुक्ता । तत् अयुक्तम् ।

३०. कर्णपुच्छं मया त्यक्तं भग्नो दन्तस्तथैव च ।
एष कालः समुत्पन्नो यः **पलाति** स जीवति ।

(दुर्घटवृत्तौ उदाहृतम् )

गत्यर्थकस्य 'अय'धातोः 'परा' इत्यस्य उपसर्गस्य योगे,

*'उपसर्गस्यायतौ'* (८.२.१९) इति रेफस्य लत्वे **'पलायते'** इति रूपम् । अयधातुः आत्मनेपदी । अतः पलायते इत्येव प्रयोक्तव्यम् । अयधातुस्थः यकारः अपि श्रूयेत एव ।

दुर्घटवृत्तौ शरणदेवः तु – 'पल गतौ इत्यस्य लेटि आडागमे पलाति इति रूपम् । छान्दसाः अपि भाषायां क्वचित् प्रयुज्यन्ते' इति लिखति । लेट् तु छन्दसि । छान्दसरूपस्य लोके प्रयोगः इति कथनं प्रबलयुक्तिसमेतं वचनं न । अतः 'पलायते' इति प्रयोगः एव साधुः ।

**३१.** दुर्घटवृत्तौ कानिचन उदाहरणानि दर्शितानि, येषु आत्मनेपदित्वं न कृतम् । यथा –

१. नीचं समृद्धमपि **सेवति** नीच एव
दूरेण तं परिहरन्ति पुनर्महान्तः ।

२. **लभन्ति** पुनरुत्थानम् ।

३. तवोपशायिका यावत् राक्षसा**श्चेतयन्ति** नः ।

४. मण्डपे **शयामि** किमतः परम् ।

५. **आदध्याद**न्धकारे रतिमतिशयिनीमावहन् वीक्षणानाम् ।
– मयूरः

६. प्रत्यूषकाले जगदङ्गनानां मुखेषु कामः **प्रतिजृम्भति** ।

७. अरिं मित्रमुदासीनं मध्यस्थं स्थविरं गुरुम् ।
यो न **बुध्यति** मूढात्मा सर्वथाऽसौ विनश्यति ।

८. **परिष्वजति** पाञ्चाली मध्यमं पाण्डुनन्दनम् ।

९. स **सहेन्न** कथं तुषारम् ।

१०. **ग्रसति** तव मुखेन्दुं चन्द्रबिम्बं विहाय ।

११. काशे **स्यन्द** कुशे **स्यन्द स्यन्द** त्वं शत्रुमस्तके । .....

एतेषु सर्वेषु अपि उदाहरणेषु स्थूलाक्षरैः निर्दिष्टानि क्रियापदरूपाणि आत्मनेपदीनि एव स्युः । यथा –

१. षेवृ (सेवने) इति धातुः आत्मनेपदी । अतः **'सेवते'** इति रूपं स्यात् ।

२. (टु) लभष् (प्राप्तौ) इति धातुः आत्मनेपदी । अतः **'लभते'** इति प्रयोक्तव्यम् ।

३. चित (सञ्चेतने) इत्येषः धातुः आकुस्मीयः । तस्मात् नित्यम्

आत्मनेपदित्वम् । अतः **'चेतयते'** इति प्रयोक्तव्यम् ।

४. स्वप्नार्थकः शीङ्धातुः ङित्त्वात् आत्मनेपदी एव । अतः **'शये'** इति प्रयोक्तव्यम् ।

५. आङ्पूर्वकः ददातिः आत्मनेपदी - *'आङो दोऽनास्यविहरणे'* (१.३.२०) इति सूत्रेण । अतः **'आदत्ते'** इति लटि प्रथमैकवचनान्तं रूपम् ।

६. गात्रविनामार्थकः जृभीधातुः आत्मनेपदी । अतः **(प्रति)जृम्भते** इति प्रयोक्तव्यम् ।

७. अवगमनार्थकः बुधधातुः चतुर्थगणीयः आत्मनेपदी । तस्मात् **'बुध्यते'** इति रूपम् । (प्रथमगणीयः तु परस्मैपदी । बोधति इति रूपम् । 'बुधिर् (बोधने)' इत्यपि कश्चन प्रथमगणीयः धातुः अस्ति । सः उभयमदी । बोधति / बोधते इति रूपम् )

८. परिष्वङ्गार्थकः स्वञ्जधातुः आत्मनेपदी । अतः **'परिष्वजते'** इति प्रयोक्तव्यम् ।

९. 'षह (मर्षणे)' इत्येषः आत्मनेपदी । अतः **'सहेत'** इति प्रयोक्तव्यम् ।

१०. ग्रसु (अदने) इत्येषः आत्मनेपदी । अतः **'ग्रसते'** इति प्रयोगः स्यात् ।

११. 'स्यन्दू (प्रस्रवणे)' इत्येषः आत्मनेपदी । तस्मात् **'स्यन्दस्व'** इति रूपं स्यात् ।

दुर्घटवृत्तौ तु 'आनुदात्तङित आत्मनेपदम्' इत्यस्य अनित्यत्वम् उक्त्वा, 'गणकार्यम् अनित्यम्' इति उक्त्वा, मार्गान्तरेण वा एते प्रयोगाः कथञ्चित् समर्थिताः ।

**३२.** क्वचित् परस्मैपदिक्रियापदे प्रयोक्तव्ये आत्मनेपदिनः प्रयोगः कृतः दृश्यते । दुर्घटवृत्तौ एतादृशानि कानिचन सङ्गृहीतानि ।

तानि यथा -

१. दासत्वं **गच्छते** नार्या वृद्धस्तु पुरुषोत्तमः ।

२. रजसा **शुध्यते** नारी ।

३. कदाचित् **कुप्यते** माता नोदरस्था हरीतकी ।

४. प्रियामुखं किम्पुरुष**श्चुचुम्बे** ।

- कुमारसम्भवे

५. **नन्दते** च कुलं पुंसाम् ।

६. ततः स **ददृशे** च तौ ।

७. तच्छ्रुणुष्व मया ख्यातं यथावत् कथयामि ते ।

९. स्वराज्यं **प्राप्स्यते** भवान् ।

गम्लृ (गतौ), शुध (शौचे), कुप (क्रोधे), चुबि (वक्त्रसंयोगे), नदि (समृद्धौ), दृशिर् (प्रेक्षणे), श्रु (श्रवणे), आप्लृ (व्याप्तौ) इत्येते धातवः परस्मैपदिनः । तस्मात् गच्छति, शुध्यति, कुप्यति, चुचुम्ब, नन्दति, ददर्श, श्रृणु, प्राप्स्यति इत्येतानि रूपाणि पूर्वोक्तेषु उदाहरणेषु क्रमेण प्रयोक्तव्यानि ।

दुर्घटवृत्तिकारः स्थितस्य गतेः चिन्तनाय प्रयासान् तु करोति । किन्तु ते सर्वे न तृप्तिदायकाः ।

३३. वासुदेवं परित्यज्य योऽन्यं देव**मुपासते** ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ।।

**'उपास्ते'** इति प्रयोक्तव्यम् । यतः कर्तृपदम् 'यः' इत्येतत् एकवचनान्तम् अस्ति । तदनुगुणं क्रियापदम् अपि एकवचनान्तम् एव स्यात् । (उप)आसते इत्येतत् तु बहुवचनान्तं रूपम् । आस (उपवेशने) इति धातुः । द्वितीयगणीयः सः । तस्य एकवचनान्तं रूपम् (उप)आस्ते इति ।

## ३४. गीतायाम् आर्षप्रयोगाः

भगवद्गीतायाम् अपि केचन आर्षप्रयोगाः परिलक्ष्यन्ते । गीतापारायणं तु प्रतिदिनं क्रियते बहुभिः । गीतास्थाः के प्रयोगाः अनुकरणार्हाः न इति ज्ञानं यदि भवेत् तर्हि लाभः स्यात् इति उद्देशेन ते अत्र सङ्गृहीताः ।

१. न **काङ्क्षे** विजयं कृष्ण न च राज्यं सुखानि च । - १.३२

**'काङ्क्षामि'** इति प्रयोगः स्यात् । काङ्क्षार्थकः काक्षिधातुः परस्मैपदी । प्रथमगणीयः सः । तस्य लटि उत्तमपुरुषैकवचनान्तं रूपं 'काङ्क्षामि' इति ।

२. स्थितधीः किं प्रभाषेत किमासीत **व्रजेत** किम् । - २.५४

**'व्रजेत्'** इति स्यात् । गत्यर्थकः व्रजधातुः परस्मैपदी । विधौ लिङि

प्रथमैकवनान्तं रूपं 'व्रजेत्' इति ।

३. कस्माच्च ते न **नमेरन्** महात्मन् । - ११.३७

'नमेयुः' इति स्यात् ।

णम - प्रह्वत्वे शब्दे च इत्येषः धातुः परस्मैपदी । विधौ लिङि प्रथमपुरुषबहुवचनान्तं रूपं 'नमेयुः' इति ।

४. ततो मां तत्त्वतो ज्ञात्वा **विशते** तदनन्तरम् । - १८.५५

**'विशति'** इति स्यात् ।

प्रवेशनार्थकः विशधातुः (षष्ठगणीयः) परस्मैपदी । तस्य लटि प्रथम-पुरुषैकवचनान्तं रूपं 'विशति' इति ।

५. ➧ **यततो** ह्यपि कौन्तेय पुरुषस्य विपश्चितः । - २.६०

➧ वश्यात्मना तु **यतता** शक्योऽवाप्तुमुपायतः । - ६.३६

➧ मनुष्याणां सहस्रेषु **कश्चिद्यतति** सिद्धये । - ७.३

➧ **यतताम**पि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः । - ७.३

➧ जरामरणमोक्षाय मामाश्रित्य **यतन्ति** ये । - ७.२९

➧ सततं कीर्तयन्तो मां **यतन्त**श्च दृढव्रताः । - ९.१४

➧ **यतन्तो** योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।

**यतन्तो**ऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ।। - १५.११

एतेषु सर्वेषु उदाहरणेषु प्रयत्नार्थकः 'यत'धातुः परस्मैपदित्वेन एव प्रयुक्तः । किन्तु स च धातुः तु आत्मनेपदी । अतः 'यतमानस्य' **'यतते'** इत्यादीनि रूपाणि अत्र प्रयोगार्हाणि भवन्ति ।

६. यथा दीपो निवाषपस्थो **नेङ्गते** सोपमा मता । - ६.१९

'इङ्गति' इति प्रयोक्तव्यम् । गत्यर्थकः भ्वादौ पठितः 'इगि'धातुः परस्मैपदी । अतः **'इङ्गति'** इति रूपं प्रयोक्तव्यम् ।

७. न तु मां **शक्यसे** द्रष्टुम् अनेनैव स्वचक्षुषा । - ११.८

**'शक्नोषि'** इति प्रयोक्तव्यम् । शक्लृधातुः स्वादिगणीयः परस्मैपदी च । तस्य विकरणप्रत्ययः - 'नु' (न तु 'य') । अतः अत्र आत्मनेपदित्वं चतुर्थगणीयत्वं च अयुक्तम् एव । 'शक्नोषि' इति प्रयोगः स्यात् । मर्षणार्थकः शकधातुः कश्चन अस्ति चतुर्थगणीयः । सः उभयपदी । तस्मात् 'शक्यते' इति कर्तरि रूपं साधु एव इति केचन अभिप्रयन्ति ।

८. ➧ इषुभिः **प्रतियोत्स्यामि** पूजार्हावरिसूदन । - २.४

तस्मात्सर्वेषु कालेषु मामनुस्मर **युध्य** च । - ८.७
**'प्रतियोत्स्ये' 'युध्यस्व'** इति च प्रयोगः स्यात् । सम्प्रहारार्थकः 'युध'धातुः (चतुर्थगणीयः) आत्मनेपदी । अतः लृटिः लोटि च तदनुगुणः एव प्रयोगः स्यात् ।

९. यदि ह्यहं न **वर्तेयं** जातु कर्मण्यतन्द्रितः । - ३.२३
**'वर्तेय'** इति स्यात् । वर्तनार्थकः 'वृतु'धातुः आत्मनेपदी । तस्य विधौ लिङि उत्तमपुरुषैकवचनान्तं रूपं 'वर्तेय' इति । लिङि तु परस्मैपदित्वविकल्पः न उक्तः ।

१०. न प्रहृष्येत् प्रियं प्राप्य **नोद्विजेत्** प्राप्य चाप्रियम् । - ५.२०
**'उद्विजेत'** इति प्रयोगः स्यात् । षष्ठगणीयः भयसञ्चलनात्मकः विजीधातुः (प्रायः उत्पूर्वः) आत्मनेपदी । विधौ लिङि प्रथमपुरुषैक-वचनान्तं रूपम् 'उद्विजेत' इति ।

११. कौन्तेय **प्रतिजानीहि** न मे भक्तः प्रणश्यति । - १०.३१
**'प्रतिजानीष्व'** इति प्रयोगः स्यात् ।
अवबोधनार्थकः क्र्यादिगणीयः ज्ञाधातुः परस्मैपदी । किन्तु तस्य प्रतिपूर्वकत्वे *'सम्प्रतिभ्यामनाध्याने' (१.३.४६)* इति सूत्रेण आत्मनेपदित्वं विहितम् । 'प्रतिजानीते' इत्यस्य लोटि मध्यमपुरुषैक-वचनान्तं रूपं 'प्रतिजानीष्व' इति ।

१२. कथयन्तश्च मां नित्यं तुष्यन्ति च **रमन्ति** च । - १०.९
**'रमन्ते'** इति प्रयोगः स्यात् ।
क्रीडार्थकः रम्धातुः आत्मनेपदी । तस्य लटि प्रथमपुरुषबहुवचनान्तं रूपं 'रमन्ते' इति ।

१३. सर्गेऽपि नोपजायन्ते प्रलये न **व्यथन्ति** च । - १४.२
**'व्यथन्ते'** इति स्यात् । भयसञ्चलनार्थकः 'व्यथ'धातुः (भ्वादिः) आत्मनेपदी । लटि तस्य प्रथमपुरुषबहुवचनान्तं रूपं स्यात् 'व्यथन्ते' इति ।

१४. गुणा वर्तन्त इत्येव यो**ऽवतिष्ठति** नेङ्गते । - १४.२३
**'अवतिष्ठते'** इति प्रयोगः स्यात् । गतिनिवृत्त्यर्थकः ष्ठाधातुः यद्यपि परस्मैपदी, तथापि अवपूर्वकत्वे तु आत्मनेपदित्वं *'समवप्रविभ्यः स्थः' (१.३.२२)* इति सूत्रेण । लटि प्रथमपुरुषे एकवचने 'अव-

तिष्ठते' इति रूपम् ।

१५. यस्मिन् गता न **निवर्तन्ति** भूयः । - १५.४

**'निवर्तन्ते'** इति प्रयोक्तव्यम् । वर्तनार्थकः वृतुधातुः आत्मनेपदी । लटि प्रथमपुरुषबहुवचनान्तं रूपं 'निवर्तन्ते' इति ।

१६. स कृत्वा राजसं त्यागं नैव त्यागफलं **लभेत्** । - १८.८

**'लभेत'** इति प्रयोगः स्यात् । प्राप्त्यर्थकः लभधातुः आत्मनेपदी । विधौ लिङि प्रथमपुरुषे एकवचने तस्य रूपं - 'लभेत' इति ।

१७. **निवसिष्यसि** मय्येव अत ऊर्ध्वं न संशयः । - १२.८

**'निवत्स्यसि'** इति स्यात् । वसधातोः लृटि अनिट्त्वात् न इडागमः । *'सः स्यार्धधातुके'* इति तकारः । मध्यमपुरुषे एकवचने 'निवत्स्यसि' इति रूपं स्यात् ।

१८. **सेनानीनाम**हं स्कन्दः सरसामस्मि सागरः । - १०.२४

**'सेनान्याम्'** इति प्रयोगः स्यात् । सेनानीशब्दात् आमि यण् । 'सेनान्याम्' इति रूपम् । नुटः तु अप्राप्तिः निमित्ताभावात् ।

१९. अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि **मा शुचः** । - १८.६६

**'मा शोचीः'** इति स्यात् ।

'शुच'धातोः लुङि मध्यमपुरुषे एकवचने 'अशोचीः' इति रूपम् । माङः योगे *'न माङ्योगे' (६.४.७४)* इति सूत्रेण अडागमनिषेधः । अतः 'मा शोचीः' इति रूपम् । लोटि तु 'मा शोच' इति रूपम् । शुचधातुः भ्वादिः । लुङि *'पुंगन्तलघूपधस्य च'* इति गुणः स्यादेव । अतः 'अशुचः' इति रूपं न सिध्यति ।

२०. पवनः **पवताम**स्मि रामः शस्त्रभृतामहम् । - १०.३१

**'पुनतां' 'पुनानानां' 'पवमानानाम्'** इत्येतेषु किमपि एकं रूपं साधु स्यात् ।

पवनार्थकौ उभौ धातू स्तः । एकः पूङ् (भ्वादिः), अपरः पूञ् (क्र्यादिः) । भ्वादिः आत्मनेपदी । लटि 'पवते' इति रूपम् । तस्य शानजन्तं रूपं (ष.ब.) 'पवमानानाम्' इति । क्र्यादिः उभयपदी । तस्य शतरि 'पुनताम्' इति । शानचि च 'पुनानानाम्' इति । 'पुनताम्' इति प्रयोगे तु छन्दसः अपि आनुगुण्यम् ।

२१. अनेन **प्रसविष्यध्व**मेष वोऽस्त्विष्टकामधुक् । - ३.१०

**'प्रसुवीध्वम्'** इति, **'प्रसूध्वम्'** इति वा स्यात् ।
प्राणिगर्भविमोचनार्थकः षूञ्धातुः अदादिः । (द्वितीयगणीयः) तस्य विधौ लिङि (म.पु.ब.व.) 'प्रसुवीध्वम्' इति रूपम् । लोटि (म.पु.ब.व.) 'प्रसूध्वम्' इति रूपम् ।

२२. शुक्लकृष्णे गती ह्येते जगतः **शाश्वते** मते । - ८.२६
**'शाश्वत्यौ'** इति स्यात् ।
शश्वत् इति अव्युत्पन्नं प्रातिपदिकम् । तस्मात् 'अण्' भवार्थे । अणः णित्त्वात् स्त्रियां 'ङीप्' । अतः 'शाश्वती' इति रूपम् । तस्य द्विवचनान्तं (प्र.वि.) रूपं 'शाश्वत्यौ' इति । अत्र रामायणप्रयोगे यथा - 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।'('समा'शब्दः वर्षार्थकः । स च स्त्रियाम्)

२३. अन्तवत्तु फलं तेषां तद्भवत्य**ल्पमेधसाम्** । - ७.२३
**'अल्पमेधसाम्'** इत्यत्र किञ्चित् ज्ञातव्यम् अस्ति ।
नञ्दुस्सुभ्यः पराभ्यां प्रजामेधाभ्यां नित्यम् असिच् विधीयते - *'नित्यमसिच् प्रजामेधयोः' (५.४.१२२)* इति सूत्रेण । अतः अप्रजाः, सुप्रजाः, दुष्प्रजाः इत्यादीनि रूपाणि सिद्धानि भवन्ति । अन्येभ्यः शब्देभ्यः परात् मेधाशब्दात् असिच् न विहितः । अतः 'अल्पमेधसाम्' इति रूपं कथम् इति जिज्ञासा भवति । केचन असाधुत्वम् एव मन्यन्ते तस्य रूपस्य । कौमुदीव्याख्याने (तत्त्वबोधिन्यां) लिख्यते - *'अस्वरितत्त्वादेव अन्यतरस्यां ग्रहणाननुवृत्तिसिद्धौ नित्यग्रहणमन्यतो विधानार्थम् । तेन 'अल्पमेधस' इति सिद्ध्यतीति वृत्तिकारादयः'* इति । अतः 'अल्पमेधसाम्' इति प्रयोगस्य न असाधुता इति भाति ।

२४. छन्दोभङ्गादिनिवारणाय गीतायां क्वचित् सन्धिः न कृतः ।
तादृशानि कानिचन स्थलानि यथा -

- **प्रियायार्हसि** - ११.४४ - 'प्रियाया अर्हसि' इति स्यात् ।
  प्रियायाः + अर्हसि इत्यत्र विसर्गलोपः । विसर्गलोपानन्तरं सवर्णदीर्घसन्धिः न स्यात् ।
- **तस्याराधनम्** - ७.२२ - 'तस्या आराधनम्' इति स्यात् ।
  तस्याः + आराधनम् इत्यत्रापि विसर्गलोपः । विसर्गलोपानन्तरं न सवर्णदीर्घः ।

- **शक्य अहम्** - ११.४८ 'शक्योऽहम्' इति स्यात् । शक्यः + अहम् इति स्थिते विसर्गस्य उत्वं, गुणः, पूर्वरूपं च वा स्यात् ।
- **शक्य अहम्** - ११.५४ (विवरणं पूर्वोक्तम्)
- **हे सखेति** - ११.४१ - हे सख इति / हे सखयिति वा स्यात् । इकारान्तस्य सखिशब्दस्य सम्बुद्धौ एकवचने 'हे सखे' इति रूपम् । 'हे सखे + इति' इति स्थिते अयादेशे यकारलोपे 'हे सख इति' इति रूपम् । (यलोपानन्तरं न गुणः)
- **इह + उभे** (२.५०) इत्यत्र गुणसन्धिः, **एव + अत** (१२.८) इत्यत्र सवर्णदीर्घसन्धिः च न कृतः छन्दोभङ्गनिवारणाय । नायं व्याकरणदोषः । आलङ्कारिकाः तु एतादृशे स्थले 'विसन्धि'दोषं पश्यन्ति ।

  इदमवधेयम् - ऋषिभिः कृतः अपाणिनीयः प्रयोगः आर्षः इत्युच्यते । तेषां प्रयोगाणां तस्मिन् स्थले साधुता अस्ति । अतः गीतादीनां पारायणे तथैव उच्चारणीयम् । ते शब्दाः अस्माभिः विरच्यमाने वाक्ये न प्रयोक्तव्याः ।

## परिशिष्टम् - १

# चिन्तनाय स्वीकृतानां शब्दानाम् अकाराद्यावली

- एतस्मिन् पुस्तके असाधुवाक्यानि असाधुपदानि वा उदाहृत्य तेषां वाक्यानां, वाक्यगतानां शब्दानां वा साधुत्वं परिदर्शितम् । तस्मात् असाधुशब्दानाम् एव अकाराद्यावली अत्र प्रदत्ता । आवरणे च शुद्धं रूपं प्रदत्तम् ।
  उदा - अपक्तम् (अपक्वम् )
- क्वचित् चिन्तनाय साधु रूपम् एव उपात्तम् । तादृशाः अपि शब्दाः एतस्याम् आवल्यां सन्ति । तेषां पुरतः आवरणे अन्यत् रूपं न भवति ।
  यथा - गङ्गाधरः, कष्टकरम् / कष्टम्
  एवं यस्य पुरतः अन्यत् रूपं न भवति तत् साधु रूपम् इति मन्तव्यम् ।
- यदि साधु असाधु वा रूपद्वयं भवति तत्र विकल्पचिह्नं (/) प्रदत्तम् ।
  यथा - अक्षरज्ञः / साक्षरः, ज्योतिषिकः / ज्यौतिषिकः
- क्वचित् वाक्ये एव दोषः भवति, न तु पदे । तादृशे अवसरे यत् पदं तत्र प्राधान्यम् आवहति तदेव अकाराद्यावल्यां परिगणितम्, न तु वाक्यस्य प्रथमं पदम् ।
  यथा - 'परश्वः आगच्छामि' इत्येतत् आकारावल्यां योजितम् । यतः 'आगच्छामि' इत्यत्र एव चिन्तनांशः अस्ति ।
- यद्यपि समासः तिङन्तः इत्यादीनि प्रकरणानि विषयानुसारीणि सन्ति तथापि प्रसङ्गवशात् कानिचन उदाहरणानि प्रकरणान्तरे दृश्यन्ते ।
  यथा -
  - ❑ मां मिलति । - विभक्तिसम्बद्धम् इदम् उदाहरणम् । तथापि मिलतेः निरूपणावसरे क्रियापदप्रकरणे अस्ति ।
  - ❑ मृत् + मयः = मृन्मयः - इदं सुबन्ते स्यात् । किन्तु समासप्रकरणे अस्ति ।
  - ❑ दूर्वासाः + मुनिः = दूर्वासोमुनिः । इदं समासे स्यात् । किन्तु सुबन्ते अस्ति ।
- अशुद्धिः क्वचित् रूपे भवति । क्वचित् अर्थे ।
  यथा -
  - ❖ रूपे अशुद्धिः - अध्यापकी, असंहरत्
  - ❖ अर्थे अशुद्धिः - 'मिलति' इत्यस्य प्रयोगः प्राप्त्यर्थे अनुचितः ।

## अ

## ओ, औ



## क

## ग, घ



## च, छ

## ज, झ



## त, थ

## द, ध

## प, फ

### ब

## य



## र

## श

ह

## परिशिष्टम् - २

# चिन्तनार्थं स्वीकृतानां वाक्यानां विभक्तिशः आवली

### प्रथमा

शब्दाः वक्तुं शक्यन्ते /११२
दिनानि उषितानि (दिनानि उषितम्) /११७
मां प्रष्टव्यम् आसीत् (अहं प्रष्टव्यः आसम्) /११७
मूर्खम् इति (मूर्खः इति) /१२०
'सः पण्डितः' इति / तं 'पण्डितः' इति.... /१२०
इति भावितः (इति भावितम्) /१२०
छात्रान् अध्यापकान् इत्यादीनाम्
(छात्राः अध्यापकाः इत्यादीनाम्) /१२१
भूषणभ्रात (भूषणभ्रातः) /१२४
अन्नदाता सुखी भव (अन्नदातः, सुखी भव) /१२५
तृतीया प्रयोक्तव्या (तृतीयान्तं प्रयोक्तव्यम्) /१३०
व्रात्यान् इति (व्रात्याः इति) /२५६
सभां प्रवेष्टव्यम् (सभा प्रवेष्टव्या) /२५४
केऽपि न सन्ति (कोऽपि नास्ति) /१३९
स्वामिना भृत्येन कार्यं कार्यते (भृत्यः) /१७९

### द्वितीया

श्लोकान् पाठयितुं शक्यते । /११२
आशीः प्रार्थये (आशिषं प्रार्थये) /११४
मित्रं गृहम् आहूतवान् (मित्रं गृहं प्रति आहूतवान् ) /११४
मित्रं नगरं प्रेषयित्वा (मित्रं नगरं प्रति प्रेषयित्वा) /११४
शिशवे क्षीरं पाययति (शिशुं क्षीरं पाययति) /११५
शिष्याय व्याकरणं बोधयति (शिष्यं व्याकरणं बोधयति) /११५
मां स्मारयतु /११६
सप्ताहत्रयात् प्रवृत्तः (सप्ताहत्रयं प्रवृत्तः) /११९

तं पण्डितं भावयन्ति /१२०
शिखां बध्नाति /१२२
रक्षां बध्नाति /१२२
ग्रन्थिं बध्नाति /१२२
रज्जुं बध्नाति /१२२
सुमहत् उपकारम् (सुमहान्तम् उपकारम्) /१२४
स्नातककक्ष्यायाम् उत्तीर्णः (स्नातककक्ष्याम् उत्तीर्णः) /१२५
मनुष्यस्य मार्गम् उपदिशति (मनुष्यं मार्गम् उपदिशति) /१२६
विद्यार्थिन्यः आहूतवान् (विद्यार्थिनीः आहूतवान्) /१२९
धर्मश्रीं पठितवान् (धर्मश्रियं पठितवान्) /१२९
मातेव (मातरमिव) /२५३
शिक्षार्थीन् (शिक्षार्थिनः) /१३१
कार्यक्रमेऽस्मिन् आगताः (कार्यक्रममेतम् आगताः) /१३४
बिलस्य अन्तः प्राविशत् (बिलं प्राविशत्) /१३४
छात्रेभ्यः दृष्टवत्यः (छात्रान् दृष्टवन्तः) /१३५
स्वागतं धन्यवादान् च समर्पितवन्तौ
(स्वागतं व्याहृतम्, धन्यवादाः समर्पिताः) /१३६
स्वामी भृत्यं / भृत्येन कार्यं कारयति /१७९

## तृतीया

पण्डितः भवितव्यः (पण्डि[illegible] भवितव्यम्) /१११
रामः इव पण्डितेन (रामेण इव पण्डितेन) /१११
नाशः भाव्यः (नाशेन भाव्यम्) /१११
उन्नतिः भवितुं शक्या (उन्नत्या भवितुं शक्यम्) /१११
बालाय अन्नं खादय (बालेन अन्नं खादय) /११६
वरम् अनुगृह्णाति (वरेण अनुगृह्णाति) /११८
संस्कृतभाषायाम् अनुवदत (संस्कृतभाषया अनुवदत) /११८
लोकयाने / त्रिचक्रिकायां गच्छामि
(लोकयानेन / त्रिचक्रिकया गच्छामि) /११८
हस्ते निगडं बद्धवन्तः (हस्तं निगडेन बद्धवन्तः) /१२२

हस्ते खड्गं गृहीतवान् (हस्तेन खड्गं गृहीतवान्) /१२३
अनुजः तथा पित्रा सह (अनुजेन पित्रा च सह) /१२३
लेशमात्रम् अवकाशः (लेशमात्रेण अवकाशः) /१२३
वर्णं लिम्पति (वर्णेन लिम्पति) /१२५
मस्तके वहन् (मस्तकेन वहन्) /१२७
चक्षुभ्याम् (चक्षुर्भ्याम्) /१२८
इत्यादिभाषया (इत्यादिभिः भाषाभिः) /१२८
कर्णाटकांग्लसंस्कृतभाषया वा
(कर्णाटकभाषया आंग्लभाषया संस्कृतभाषया वा) /१२८
दीर्घचषके ददातु (दीर्घचषकेण ददातु) /१३१
सेनानिना (सेनान्या) /१३१
नाममात्रं कार्यदर्शी (नाममात्रेण कार्यदर्शी) /१३६
सम्मेलनं कथं भवितव्यम् (सम्मेलनेन कथं भवितव्यम्) /१३८
गोलिकाः प्रहृत्य (गोलिकाभिः प्रहृत्य) /१३८
बालाय वस्त्रं धारयति (बालेन वस्त्रं धारयति) /१३९

## चतुर्थी

अनुजः इव अग्रजाय (अनुजाय इव अग्रजाय) /१११
प्रेक्षकेभ्यः चित्रं दर्शयति /११६
निःश्रेयसे (निःश्रेयसाय) /१३२

## पञ्चमी

मरणस्य भीतिः (मरणात् भीतिः) /११९
दशवादनात् अनन्तरम् /११९
उदुपसर्गपूर्वकस्य 'तॄ'धातोः..
(उदुपसर्गपूर्वकात् 'तॄ'धातोः..) /१३०
नामश्रवणमात्रेण (नामश्रवणमात्रात्) /१३३
बहुभ्य दिनेभ्यः (आ बहुभ्यः दिनेभ्यः) /१३३
आ बहुमासात् (आ बहुभ्यः मासेभ्यः) /१३३
ज्वालाभिः रक्षन् (ज्वालाभ्यः रक्षन्) /१३५

### षष्ठी

कतिचनदिनानान्तरम् (कतीनाञ्चन दिनानाम् अनन्तरम्) /११३
केषाञ्चित् दिनानन्तरम् (केषाञ्चित् दिनानाम् अनन्तरम्) /११३
मम करणीयम् /११४
मह्यं शिरोवेदना (मम शिरोवेदना) /११८
मह्यं प्रियम् (मम प्रियम्) /११८
उत्थानस्य अनन्तरम् /११९
पुरुषाणां कृते प्रवेशः निषिद्धः (पुरुषाणां प्रवेशः निषिद्धः) /१२४
महान् सन्तोषस्य (महतः सन्तोषस्य) /१२४
पर्वतशिखरात् अधः (पर्वतशिखरस्य अधः) /१२६
आगमनात् पञ्चभ्यः दिनेभ्यः पूर्वम्
(आगमनस्य पञ्चभ्यः दिनेभ्यः पूर्वम्) /१२६
प्रभृतिनीनाम् (प्रभृतीनाम्) /१२६
इत्यादिनाम् (इत्यादीनाम्) /१२८
स्त्रियः (स्त्रियाः) /१३२
वाराणसेः (वाराणस्याः) /१३२
विद्वान् महादेववर्यस्य (विदुषः महादेववर्यस्य) /१३५
सर्वान् मार्गदर्शनं कृतवान् (सर्वेषां मार्गदर्शनं कृतवान्) /१३५
लेशमात्रं भयम् (भयस्य लेशमात्रम्) /१३६

### सप्तमी

कतिचित् दिनेषु (कतिषुचित् दिनेषु) /११३
तस्मिन् उक्ते सति (तेन उक्ते सति) /१३६
स्वामिनि गृहे प्रविष्टवति (स्वामिनि गृहं प्रविष्टवति) /१३७

## परिशिष्टम् - ३

# सूत्रानुक्रमणिका

### अ आ



### इ ई, उ ऊ

### ऋ ए ऐ ओ औ



### क ख



### ग घ, च छ, ज झ



### ट ठ ड ढ ण



### त थ

# परिशिष्टम् - ४

# वार्तिकादीनि

[अत्र वार्तिकज्ञापकवचनगणसूत्रादीनि प्रदत्तानि । ]

## परिशिष्टम् - ५

# उदाहृताः श्लोक-वाक्यखण्डादयः

अङ्केनादाय वैदेहीम् ... - रामायणम् - ६.५१.१९ /१२७

.....अतस्तेषु ..... आवश्यकत्वात् - बालमनोरमा
('विभाषा' इत्यस्य व्याख्याने) /९८

अतिथिपतिः अतिथीन् परिविश्य - शौनकसंहिता - १.३.५३ /१४३

अत्र ते पादौ करोमि - रामचरितम् - ४.४६ /२३२

अथवा अभियुक्तानां नाम श्रीपदपूर्वं प्रयुञ्जीत - सौभाग्यभास्करभाष्यम्
(ललितासहस्रनाम) /२४१

अथातो... वेदाध्ययनादनन्तरम् - आचार्यः /११९

अद्यप्रभृत्यवनताङ्गि तवास्मि दासः - कालिदासः /१११

अनुक्तमप्यूहति पण्डितो जनः - हितोपदेशः /२४९

अनेन प्रसविष्यध्वम् - गीता - ३.१० /२६०

अन्तवत्तु फलं तेषाम् - गीता - ७.२३ /२६१

अभ्याजेत्युक्ते क्रिया निर्दिष्टा - भाष्यम् /४६

अरिं मित्रमुदासीनम् .... यो न बुध्यति.... /२५५

अहं केशरिणः क्षेत्रे ....हनूमान्नाम वानरः - महा. - ३.११७ /९५

अहं त्वा सर्वपापेभ्यः - गीता - १८.६६ /२६०

आददीताथ षड्भागम् - मनुस्मृतिः ८.३३ /२१६

आदद्यादन्धकारे ..... - मयूरः /२५५

आदित्यचन्द्रावनिलोऽनलश्च.... /४५

आपृच्छस्व प्रियसखममुम् ...... - मेघदूतम् /१४८

आर्ये व्रजामोऽन्यत इत्यथैनाम् ... - रघु. - ६.८२ /२३६

इति विशकलितार्थमौद्धवीं... - माघः - २.११८ /१९

इमे नो गृहाः, यावत् प्रविशामि - मुद्राराक्षसः /३५

इषुभिः प्रतियोत्स्यामि - गीता - २.४ /२५८

उच्चारयति कल्याणीम् ..... - रामा. किष्किन्धा. - ३.३२. /१४२

उत्तिष्ठत, जाग्रत, प्राप्य वरान्निबोधत - कठोपनिषत् /१५० (टि)

उद्वेजयत्यङ्गुलिपार्ष्णिभागान् ..... - कुमार. - १.११ /९५

एका च सिकता तैलदानेऽसमर्था..... - भाष्यकारः /३७

एवं त्वं पुत्रशोकेन ....कालं करिष्यसि । - रामा. - २.६४.५२ /२३२

परिशिष्टम् - ६

# पुस्तकेऽस्मिन् निरूपितानि लघुप्रकरणानि

[पुस्तकस्य आरम्भे एव समास-विभक्ति-सङ्ख्यादीनाम् अनुक्रमणिका यद्यपि प्रदत्ता, तथापि ततः लघु प्रकरणानि कानि कुत्र सन्ति इति बोधः भवितुं न अर्हति । अतः अत्र लघुप्रकरणानि अकारादिक्रमेण प्रदत्तानि ]

## अभ्यासः

१. *उचिते स्थाने मकारं लिखत ।*

| उदा - वाक्यं उक्त्वा = **वाक्यम् उक्त्वा** |
|---|

१. विद्यां इच्छामि । = ............. ........... ।
२. गृहं आगत्य = ............. ............ ।
३. कथां ऊहित्वा = ............ ............ ।
४. नगरं एत्य = ............. .............. ।
५. वाक्यं उक्तं । = ............. .......... ।
६. चित्रं अपश्यं । = ............. .......... ।
७. रामाभ्यां = ........... ............. ।
८. उत्तमं औषधं । = .......... .......... ।
९. स्वागतं अस्ति । = ...................... ।
१०. उक्तं इदं उत्तरं अशुद्धं । = ....... ........ ..... ......।

२. *परसवर्ण ( पञ्चमं वर्ण) लिखत -*

| उदा - गंगा = गङ्गा |
|---|

१. अंबरः = ...........   २. अंधः = ..........
३. अभ्यंजनम् = ..........   ४. अंगम् = .........
५. संडः = ...........   ६. शुंठी = ..........
७. कंपते = .........   ८. मंदिरम् = ..........
९. अंकः = .........   १०. मंचः = ..........

३. *अधोनिर्दिष्टेषु रूपेषु परसवर्णः नित्यः उत विकल्पेन इति लिखत -*

| उदा - अञ्चति → नित्यः, सङ्ख्या → विकल्पेन |
|---|

१. शम्भुः →..........   २. शङ्करः →..........
३. शङ्का →..........   ४. सम्भवः →..........
५. सञ्चयः →..........   ६. बन्धः →..........

७. आतङ्कः → .......... ८. टङ्कारः → ..........

९. पुँल्लिङ्गः → .......... १०. अलङ्कृतिः → ..........

४. *अधोनिर्दिष्टेषु शब्देषु यत्र द्वित्वं लेखनीयं तत्र द्वित्वं लिखत ।*

उदा - तत्वम् → तत्त्वम्

१. विपत्यर्थम् → ☐  २. बुध्यादयः → ☐

३. कार्तिकमासः ☐  ४. भित्वा → ☐

५. श्रुत्वा → ☐  ६. प्रज्वाल्य → ☐

७. प्रभुत्वम् → ☐  ८. सत्वम् → ☐

९. वृध्या → ☐  १०. परिध्यादयः → ☐

५. *पठधातोः रूपाणि दृष्ट्वा तत्सदृशानि अधोनिर्दिष्टधातूनां रूपाणि लिखत ।*

| पठ् | श्रु |
|---|---|
| १. पठति | ............ |
| २. अपठत् | ............ |
| ३. पठेत् | ............ |
| ४. पठ | ............ |
| ५. पठन् | ............ |
| ६. पठित्वा | ............ |
| ७. पठितवान् | ............ |

| पठ् | प्रच्छ |
|---|---|
| ८. पठितव्यम् | ............... |
| ९. पठनीयम् | ............... |
| १०. पठतु | ............... |
| ११. पठनम् | ............... |

| पठ् | ग्रह |
|---|---|
| १२. पठितुम् | .............. |
| १३. पठन् | .............. |
| १४. पठितव्यम् | .............. |
| १५. पठितवान् | .............. |
| १६. पठिष्यति | .............. |

| पठ् | जागृ |
|---|---|
| १७. पठितवान् | ............ |
| १८. पाठितवान् | ............ |
| १९. पठत | ............ |
| २०. पठन्ति | ............ |
| २१. पठन् | ............ |
| २२. पठति | ............ |

६. *अनयोः शुद्धरूपस्य पुरतः '✔' चिह्नम् अङ्कयत -*

| उदा - ग्यानम् ☐ | ज्ञानम् ☑ |
|---|---|

| | | |
|---|---|---|
| १. | कठिणम् ☐ | कठिनम् ☐ |
| २. | निश्वासः ☐ | निश्श्वासः ☐ |
| ३. | उछ्वासः ☐ | उच्छ्वासः ☐ |
| ४. | प्रभोधनम् ☐ | प्रबोधनम् ☐ |
| ५. | सङ्गठनम् ☐ | सङ्घठनम् ☐ |
| ६. | श्मशानम् ☐ | स्मशानम् ☐ |
| ७. | मण्डपः ☐ | मण्टपः ☐ |
| ८. | उच्छिष्टम् ☐ | उच्चिष्टम् ☐ |
| ९. | जञ्झावातः ☐ | झञ्झावातः ☐ |
| १०. | साम्राट् ☐ | सम्राट् ☐ |
| ११. | पुंल्लिङ्गः ☐ | पुंलिङ्गः ☐ |

७. *अधोनिर्दिष्टानां प्रातिपदिकानां लिङ्गं निर्दिश्य शुद्धं रूपम् अपि लिखत-*

| उदा - दोष | → | पुंलिङ्गः | --- | दोषः |
|---|---|---|---|---|
| १. व्यक्ति | → | ......... | --- | ......... |
| २. सेतु | → | ......... | --- | ......... |
| ३. कार्यागार | → | ........ | --- | ......... |
| ४. महिमा | → | ......... | --- | ......... |
| ५. सीमा | → | ........ | --- | ......... |
| ६. आभाणक | → | ........ | --- | ......... |
| ७. सरोवर | → | ......... | --- | ......... |
| ८. अहोरात्र | → | ........ | --- | ......... |
| ९. सन्तोषास्पद | → | ......... | --- | ......... |
| १०. चतुष्पथ | → | ........ | --- | ......... |

८. *अधोनिर्दिष्टेषु वाक्येषु रेखाङ्कितानां पदानां वचनदोषं परिहरत -*

१. सः अक्षतेन ............ देवपूजां करोति ।

२. वर्षायां ............... बालाः क्रीडन्ति ।

३. राक्षसः ऋषेः प्राणम् .............. अहरत् ।

४. अहं कर्णेन ................ गीतं श्रृणोमि ।

५. आचार्यचरणात् ................ मया एतत् अधीतम् ।

६. कार्यक्रमे दम्पती आगता ............. आसीत् ...........।

९. *अधोनिर्दिष्टानां शब्दानां स्त्रीलिङ्गरूपाणि लिखत -*

उदा - अध्यापकः → अध्यापिका

| | |
|---|---|
| १. लेखकः ☐ | २. सिंहः ☐ |
| ३. सुन्दरः ☐ | ४. पुरातनः ☐ |
| ५. आधुनिकः ☐ | ६. प्राचीनः ☐ |
| ७. सहोदरः ☐ | ८. पिशाचः ☐ |
| ९. युवकः ☐ | १०. पावनः ☐ |

१०. *अधोनिर्दिष्टेषु अशुद्धं रूपम् अधोरेखया अङ्कयत -*

| उदा - अ) वैशिट्यम् | आ) वैशिष्ट्यता | इ) विशिष्टता |
|---|---|---|

| | | |
|---|---|---|
| १. अ) साफल्यम् | आ) सफलता | इ) साफल्यता |
| २. अ) ऐक्यता | आ) ऐक्यम् | इ) एकत्वम् |
| ३. अ) मौर्ख्यम् | आ) मौर्ख्यत्वम् | इ) मूर्खत्वम् |
| ४. अ) प्रामाण्यम् | आ) प्रामाण्यत्वम् | इ) प्रमाणत्वम् |
| ५. अ) शौर्यता | आ) शूरता | इ) शौर्यम् |
| ६. अ) धीरता | आ) धीरतात्वम् | इ) धीरत्वम् |

११. *विवरणानुगुणतया अखण्डम् एकं पदं लिखत -*

उदा - पश्चिमदेशे भवाः - पाश्चात्त्याः

१. ये आगतवन्तः तेभ्यः = ..................
२. राष्ट्रे भवः = ........................
३. तस्मात् प्रदेशात् = .....................
४. सभायां साधुः = ........................
५. यः साहाय्यं करोति सः = ..................
६. यः पृच्छति सः = ...........................
७. औदार्यं यस्य अस्ति सः = .....................
८. यः वितरति सः = ....................
९. यः हननं करोति सः = .......................
१०. उत्तरे भवाः = ......................

**१२.** *आवरणस्थस्य पदस्य उचितं विभक्तिरूपं रिक्तस्थाने लिखत -*

| उदा - त्वया (शर्मा) शर्मणा इव पण्डितेन भवितव्यम् । |
|---|

१. अहम् आचार्यस्य (आशीः) .......... प्रार्थये ।
२. तेन ग्रामे कानिचन दिनानि (उषित) .......... ।
३. अत्र अव्यवस्थायाः (लेशमात्र) ......... अपि न अवकाशः ।
४. सः तं (पण्डित) ......... भावयति । सः तं (पण्डित) ....... इति भावयति ।
५. त्वं (बाल) ........ अन्नं खादय ।
६. दुष्टशक्तीनां (नाश) ......... अवश्यं भाव्यम् ।
७. चित्रकारः (मित्र) .......... चित्रं दर्शयति ।
८. (कतिचित्) .......... दिनेषु तेन धनिकत्वं प्राप्तम् ।

**१३.** *युक्तं चतुर्थं पदं लिखत -*

| उदा - प्रति + जयति = प्रतिजयति, वि + जयति = विजयते |
|---|

१. उत् + तिष्ठति = उत्तिष्ठति, प्र + तिष्ठति = ............
२. उप + क्रीणाति = उपक्रीणाति, वि + क्रीणाति = .........

३. प्रति + जयति = प्रतिजयति, परा + जयति = .............
४. परि + पृच्छामि = परिपृच्छामि, आ + पृच्छामि = .........
५. वन्दते → अवन्दिष्यत, लभते ..........................
६. पठति → पठिष्यति, मिलति ..........................
७. गच्छति → गमिष्यति, लिखति ..........................
८. वन्दते → वन्दिष्यते, म्रियते ..........................
९. ददाति → दापयति, बिभेति ..............................
१०. करोति → क्रियते, आश्रयति ...........................

१४. *अखण्डानि क्रियापदानि लिखत -*

| यथा - परिशीलनं करोति = <u>परिशीलयति</u> |
|---|

१. अन्वेषणं करोति = .......................
२. आरम्भं करोति = .......................
३. उपयोगं करोति = .......................
४. परिश्रमं करोति = .......................
५. पिधानं करोति = .......................
६. विक्रयणं करोति = .......................
७. आशीर्वादं करोति = .......................
८. अभ्यासं करोति = .......................
९. अवलोकनं करोति = .......................
१०. युद्धं करोति = .......................
११. आघ्राणं करोति = .......................
१२. निश्चयं करोति = .......................
१३. निर्माणं करोति = .......................
१४. परीक्षां करोति = .......................
१५. प्रयत्नं करोति = .......................
१६. स्तुतिं करोति = .......................
१७. प्रशंसां करोति = .......................
१८. स्नेहं करोति = .......................

१९. परिवेषणं करोति = ......................

२०. वञ्चनां करोति = ......................

२१. उड्डयनं करोति = ......................

२२. प्रस्थानं करोति = ......................

२३. स्नानं करोति = ......................

२४. मन्थनं करोति = ......................

२५. दंशनं करोति = ......................

**१५.** *भूतकृदन्तरूपाणि लिखत -*

| यथा - नयति = नीतवान् |
|---|

१. आकर्षति - ............ २. उपन्यस्यति - ..............

३. इच्छति - .............. ४. विकिरति - ..............

५. अतिक्रामति - ...........६. क्षाम्यति - ..............

७. खनति - .............. ८. गिलति - ..............

९. चिनोति - ............ १०. छिनत्ति - ..............

११. जपति - ............ १२. जागर्ति - ..............

१३. जिघ्रति - ............ १४. तरति - ..............

१५. दधाति - ............ १६. दशति - ..............

१७. नमति - ............ १८. नुदति - ..............

१९. नृत्यति - ............ २०. बध्नाति - ..............

२१. पचति - ............ २२. प्रयतते - ..............

२३. वसति -............ २४. विश्वसिति - ..............

२५. सहते - ............ २६. आह्वयति - ..............

२७. सिञ्चति - ............ २८. निद्राति - ..............

**१६.** *अधोनिर्दिष्टानां क्रियापदानां शुद्धं तुमुन्नन्तरूपम् अधोरेखया अङ्कयत -*

| यथा - उत्तिष्ठति - १) उत्थिष्ठितुम् २) उत्थातुम् ३) उत्थितुम् |
|---|

१. उपन्यस्यति -१) उपन्यस्तुम् २) उपन्यसितुम् ३) उपन्यासितुम् ।
२. इच्छति - १) इच्छितुम् २) एच्छितुम् ३) एष्टुम् ।
३. आकर्षति - १) आक्रष्टुम् २) आकर्ष्टुम् ३) आकर्षितुम् ।
४. गिलति - १) गिलितुम् २) गलितुम् ३) गीर्णितुम् ।
५. चिनोति - १) चिनोतुम् २) चयितुम् ३) चेतुम् ।
६. तरति - १) तरितुम् २) तर्तुम् ३) तर्तितुम् ।
७. दशति - १) दंष्टुम् २) दष्टुम् ३) दशितुम् ।
८. सन्तुष्यति - १) सन्तुष्यितुम् २) सन्तोष्टुम् ३) सन्तोषितुम् ।
९. गृह्णाति - १) ग्रहीतुम् २) गृह्णीतुम् ३) गृहीतुम् ।
१०. पृच्छति - १) प्रष्टुम् २) पृष्टुम् ३) पृच्छितुम् ।
११. मिलति - १) मिलितुम् २) मेलितुम् ३) मिलेतुम् ।
१२. प्रयतते - १) प्रयतितुम् २) प्रयत्तुम् ३) प्रयत्तितुम् ।
१३. वसति - १) वसितुम् २) उषितुम् ३) वस्तुम् ।
१४. स्पृशति - १) स्प्रष्टुम् २) स्पर्शितुम् ३) स्पृष्टुम् ।
१५. बध्नाति - १) बध्नातुम् २) बद्धुम् ३) बन्द्धुम् ।
१६. सृजति - १) सृजितुम् २) सृष्टुम् ३) स्रष्टुम् ।
१७. आह्वयति -१) आह्वयितुम् २) आह्वातुम् ३) आह्वानितुम् ।
१८. निर्वहति - १) निर्वोढुम् २) निर्वहितुम् ३) निरूढुम् ।
१९. विमृशति -१) विमर्शितुम् २) विम्रष्टुम् ३) विमृष्टुम् ।
२०. जपति - १) जप्तुम् २) जपितुम् ३) जंप्तुम् ।
२१. जिघ्रति - १) जिघ्रितुम् २) घ्राणितुम् ३) घ्रातुम् ।
२२. भक्षयति - १) भक्षितुम् २) भक्षयितुम् ३) भक्षीतुम् ।
२३. शेते - १) शयितुम् २) शेतुम् ३) शय्यितुम् ।
२४. विवृणोति -१) विवृणोतुम् २) विवरीतुम् ३) विवृतुम् ।
२५. भिनत्ति - १) भेदितुम् २) भेत्तुम् ३) भन्तुम् ।

**१७.** *अधोनिर्दिष्टानां पदानां योजनेन समस्तं पदं लिखत -*

| उदा - षट् + अधिकेषु - षडधिकेषु |
|---|

१. विराट् + रूपम् = ................................
२. विराट् + स्वरूपम् = ................................
३. मृत् + मयम् = ................................
४. न + पठित्वा = ................................
५. शास्त्री + वर्यः = ................................
६. वाजपेयी + महोदयः = ................................
७. शास्त्री + कक्ष्या = ................................
८. महिम्नः + वर्णनम् = ........................
९. रात्रेः + मध्यम् = ........................
१०. महान् + उपकारः = ........................
११. शास्त्री + छात्रः = ........................
१२. अस्माकं + राजा = ........................
१३. पिता + पुत्रः च = ........................
१४. गोविन्दः इति नाम यस्य सः = ........................
१५. दृष्टा पत्नी येन सः = ........................
१६. क्रीता शय्या येन सः = ........................
१७. व्याख्याता + रूपेण = ........................
१८. मार्गस्य + मध्ये = ........................
१९. अर्शः + व्याधिः = ........................
२०. महामनाः + मालवीयस्य = ........................
२१. द्वौ वा त्रयः वा = ........................
२२. पञ्च वा षट् वा = ........................
२३. शतस्य अब्दानां समाहारः = ........................
२४. विंशतेः समीपे ये सन्ति ते = ........................
२५. अशीतेः समीपे ये सन्ति ते =........................

**१८.** *अधोनिर्दिष्टेषु यत् शुद्धं तस्य पुरतः '✓' चिह्नम् अङ्कयत -*

| उदा - विंशतिः जनैः ☐ विशंत्या जनैः ☑ विंशतिभिः जनैः ☐ |
|---|

१. (अ) शते जनेषु ☐ (आ) शतं जनेषु ☐ (इ) शतेषु जनेषु ☐

२. (अ) शतं सन्ति ☐ (आ) शतं स्तः ☐ (इ) शतानि सन्ति ☐
३. (अ) पञ्च अस्ति ☐ (आ) पञ्च स्तः ☐ (इ) पञ्च सन्ति ☐
४. (अ) पञ्चदशतमे ☐ (आ) पञ्चदशे ☐ (इ) पञ्चे ☐
५. (अ) विंशतितमा ☐ (आ) विंशतितमी ☐ (इ) विंशतितम्या ☐
६. (अ) षष्ट्यब्दिः ☐ (आ) षष्ट्यब्दः ☐ (इ) षष्ट्याब्दः ☐
७. (अ) चतुःपञ्चेषु ☐ (आ) चतुःपञ्चे ☐ (इ) चतुःपञ्चसु ☐
८. (अ) परस्सहस्राः ☐ (आ) परस्सहस्रम् ☐ (इ) परस्साहस्री ☐
९. (अ) उपचत्वारिंशः ☐ (आ) उपचत्वारिंशाः ☐
(इ) उपचत्वारिंशत् ☐
१०. (अ) कतिसमये ☐ (आ) कतिवादने ☐ (इ) कदा ☐

**११.** अधोलिखितानां वाक्यानाम् आशयः युक्तः उत अयुक्तः इति लिखत -

| उदा - व्याधिशब्दः स्त्रीलिङ्गः । (अशुद्धम् ) |
|---|

१. वृक्षवाची नंपुसकलिङ्गः, फलवाची पुंलिङ्गः । (............)
२. पुरुषव्याघ्रः इत्यत्र व्याघ्रशब्दः पशुवाची न । (................)
३. पुङ्गवशब्दः समासे एव श्रेष्ठार्थकतां द्योतयति । (............)
४. 'ते आत्मनः दोषं ज्ञातवन्तः' इत्यत्र आत्मशब्दस्य एकवचन-प्रयोगः न दोषाय । (..............)
५. 'सुमङ्गला' इति अविधवाविषये प्रयोगः साधुः । (...........)
६. जागृधातोः क्तिन्नन्तं रूपं नास्ति । (..............)
७. अर्धशब्दः विशेषणत्वेन प्रयोक्तुं न शक्यः । (..............)
८. 'आवश्यकता' इति रूपम् असाधु । (................)
९. 'परिवेषयति' इत्यत्र स्वार्थे णिच् आश्रितः । (...............)
१०. विंशत्याद्याः सङ्ख्येयार्थे बहुवचनम् अपि अर्हन्ति । (.........)
११. शतशब्दः इव परश्शतशब्दः अपि नपुंसके । (...............)
१२. 'स्वागतं करोति' इत्यत्र करोतेः 'कृतिः' इति अर्थः । (........)
१३. आर्षप्रयोगाणाम् असाधुता उक्ता शास्त्रे । (...............)
१४. 'प्रत्येकस्मिन्' इत्येतत् रूपम् असाधु । (...............)

१५. 'यल्लिङ्गं यद्वचनम्...' इत्येषः नियमः नियतलिङ्गस्थले अपि भवति एव । (................)

२०. *अधोनिर्दिष्टानां शब्दानाम् अर्थं लिखत* -

| उदा - सुदामा - यः सुष्ठु ददाति सः |
|---|

१. सुमतिः = ................................

२. धानाः = ................................

३. नर्तकी = ................................

४. अर्धम् = ................................

५. प्रान्तीयभाषा = ........................

६. परिजनाः = ..........................

७. उच्चरति = ............................

८. शताब्दी = ..........................

९. दूरवाणीं करोति = ........................

१०. दशाः = ...........................

# उत्तराणि

०१. १. विद्याम् इच्छामि । २. गृहम् आगत्य ३. कथाम् ऊहित्वा ४. नगरम् एत्य ५. वाक्यम् उक्तम् ६. चित्रम् अपश्यम् ७. रामाभ्याम् ८. उत्तमम् औषधम् ९. स्वागतम् अस्ति १०. उक्तम् इदम् उत्तरम् अशुद्धम् ।

०२. १. अम्बरः २. अन्धः ३. अभ्यञ्जनम् ४. अङ्गम् ५. सण्डः ६. शुण्ठी ७. कम्पते ८. मन्दिरम् ९. अङ्कः १०. मञ्चः

०३. १. विकल्पेन २. विकल्पेन ३. नित्यः ४. विकल्पेन ५. विकल्पेन ६. नित्यः ७. नित्यः ८. विकल्पेन ९. विकल्पेन १०. विकल्पेन

०४. १. विपत्त्यर्थम् २. बुद्ध्यादयः ३. कार्त्तिकमासः ४. भित्त्वा ५. श्रुत्वा ६. प्रज्वाल्य ७. प्रभुत्वम् ८. सत्त्वम् ९. वृद्ध्या १०. परिध्यादयः

०५. १. शृणोति २. अशृणोत् ३. शृणुयात् ४. शृणु ५. शृण्वन् ६. श्रुत्वा ७. श्रुतवान् ८. प्रष्टव्यम् ९. प्रच्छनीयम् १०. पृच्छतु ११. प्रच्छनम् १२. ग्रहीतुम् १३. गृह्णन् १४. ग्रहीतव्यम् १५. गृहीतवान् १६. ग्रहीष्यति १७. जागरितवान् १८. जागरितवान् १९. जागृत २०. जाग्रति २१. जाग्रत् २२. जागर्ति

०६. १. कठिनम् ✔ २. निश्श्वासः ✔ ३. उच्छ्वासः ✔ ४. प्रबोधनम् ✔ ५. सङ्गठनम् ✔ ६. श्मशानम् ✔ ७. मण्डपः ✔ ८. उच्छिष्टम् ✔ ९. झञ्झावातः ✔ १०. सम्राट् ✔ ११. पुंलिङ्गः ✔

०७. १. स्त्रीलिङ्गः - व्यक्तिः २. पुंलिङ्गः - सेतुः ३. नपुंसकः - कार्यागारम् ४. पुंलिङ्गः - महिमा ५. स्त्रीलिङ्गः - सीमा ६. पुंलिङ्गः - आभाणकः ७. पुंलिङ्गः - सरोवरः ८. पुंलिङ्गः - अहोरात्रः ९. नपुंसकः - सन्तोषास्पदम् १०. नपुंसकः - चतुष्पथम् ।

०८. १. अक्षतैः २. वर्षासु ३. प्राणान् ४. कर्णाभ्याम् ५. आचार्यचरणेभ्यः ६. आगतौ आस्ताम् ।

०९. १. लेखिका २. सिंही ३. सुन्दरी ४. पुरातनी ५. आधुनिकी ६. प्राचीना ७. सहोदरा ८. पिशाची ९. युवतिः १०. पावनी

१०. १. साफल्यता २. ऐक्यता ३. मौर्ख्यत्वम् ४. प्रामाण्यत्वम् ५. शौर्यता ६. धीरतात्वम्

११. १. आगतवद्भ्यः २. राष्ट्रियः ३. ततः ४. सभ्यः ५. सहायकः ६. प्रच्छकः ७. उदारः ८. वितारकः ९. घातकः / हन्ता १०. औत्तराहाः

१२. १. आशिषम् २. उषितम् ३. लेशमात्रेण ४. पण्डितम्, पण्डितः ५. बालेन ६. नाशेन ७. मित्रं/मित्राय ८. कतिषुचित्

१३. १. प्रतिष्ठते २. विक्रीणीते, ३. पराजयते, ४. आपृच्छे ५. अलप्स्यत ६. मेलिष्यति ७. लेखिष्यति ८. भाययति ९. मरिष्यति १०. आश्रीयते

१४. १. 'अन्विष्यति २. आरभते ३. उपयुङ्क्ते ४. परिश्राम्यति ५. पिदधाति / पिधत्ते ६. विक्रीणीते ७. आशीर्वादं करोति ८. अभ्यस्यति ९. अवलोकते १०. युध्यते ११. आजिघ्रति १२. निश्चिनोति १३. निर्माति १४. परीक्षते १५. प्रयतते १६. स्तौति १७. प्रशंसति १८. स्निह्यति १९. परिवेवेष्टि/ परिवेषयति २०. वञ्चयते २१. उड्डयते २२. प्रतिष्ठते २३. स्नाति २४. मथ्नाति/मन्थति २५. दंशति / दशति

१५. १. आकृष्टवान् २. उपन्यस्तवान् ३. इष्टवान् ४. विकीर्णवान् ५. अतिक्रान्तवान् ६. क्षान्तवान् ७. खातवान् ८. गीर्णवान् ९. चितवान् १०. छिन्नवान् ११. जपितवान् १२. जागरितवान् १३. आघ्रातवान् १४. तीर्णवान् १५. (नि)हितवान् १६. दष्टवान् १७. नतवान् १८. नुन्नवान् १९. नृत्तवान् २०. बद्धवान् २१. पक्वान् २२. प्रयत्तवान् २३. उषितवान् २४. विश्वसितवान् २५. सोढवान् २६. आहूतवान् २७. सिक्तवान् २८. निद्राणवान् ।

१६. १. (३) उपन्यसितुम् २. (३) एष्टुम् ३. (१) आक्रष्टुम् ४. (२) गलितुम् ५. (३) चेतुम् ६. (१) तरितुम् ७. (१) दंष्टुम् ८. (२) सन्तोष्टुम् ९. (१) ग्रहीतुम् १०. (१) प्रष्टुम् ११. (२) मेलितुम् १२. (१) प्रयतितुम् १३. (३) वस्तुम् १४. (२) स्रष्टुम् १५. (३) बन्धुम् १६. (३) स्त्रष्टुम् १७. (२) आह्वातुम् १८. (१) निर्वोढुम् १९. (२) विम्रष्टुम् २०. (२) जपितुम् २१. (३) घ्रातुम् २२. (२) भक्षयितुम् २३. (२) शेतुम् २४. (२) विवरीतुम् २५. (२) भेत्तुम् ।

१७. १. विराड्रूपम् २. विराट्स्वरूपम् ३. मृन्मयम् ४. अपठित्वा ५. शास्त्रिवर्यः ६. वाजपेयिमहोदयः ७. शास्त्रिकक्ष्या ८. महिमवर्णनम् ९. मध्यरात्रः १०. महोपकारः ११. शास्त्रिच्छात्रः १२. अस्मद्राजः १३. पितापुत्रौ १४. गोविन्दनामा / गोविन्दनामकः १५. दृष्टपत्नीकः १६. क्रीतशय्यकः / क्रीतशय्याकः / क्रीतशय्यः १७. व्याख्यातृरूपेण १८. मध्येमार्गम् १९. अर्शोव्याधिः २०. महामनोमालवीयस्य २१. द्वित्राः २२. पञ्चषाः २३. शताब्दी २४. उपविंशाः २५. उपाशीताः

१८. १. (अ) शते जनेषु २. (इ) पञ्च सन्ति ३. (अ) शतं सन्ति । ४. (आ) पञ्चदशे ५. (आ) विंशतितमी ६. (आ) षष्ट्यब्दः ७. (अ) चतुःपञ्चेषु ८. (अ) परस्सहस्राः ९. (आ) उपचत्वारिंशाः १०. (इ) कदा

१९. १. अशुद्धम् २. शुद्धम् ३. शुद्धम् ४. शुद्धम् ५. शुद्धम् ६. शुद्धम् ७. अशुद्धम् ८. अशुद्धम् ९. शुद्धम् १०. अशुद्धम् ११. अशुद्धम् १२. अशुद्धम् १३. अशुद्धम् १४. अशुद्धम् १५. अशुद्धम्

२०. १. शोभना मतिः यस्य सः । २. भृष्टः यवः । ३. नर्तनकौशलसहिता । ४. समांशद्योतकः । ५. सीमाप्रदेशीया भाषा । ६. सेवकादयः । ७. उद्गच्छति / निर्गच्छति । ८. शतस्य अब्दानां समाहारः । ९. दूरवाणीयन्त्रं प्रवर्तयति । १०. दशाः - वस्त्रान्तभागः ।

## अधिकाभ्यासाय...

- सन्धिः
- समासः
- कारकम्
- भाषापाकः
- णत्वणिजन्तम्
- इड्व्यवस्था
- शतृशानजन्तमञ्जरी
- विभक्तिवल्लरी
- कालबोधिनी

Rs. 70.00

ISBN 978-81-88220-45-0